# अजिता

श्रीपरितोषमिश्रविरचिता

## तन्त्रवार्त्तिकटीका

द्वितीयो भागः

# अजिता

श्रीपरितोषमिश्रप्रणीता तन्त्रवार्त्तिकव्याख्या

सा च—

डा० किशोरनाथ झा

डा० कमलनयन शर्मा • सुश्री अर्चना चतुर्वेदी

इत्येतैः सविमर्शं संशोध्य संपादिता

॥ तस्याश्चायं द्वितीयो भागः ॥




प्रयागस्थ—

श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठेन

प्रकाशिता

१९९० ई०

Rashtriya Sanskrit Sansthan
( Under the auspices of the Ministry of Human Resources Development, Govt. of India )
New Delhi

Ganganatha Jha
Kendriya Sanskrit Vidyapitha
TEXT SERIES

*General Editor*
Dr. G. C. Tripathi

No. 24

# AJITĀ (Part II)

*by*

**Paritosh Mishra**

*A Commentary on*
the Tantravārttika of Kumārila

*Edited by*

Dr. Kishore Nath Jha
Dr. Kamal Nayan Sharma • Km. Archana Chaturvedi




ALLAHABAD
1990

राष्ट्रियसंस्कृतसंस्थानम्

( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )

देहली

—०—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

डॉ० गयाचरण त्रिपाठी

—०—

चतुर्विंशं प्रसूनम्

# अजिता

श्रीपरितोषमिश्रप्रणीता तन्त्रवार्त्तिकव्याख्या

॥ द्वितीयो भागः ॥

सम्पादकाः

डॉ० किशोरनाथ झा

डॉ० कमलनयन शर्मा • सुश्री अर्चना चतुर्वेदी

—०—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयागः–२

१९९० ई०

# विषयसूची

विषयाः | पृष्ठसंख्याः


| विषयाः | पृष्ठसंख्याः |
| --- | --- |
| द्वितीयाध्यायस्य प्रथमः पादः | १—१२३ |
| भावार्थाधिकरणम् | १—३५ |
| अपूर्वाधिकरणम् | ३५—६० |
| तानिद्वैधाधिकरणम् | ६०—६४ |
| सम्मार्गाधिकरणम् | ६४ ७४ |
| स्तुतशस्त्राधिकरणम् | ७४—८३ |
| मन्त्रविधायकत्वाधिकरणम् | ८३—८६ |
| मन्त्रलक्षणाधिकरणम् | ८७—८८ |
| ब्राह्मणलक्षणाधिकरणम् | ८८—० |
| ऊहादीनाममन्त्रताधिकरणम् | ८८—१०२ |
| ऋग्लक्षणाधिकरणम् | १०२—० |
| सामलक्षणाधिकरणम् | १०२—१०३ |
| यजुर्लक्षणाधिकरणम् | १०३—० |
| निगदाधिकरणम् | १०३—१०४ |
| यजुः परिमाणाधिकरणम् | १०४—१११ |
| वाक्यभेदाधिकरणम् | ११२—११५ |
| अनुषङ्गाधिकरणम् | ११५—१२२ |
| व्यवेताननुषङ्गाधिकरणम् | १२२—१२३ |
| द्वितीयाध्यायस्य द्वितीयः पादः | १२४—२५८ |
| शब्दान्तराधिकरणम् | १२४—१३४ |
| अभ्यासाधिकरणम् | १३४—१४२ |
| पौर्णमास्यधिकरणम् | १४३—१६३ |
| उपांशुयाजाधिकरणम् | १६३—१७१ |

| विषयाः | पृष्ठसंख्याः |
|---|---|
| आघाराग्निहोत्राधिकरणम् | १७२—१८८ |
| पशुसोमाधिकरणम् | १८८—२०१ |
| संख्याधिकरणम् | २०१—२०८ |
| संज्ञाधिकरणम् | २०८—२११ |
| गुणाधिकरणम् | २१२—२२१ |
| गुणप्रत्युदाहरणाधिकरणम् | २२१—० |
| इन्द्रियकामाधिकरणम् | २२१—२३६ |
| रेवत्यधिकरणम् | २३६ - २५० |
| सौभराधिकरणम् | २५०—२५८ |
| **द्वितीयाध्यायस्य तृतीयः पादः** | **२५९—३१३** |
| रथन्तराधिकरणम् | २५९—२६८ |
| अवेष्ट्यधिकरणम् | २६९—२८० |
| विशिष्टाधानविधेयत्वाधिकरणम् | २८१—२८५ |
| दाक्षायणयज्ञाधिकरणम् | २८५—२८७ |
| द्रव्यदेवतासंयोगे यागविधायकत्वाधिकरणम् | २८७—२९१ |
| द्रव्यदेवतासंयोगाभावे यागाविधायकत्वाधिकरणम् | २९१—२९२ |
| चरोरुपधानार्थताधिकरणम् | २९२ - २९४ |
| पात्नीवताधिकरणम् | २९४—२९६ |
| अंशवदाभ्यग्रहयोर्ज्योतिष्टोमाधिकरणम् | २९६—२९७ |
| चयनस्याग्निसंस्कारत्वाधिकरणम् | २९७—३०१ |
| प्रकरणान्तराधिकरणम् | ३०१—३०७ |
| फलसंस्कार्ययोः कर्मभेदकत्वाधिकरणम् | ३०७—३०८ |
| सन्निधौ फलादेः कर्मभेदकत्वाभावाधिकरणम् | ३०९—३१० |
| आग्नेय पुनः श्रुतेः स्तुत्यर्थताधिकरणम् | ३११—३१३ |
| **द्वितीयाध्यायस्य चतुर्थः पादः** | **३१४—३३४** |
| यावज्जीवाधिकरणम् | ३१४—३२३ |
| शाखान्तराधिकरणम् | ३२३ — ३:५ |

# अवतरणम्

पराम्बायाः प्रसादानुग्रहाभ्यां, मीमांसकमूर्धन्येन परितोषमिश्रेण प्रणीतया 'जितया' समृद्धस्य तन्त्रवार्त्तिकस्य द्वितीयाध्यायात्मकं द्वितीयं भागं यथामति परिशोध्य विदुषां समक्षं प्रस्तुवतामस्माकं मनसि महानानन्दः परितोषश्च सञ्जायेते ।

वर्षद्वयात् प्रागेवास्या अजितायाः प्रथमो भागः प्रकाशतामगमत् सुधीभिः समादृतश्चेति सौभाग्यमस्माकमिति मन्ये । प्रसिद्धपाण्डित्याः डा० विश्वनारायणशास्त्री असमप्रान्ततः, प्रो० श्री अनन्तलाल ठाकुर महाभागः वङ्ग प्रान्ततः, डा० एन. एस. रामानुजताताचार्यः तिरुपति क्षेत्रतः, डा० मुरलीधर पाण्डेयः वाराणसीतश्च सम्पादकप्रकाशकौ प्रति लिखिताः शुभासंशा एतदर्थं प्रेषयामासुरिति स्वकीयं श्रमं वयं सफलं मन्यामहे । तान् विद्वद्वरेण्यान् प्रति कृतवेदितां च विनिवेदयामः । नास्माकमात्मगुणोऽत्र प्रभवति किन्तु भगवतो विश्वेश्वरस्यानुग्रहा दिव्यविभूतेर्महात्मनः म० म० डा० सर गङ्गानाथ झा महाभागस्य च शुभाशीर्वादा एवात्र निमित्तं विद्यते ।

'सिद्ध्यन्ति महत्स्वपि कर्मसु यन्नियोज्याः ।
सम्भावनागुणमवेहि तमीश्वराणाम् ।' इति

महाकवेः कालिदासस्य वचः शरणमिहास्माकम् । उत्तर प्रदेश संस्कृत अकादमी संस्थाया लखनउ स्थितताया अपि कृतज्ञाः वयम्, यया विविधपुरस्कारान्तर्गतेनेयमपि रूप्यकसहस्रद्वयमितेन पुरस्कारेण सम्मानिता ।

प्रथमभागस्यास्याः प्रस्तावनायां मातृकास्तन्त्रवार्त्तिकटीकाः शास्त्र परम्पराश्चाधिकृत्य यथामति तदुक्तं यद्विवक्षितमासीत्। अत्र पुनः द्वादश लक्षण्या अस्या मीमांसाया विवेच्यविषयपरिचयः यथामति संक्षेपेण प्रस्तूयते।

मीमांसा द्वादशलक्षणी [द्वादशाध्यायात्मिका] षोडशलक्षणी [षोडशा ध्यायात्मिका] वेति विचिकित्साहेतुः द्वादशाध्यायगतान्तिमसूत्रस्य तत्रावृत्त्या पाठः। सूत्रावृत्तिः समाप्तिं सूचयतीति वेदान्तसूत्रेषु दृष्टम्। अत एवा-त्रापि तथा कल्पितम्। अन्यथा किं प्रयोजनिका तत्रान्तिमसूत्रावृत्तिरिति जिज्ञासाया असमाहितत्वात्। किञ्च प्रायः वाक्यार्थनिर्णयोपयोगिनो विषया अपि द्वादशाध्यायान्तर्गता एव समुपलक्ष्यन्ते। सङ्कर्षकाण्डात्मकेषु चतुर्ष्वध्यायेषु क्वचिद्वेदवाक्येषु प्रागविचारितैर्न्यायैरनिर्णेयार्थतामालक्ष्य तन्निर्णयोपयोगिनो न्याया निरूपिताः। अत्र व्यवस्थितक्रमो नास्ति किन्तु सङ्कीर्णाः सन्ति विषया इति हेतोः संकर्ष इति नाम।

अत्र चतुश्चत्वारिंशदधिकसप्तशतोत्तराणि द्विसहस्रमितानि सूत्राणि विद्यन्ते। प्रत्यध्यायं चत्वारः सन्ति पादाः कदाचिदष्टावपि पादा भवन्त्यध्याये। स हि शरभपादनाम्ना प्रसिद्धत्यध्यायः। यतो हि शरभनाम्नः पक्षि-विशेषस्याष्टौ भवन्ति पादाः। प्रत्येकं पादः पुनरधिकरणेषु विभक्तोऽस्ति। विवादविषयस्तावदिहाधिकरणपदवाच्यतां याति। विवादस्य निर्णयाय पञ्चाङ्गानि प्रक्रियात्वेनात्र निर्धारितानि सन्ति—सङ्गतिः, विषयः, संशयः, पूर्वपक्षः सिद्धान्तश्चेति।

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्।

इति पद्यं प्रसिद्धमेव।

माधवस्य जैमिनीयन्यायमाला, मण्डनमिश्रस्य मीमांसानुक्रमणिका चाधिकरणपादाध्यायानामवगत्यै नितरामुपकुरुतः। अत्रैवाभिहितम्—

धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाणभेदशेषत्वप्रयुक्तिक्रमसंज्ञकाः ॥

अधिकारोऽतिदेशश्च सामान्येन विशेषतः ।
ऊहो बाधश्च तन्त्रश्च प्रसङ्गश्चोदितः क्रमात् ।।

अत्र द्वादशलक्षण्या मीमांसया धर्मः लक्षणैः व्युत्पाद्य इत्युक्तम् । अत एव को धर्मः, किं लक्षणोऽसौ, कान्यस्य साधनानीति जायते जिज्ञासा । लक्षणैर्व्युत्पाद्य इत्यस्य तात्पर्यं तु लघुनोपायेन विषयाववोधः उपायान्तरेण न सम्भवति । येन विषयस्य यथार्थं स्वरूपमवगम्यते तल्लक्षणं भवति, इतर व्यावर्तकधर्मवत्वं हि लक्षणस्य लक्षणम् ।

मन्ये द्विसहस्रमितेषु स्थलेषु तदानीं विवाद आसीत् । अत एव द्विसहस्राण्यधिकरणानि प्रसिद्धपाण्डित्येन माधवेन जैमिनीयन्यायमालायामुद्दिष्टानि विद्यन्ते ।

पुराकाले प्रायः गुरुपरम्परातः परिज्ञातकर्मकाण्डाः सर्वे जनाः यज्ञयागादिकर्मसु धुरीणा एवाभूवन् । अत एव धर्मसूत्रादीन्यनुसृत्य स्वस्वकर्मसु प्रवृत्ताः कृतकृत्यतामगच्छन् । पश्चात् जनेषु क्रमशः ह्रासतां गते कर्मकाण्डज्ञाने परिवर्तिते च समये अल्पज्ञेषु कर्मकाण्डमधिकृत्य बहुधा समुत्पन्नः विवादः मीमांसाशास्त्रमाविरकरोत् । तत्काले ये विवादविषया आसन् तानधिकृत्याधिकरणप्रणाल्या विचार्य निर्णयं च कृतवन्तस्तद्विदः । यतो हि वैदिकवाक्यान्यनुसृत्य प्रचलति कर्मकाण्डमतः वाक्यार्थनिर्णय एव फलमस्य शास्त्रस्य । एतस्मादेव हेतोर्वाक्यशास्त्रतयाप्यस्याः मीमांसायाः व्यपदेशः । वाक्यानां तात्पर्यावधारणप्रक्रियां च संक्षेपेणाधस्तान्निर्दिष्टं पद्यं निर्दिशति—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' ।। इति ।

याज्ञिकैः धर्मसूत्रादीनां साक्षादनुगामिभिः यज्ञसम्पादनपरम्पराश्रितैः साकं कदाचिद् यज्ञयागादिषु भवत्येव मतद्वैधं मीमांसकानामिति शास्त्रस्यास्याध्ययनेनावगम्यते ।

तत्र प्रथमाध्याये धर्मे किं प्रमाणमिति जिज्ञासा समाहिता । विधिरर्थवादः स्मृतिर्नाम चेति चतुर्विधमिह प्रमाणमिति चतुर्षु पादेषु निरूपितम् । तथा हि वैदिकं विधिवाक्यं प्रमाणं न वेति संशये विधिवाक्यं न प्रमाणं

तद्घटकसङ्गत्यपेक्षत्वेन निरपेक्षत्वाभावादिति पूर्वपक्षः। पदार्था एवावगताः वाक्यार्थं गमयन्ति, नास्ति पदार्थेभ्योऽतिरिक्तो वाक्यार्थो नाम। ततश्च पदवत् वाक्यस्याप्यर्थप्रत्यायनेऽस्त्येव निरपेक्षत्वमिति नास्त्यप्रामाण्यशङ्कावसर इति सिद्धान्तः।

प्रसङ्गतोऽत्रैव शब्दस्यार्थस्योभयोश्च संबन्धस्य नित्यत्वं वेदानामपौरुषेयत्वं च प्रसाधितम्। अन्यथा पुरुषगतभ्रमप्रमादादिदोषाणां तदीयकृतिष्वपि सङ्क्रमणसम्भवात्तासां पुरुषकृतीनामप्रामाण्यमापद्येत।

जिज्ञासा भवति यथा न्यायादिदर्शनेषु प्रत्यक्षादि प्रमाणानां विचार स्तथात्रापि तेषां परीक्षा कथं न क्रियते। केवलं विध्यादिवाक्यानामेव परीक्षा किमर्थमिति चेत् यथा प्रमाणानां प्रत्यक्षादीनां प्रमाणत्वेऽर्थाद् यथार्थज्ञानजनकत्वे तेषामव्यभिचारिता हेतुरस्ति निर्दिष्टा तथा विधिवाक्यानां नास्ति। परैः प्रतिपक्षिभिः वेदप्रामाण्यनिषेधकैः स्फुटमुच्यते चोदनार्थाद् वैदिकं विधिवाक्यं व्यभिचारवती मिथ्याप्रतीतिजननीति, विधिवाक्यानां प्रामाण्यं साधयितुं प्रयत्नस्य आवश्यकत्वादुचितत्वाच्चेति। विवादस्य निर्णयायैव मुख्यतोऽत्र शास्त्रारम्भः, सिद्धस्य च न जायते साधनमनावश्यकत्वात्। तस्मादिह प्रत्यक्षादीनां न परीक्षा।

एवं विध्यतिरिक्तानि वैदिकान्यर्थवादवाक्यान्यपि भवन्ति प्रमाणानि। यद्यपि समेषामर्थवादवाक्यानां संग्रहो दुर्घटस्तथापि स्थालीपुलाकन्यायेनैकमर्थवादवाक्यमिह प्रमाणतया प्रसाध्यते। वायुर्वै क्षेपिष्ठा देवतेति विचारस्य विषयः। वाक्यस्यास्य धर्मे प्रामाण्यं वर्तते न वेति संशये कर्तव्यविधायक वाक्यानामेवानुष्ठेयरूपधर्मं प्रति प्रामाण्यं सम्भवतीति नार्थवादवाक्यानां प्रामाण्यं, तेषां सिद्धार्थवर्णनमात्रपरत्वादिति पूर्वपक्षः।

उत्तरं तु यद्यप्येतादृशवाक्येषु नास्ति किञ्चिदनुष्ठानविधानं तथापि तत्प्रकरणस्थं यद् वाक्यान्तरमुपलभ्यते वायव्य श्वेतमालभेतेति। तत्र वर्तत एवानुष्ठेयस्य छागालम्भनस्य विधानम्। तदेकवाक्यतया च 'वायुर्वै क्षेपिष्ठा देवते'ति वाक्यं नेतुं शक्यम्। तथा चैकवाक्यतापन्नयोर्वाक्ययोरित्थमर्थः पर्यवस्यति—यस्माद् वायुः क्षेपिष्ठा देवता तस्मात्तदर्थं श्वेतालम्भनं कर्तव्यं क्षिप्रलाभायेति। एवं च प्राशस्त्यवर्णनेन पुरुषप्रवर्तनं प्रति विधिवाक्यस्य

साहाय्यमाचरदर्थवादवाक्यं धर्मविबोधकं प्रति भवत्येव प्रमाणमिति सिद्धान्तः ।

एवमष्टका कर्तव्येत्येवंविधानि वाक्यानि श्रूयन्ते । अथ च वैदिको विधिरेवायमर्थोऽनुष्ठेय इति नोपलभ्यते । स्मृतिस्तु निर्दिशत्येवमत एव सन्देहः—स्मृतिः प्रमाणं न वेति । स्मृतिरप्रमाणं धर्मस्य चोदनामात्रलक्षणत्वात् । वेदातिरिक्तानां स्मृतीनां प्रामाण्यानर्हत्वादिति पूर्वपक्षे सिद्धान्तः क्रियते स्मृतीनां वेदमूलत्वेन प्रामाण्यमेव । वैदिकैः स्मृता एवार्थाः स्मृतिषूपनिबद्धाः न तत्र नूतनं किञ्चिदपि विद्यते । ये येऽर्थाः वेदेषु विप्रकीर्णा उक्तास्ते सर्वेऽत्र पुरुषोपकाराय वेदविचक्षणैः स्मृतिकारैः स्मृतिषु संगृहीता इति तासां सिद्धयत्येव प्रामाण्यम् । तस्मात् स्मृतयः धर्मे प्रमाणं भवितुमर्हन्ति ।

उद्भिदा यजेत पशुकामः' वाक्येऽस्मिन् उद्भिच्छब्दो विचारस्य विषयः । अत्र संशयः किमुद्भिद्यतेऽनेनेति व्युत्पत्त्या तच्छब्दः खनित्रादिं गुणं विधत्ते अथ वा तन्नामकं यागविशेषमिति । किञ्चिद् गुणविशेष एव विधीयते खनित्रादिरूपः । यथा दध्ना जुहोतीति वाक्ये दधिशब्देन दधिगुणो विधीयत इति पूर्वपक्षः ।

सिद्धान्तस्तु दध्यादिपदवदुद्भिदादिशब्दस्य प्रसिद्धार्थत्वाभावात् गुणविधित्वप्रयोजकमत्वर्थलक्षणाया अभावात् न युज्यतेऽस्य गुणविधित्वम् । तस्मादस्य शब्दस्य यागविशेषनामधेयतैव युक्ता । फलत उद्भिन्नामकेन यागेन यजेतेति वाक्यार्थः पर्यवस्यति । तस्मात् सुष्ठूक्तम्—

विध्यर्थवादस्मृतयः नाम चेति चतुर्विधम् ।
प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ।। इति ।

धर्मः कथंलक्षण इति प्रथमेऽध्याये विचारितम् । को धर्मः कानि कर्माणि धर्मव्यपदेशभाञ्जीति विचारोऽधुना प्रस्तूयते । अतः कर्मभेदो मुख्यतया द्वितीयाध्यायविषयः । तदुपोद्घाततदपवादतत्प्रसक्तानुप्रसक्तत्वेनान्योऽर्थोऽत्र गौणः । कर्मणां भेदनिरूपणावसरेऽत्र फलमेव मुख्यं निरूपणीयमिति कृत्वा तत्स्वरूपतत्प्रमाणादिविचार एवादावुपोद्घातरूपेण क्रियते । अत्र सन्देहो भवति विधिवाक्ये किं सर्वैरेव पदैरपूर्वं सम्बध्यते उतैकेनैवेति ।

सर्वैरेव पदैरपूर्वं सम्बध्यते तस्य फलत्वात् । सर्वेषां च पदानां फलान्वयित्वादिति पूर्वपक्षे एकेनैव पदेनापूर्वस्य सम्बन्धः । एकस्यानेकैः सह सम्बन्धकल्पने गौरवात् । तस्मादेकमपूर्वमेकेनैव पदेन प्रतिपाद्यते पदान्तरं च तच्छेषतयान्वेतीति सिद्धान्तः ।

इदानीमपरा जिज्ञासा समुदेति । एकेनैव पदेनापूर्वं प्रतिपाद्यत इति साधिते किं तत्पदं येन तत्प्रतिपाद्यते । विधिवाक्यमेवात्र विषयो भवितुमर्हति । तत्र किं विधिवाक्यगतनामपदेनापूर्वमभिधीयते उताख्यातपदेनेति संशये नामपदेनैवोच्यतेऽपूर्वमिति पूर्वपक्षः । यतो हि द्रव्यादीनां सिद्धरूपाणामेव फलं प्रति साधनत्वसंभवः । सिद्धान्तस्तु क्रियां विना द्रव्याणि फलं साधयितुं न क्षमन्ते अतः आख्यातेनैव भावनावाचिनापूर्वं प्रतिपाद्यते न तु नाम पदेनेति ।

अपूर्वमाख्यातप्रत्ययबोधितेनार्थेन प्रत्याय्यत . इत्युक्तम् । अपूर्वं किमर्थमङ्गीकरणीयमिति पुनर्जिज्ञासा जागर्त्येव । अपूर्वमस्ति न वेति संशये निषेधकोटिः पूर्वपक्षिणः । तत्सद्भावे मानाभावात्, स्वर्गादेरेव फलत्वेनाभिधानात् तथा प्रतीयमानत्वाच्चेति तद्युक्तिः । सिद्धान्तिनस्तु विधिकोटिः । तथा हि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागस्य स्वर्गसाधनत्वमुक्तम् । यथा चैतत् स्वर्गसाधनत्वं यागस्योपपद्येत तथावश्यं कल्पनीयम् । यागानुष्ठानसमाप्त्यनन्तरमेव स्वर्गो न सिद्ध्यतीति तत्समाप्तिस्वर्गप्राप्त्यन्तराले उभयानुस्यूतमुभयसम्बन्धकं किमपि कल्पनीयम् । अन्यथा चिरविनष्टस्य यागस्य मरणानन्तरभाविनं स्वर्गं प्रति कारणत्वं न स्यात्, बहुव्यापारव्यवहितत्वात् । तस्माद् विधिवाक्योक्तयागस्वर्गयोः साध्यसाधकभावसामञ्जस्याय यत्किमपि कल्प्यते तस्यैव विधिव्यतिरिक्तप्रमाणान्तरागम्यत्वादपूर्वमिति नाम कृतम् । अत एवाभिहितं भगवता शङ्कराचार्येण—'न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति । अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थमपूर्वं नामास्तीति तर्क्यते ।'

तस्माद् द्वितीयाध्यायस्य प्रथमे पादे उपोद्घातप्रसङ्गेनापूर्वादि विवेचि-

तम् । प्रसङ्गसङ्गत्या मन्त्रब्राह्मणादिलक्षणमूहस्वरूपमृगादिलक्षणं चात्रैव प्रतिपादितानि । द्वितीयपादस्य मुख्यो विषयः कर्मभेदो निरूप्यते ।

अयमभिप्रायः--आख्यातप्रत्ययेनैवापूर्वमुच्यत इति प्रसाधितम् । तथा चैकप्रकरणगतानि पर्यायधातुनिष्पन्नान्याख्यातानि यजति ददाति जुहोतीत्यादीन्युदाहरणानि समुपलभ्यन्ते । अतः सन्देहो भवति किं सर्वैराख्यातैः भिन्नं भिन्नं कर्मोच्यते उतैकमिति । यस्मात् सर्वेष्वेक एवाख्यातप्रत्ययो भावनावाची तस्मादेकैव भावना एकमेवापूर्वमेकमेव कर्म सर्वैरुच्यते । न च धातुभेदाद्भेदः धातोर्भावनावाचित्वाभावेन तत्राप्रयोजकत्वादिति पूर्वपक्षः ।

सिद्धान्तस्तु यद्यप्याख्यातमेव भावनायाः प्रयोजकम् । तथाप्याख्यातस्य प्रति धातुभिन्नत्वमेव ततश्च बहूनामाख्यातानामेकैकधातुविशेषानुरक्तत्वेनैव भावनावाचित्वेन यागदानहोमभावनाः परस्परं भिन्ना एवेति । अत्र च शब्दान्तरमेव कर्मभेदे हेतुः । षड्विधः कर्मभेदः प्रतिपादितोऽस्ति । अत एव कर्मभेदबोधकानि प्रमाणानि षट् सञ्जायन्ते, यत्रैकं शब्दान्तरमिहोदाहृतम् । एवमभ्यासः, संख्या, संज्ञा, गुणः, प्रक्रिया च कर्मभेदं बोधयन्ति ।

अभ्यासेन कर्मभेदो यथा समिधो यजति तनूनपातं यजति ईडो यजति बर्हिर्यजतीति वाक्यमिह यजतिचतुष्टयेन किमेकमेव कर्मोच्यते उत चत्वारीति संशये, एकमेव कर्मोच्यत इति पूर्वपक्षः, चत्वारि कर्माणि यजतिचतुष्टयप्रयोगादिति सिद्धान्तः । कर्मैक्ये अभ्यासस्य निरर्थकतापत्तेः ।

संख्यया कर्मभेदो यथा 'सप्तदश प्राजापत्यान् पशूनालभेते'ति विषयवाक्यम् । अत्र संशयः किं विहितं कर्मैकमेवोत सप्तदश कर्माणीति । आलभेतेति कर्माभिधायकस्यैकत्वादेकमेवात्र कर्म सप्तदशपश्वालम्भनात्मकमिति पूर्वपक्षे सिद्धान्तस्तु प्रजापतिदेवताकं पश्वालम्भनरूपं न कर्मैकम् । तादृशस्य कर्मणो बहुत्वाय बहुवचनप्रयोगस्तस्मिंश्च बहुत्वे विशेषः सप्तदशसंख्या निर्दिश्यते । अतोऽत्र सप्तदशैव कर्माणि कर्मभेदश्च संख्याकृत एव ।

नामधेयकृतकर्मभेदो यथा 'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः अनेन सहस्रदक्षिणेन यजेते'ति विषयवाक्यम् । अत्र संशयः

किमेकमेवान्यत्र विहितं कर्म ज्योतिष्टोमं ज्योतिः शब्देनानूद्य तत्र सहस्र-दक्षिणत्वरूपो गुणो विधीयते आहोस्वित् ज्योतिर्नामकं भिन्नमेव कर्म विधीयत इति। एकमेव कर्म ज्योतिष्टोममनूद्य तत्र सहस्रदक्षिणत्वरूपो गुणो विधीयत इति पूर्वपक्षे अथेत्यनेन ज्योतिष्टोमप्रकरणस्य विच्छिन्नत्वान्नास्त्यत्र तेन संबन्धः। ज्योतिः शब्दश्चापूर्वमेव नामान्यत्राविहितमेव कर्मान्तरं समर्पयति। अतोऽत्र ज्योतिष्टोमाद् भिन्नान्येव ज्योतिः विश्वज्योतिः सर्व-ज्योतिरिति तिसृभिः संज्ञाभिस्त्रीणि कर्माणि विधीयन्त इति सिद्धान्तः।

गुणकृतकर्मभेदो यथा 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति' विषयवाक्यम्। तप्ते दुग्धे दधिनि प्रक्षिप्ते यो घनीभूतः पिण्डो जायते तस्यैव नामामिक्षेति, अवशिष्टजलभागस्य च वाजिनमिति। तदेतदत्र वाजिभ्यो वाजिनमित्यनेन द्वितीयेन वाक्येन किं कर्मान्तरं विधीयते उत पूर्ववाक्यविहितं कर्म प्रत्येव किञ्चिद्गुणान्तरं विधीयत इति संशयः। पूर्ववाक्येन विश्वेभ्यो देवेभ्य आमिक्षाद्रव्यस्यार्पणं विहितं द्वितीयेन च वाक्येन वैश्वदेवदेवताकं यागमनूद्य वाजिनरूपद्रव्यान्तरं विधीयते आमिक्षया सह समुच्चयार्थं विकल्पार्थं वेति पूर्वपक्षे वैश्वदेवयागस्य सह शिष्टेनामिक्षा द्रव्येणा-वरुद्धत्वाद् द्रव्यान्तरस्य तत्र प्रवेशासंभवात् वाजिनरूपद्रव्यसम्पादनक-देवतान्तरमेव 'वाजिभ्य इति पदेन समर्प्यते। ततश्च वाजिरूपदेवताभ्यो यस्मिन् कर्मणि वाजिनरूपद्रव्यं प्रदीयते तत्कर्म भिन्नमेव द्वितीयेन वाक्ये-नोच्यते।

प्रकरणेन कर्मभेदो यथा त्रिवृदग्निष्टुदग्निष्टोम इति वाक्यस्य सन्निधा-त्रिदमपरं वाक्यम्—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'ति वाक्यमिह विषयः। अत्र द्वितीयेन वाक्येन किं प्रकृतेऽग्निष्टुद्याग एव पशुफलाप्तये रेवतीनामृचां वारवन्तीयसाम्ना संबन्ध-करणं विधीयते उत तत्सामगुणकं पशुफलकमन्यदेव कर्म विधीयत इति संशयः। यथाग्निष्टुति ब्रह्मवर्चसकामस्य वायव्यास्वृक्षु अग्निष्टोमसामगानं विहितं वाक्यान्तरेण तथैवानेनापि वाक्येन तस्मिन्नेवाग्निष्टुद्यागे रेवतीष्वृक्षु वारवन्तीयसामगानत्वं विधीयते पशुकामस्य पूर्वाधिकरणीय न्यायेनेति पूर्वपक्षे समाधानम् तद्यथात्र हि दध्नो होमसाधनत्वं प्रत्यक्षेण ज्ञेयं न शास्त्रैकबोध्यम्।

अतस्तत्र फलसम्बन्धमात्रं तस्य शास्त्रगम्यम् । इह तु रेवत्यृगाधारकवारंवन्तीयसामगानस्याग्निष्टुत् कर्मसाधनत्वं पशुफलसाधनत्वं चेत्युभयमपि शास्त्रैकबोध्यमेव । तथा च पूर्वपक्षे वाक्यभेदस्तेनोक्तगुणकं पशुफलकं कर्मान्तरमेवात्र विधीयत इति निर्णयः । प्रसङ्गसङ्गत्यात्रैव ऋग्यजुः साम्नां वेदानां लक्षणान्यपि निरूपितानि ।

तृतीयपादे पुनः कर्मविशेषाणां भेदस्तस्यापवादश्च निरूपितोऽस्ति । तथा हि ज्योतिष्टोमेन स्वर्गकामो यजेतेति ज्योतिष्टोमविधिः । तमेव ज्योतिष्टोमं प्रकृत्य श्रूयते यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रानिति । अत्र सोमशब्देन सोमलतासाधनको यागो विधीयते । तस्मिंश्च यागे माध्यन्दिने सवने पृष्ठस्तोत्रे रथन्तरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थ्याग्रयणः, उक्थ्यः, ध्रुव इत्यादि नामका सोमरसधारका पात्रविशेषा ग्रहनामधेया भवन्ति । रथन्तरसामोपेतत्वे सोमयागे ऐन्द्रवायवः, बृहत्सामोपेतत्वे शुक्रः जगत्सामोपेतत्वे आग्रयण इत्येतद् विषयवाक्यार्थः ।

अत्र संशयो भवति इह यो ग्रहाग्रताविशेषो विधीयते स किं ज्योतिष्टोमस्यैव रथन्तरसामादियुक्तस्याथ वा रथन्तरसामादिनाम्नः कर्मान्तरस्येति । प्रकृतो ज्योतिष्टोमः गायत्रादिसामोपेतस्तस्यैव व्यावृत्त्यर्थमिह वाक्ये रथन्तरादयो गुणाः कीर्त्यन्ते । अत ऐन्द्रवायवादिग्रहाग्रत्वविशिष्टानि कर्मान्तराण्येवात्र विधीयन्त इति पूर्वपक्षः ।

सिद्धान्तस्तु प्रकरणादत्र ज्योतिष्टोमस्यैव ग्रहणम् । गृहीते च तस्मिन् तद्विषये ग्रहाग्रत्वविशेषो गुणो विधीयते न च रथन्तराद्यभिधानेन ज्योतिष्टोमस्य व्यावृत्तिः । प्रातःसवने तस्य गायत्रादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथन्तरादियोगस्यापि संभवादिति । अत्रापवादा अपि निर्दिष्टा बहवस्तस्मादपवादवचनमेव पादार्थः । तथा चोक्तम्—

उपोद्धातः कर्मभेदमानं तस्यापवादगीः ।
प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः ।। इति ।

इदानीमवशिष्टस्य चतुर्थपादविषयस्य प्रयोगभेदस्य स्वरूपनिरूपणम्। पर्यवसिते कर्मभेदनिरूपणे तत्संबद्ध एव प्रयोगभेदो विचार्यते। 'यावज्जीवमग्निहोत्रं जुहोती'ति विषयवाक्यम्। अत्र संशयः—किमत्र यावज्जीविकता कर्मधर्म आहोस्वित् कर्तृधर्मः। 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यनेन यत्काम्यमग्निहोत्रं विहितं तदेव जुहोतीत्यनेनानूद्य यावज्जीवपदेन तस्य मरणावधिकालो विधीयते। तथा चेदं वाक्यं काम्यमग्निहोत्रमुद्दिश्य यावज्जीवकालं विदधाति। एवं चास्य काम्यानुष्ठानस्य मरणपर्यन्तता सिद्ध्यति। अन्यथा काम्याग्निहोत्रकर्मणोः यावज्जीवमभ्याससिद्ध्यर्थमेव यावज्जीवकालरूपस्य कर्मधर्मस्यैवायं विधिः। तथा च नित्यकाम्यप्रयोगौ सम्मिलितावेकमेव कर्म यावज्जीवव्याप्यं सम्पादयत इति पूर्वपक्षे यावज्जीवपदस्य सत्यपि काललक्षकत्वे न कालवाचकत्वम्। कृत्स्नजीवनपर्याय एवेदं पदम् न च जीवनं कस्यचित् कर्मणो धर्मो भवितुमर्हति, तस्य पुरुषधर्मत्वात्। तमेव पुरुषधर्मं निमित्तीकृत्याग्निहोत्रप्रयोगोऽत्र वाक्ये विधीयते। न चात्र कर्मभेदः प्रयोगभेद एवात्र लभ्यते। न च प्रयोगनैरन्तर्यापत्तिः सायं प्रातःकालयोरेव स्पष्टं विहितत्वात्। तस्माद् जीवनस्य पुरुषधर्मत्वात् नित्यकाम्यप्रयोगौ भिन्नावेवेति सिद्धान्तः।

एवमुक्तान् षट् कर्मभेदकान् विहायान्यः कर्मभेदकः शाखाभेदादिरूपोऽस्ति न वेति विचार्यते।

समुपलभ्यन्ते दर्शपूर्णमासविधायकानि वाक्यानि नानाशाखासु काठकाण्वमाध्यन्दिनतैत्तिरीयाद्यासु। तत्र संशयः किं प्रतिशाखं भिन्नमेव कर्म दर्शपूर्णमासाख्यं विधीयते उतैकमेवेति। काठकादयो नामभेदास्ते च कर्मभेदका इति शाखाभेदेन कर्म भिन्नमिति पूर्वपक्षे सर्वत्रोक्तस्य दर्शपूर्णमासस्यैकमेव रूपम्। दर्शपूर्णमासेति नामाप्येकमेव सर्वत्रोपलभ्यते। तस्मादनन्यथा सिद्धरूपप्रत्यभिज्ञानात् शाखाभेदो न भवति कर्मभेदक इति सिद्धान्तः।

तृतीयोऽध्यायः शरभपादात्मकः शेषाध्यायनाम्ना प्रसिद्धः। शेषपदमिहाङ्गवाचकम्। प्रधानाङ्गभावो हि कर्मसु स्वाभाविकः। नहि सर्वं कर्म प्रधानमेव सञ्जायते न वाङ्गमेव। एकत्रैव यागयज्ञादिषु प्रधानाङ्गभावः कर्मसूपलभ्यते। तस्मात् कर्मणामङ्गप्रधानबोधकानि सर्वाणि वाक्यान्यत्र

विषयवाक्यत्वेन परिगृह्यन्ते । तत्राङ्गबोधकानां श्रुतिवाक्यानामिह मुख्यतया विचारः ।

अङ्गस्य [शेषस्य] लक्षणं सम्भवति नवेति संशये निषेधकोटिः पूर्वपक्षिणाम् । तथा हि अङ्गत्वं [शेषत्वं] नाम किमविनाभूतत्वं, प्रयोज्यत्वं, विध्यन्तविहितत्वं वा ? नाद्यः, तथा सति स्वाम्यपि भृत्यस्य शेषः स्यात् । न द्वितीयः, पुरोडाशकपालेन तुषानुपवपतीत्यत्र तुषोपवापं प्रति शेषस्यापि कपालस्य तत्प्रयोज्यत्वाभावाद् शेषत्वं न स्यात् । नापि तृतीयः, विध्यादि विहितस्य पलाशशाखाच्छेदस्य सत्यपि शेषत्वे विध्यन्तविहितत्वाभावात् । तस्मान्नास्ति शेषस्य लक्षणम् । न वा तत्प्रसाधकः कश्चिद्धेतुरस्ति । विमतः शेषः एवं रूपत्वादिति कस्यचिद्हेतोर्निरूपयितुमशक्यत्वात् ।

अत्र सिद्धान्तः, विमतः प्रयाजादिः शेषः परार्थत्वात् भृत्यादिवदिति हेतु सुनिरूपः । तथा च परार्थः शेष इति लक्षणमदुष्टमेव । तस्मात् शेषत्वस्य हेतुः स्वरूपं च निरूपितं भवति । फलतः कः शेषः कथं शेषः केन हेतुना शेष इति जिज्ञासात्र निरस्यते । शेषः परार्थत्वादिति जैमिनिसूत्रं परस्य प्रधान-कर्मण उपकारकमङ्गं शेषपदेनाभिदधातीत्यत्र निर्विवादम् ।

अधुना शेषस्य लक्षणे निरूपिते तस्य लक्ष्यं निर्दिश्यते । तथा हि स्रचकपालादिकं द्रव्यम्, अरुणिमादिको गुणः, अवघातप्रोक्षणादिकः संस्कारः दर्शपूर्णमासादिकं कर्म स्वर्गादिफलं कर्ता पुरुषश्चेति भवन्ति यज्ञाङ्गानि । यत्र श्रुतिवाक्ये एतान्युक्तानि तानि सर्वाण्यत्र विषयवाक्यत्वेन परिगृह्यन्ते । अत्र संशयो भवति किं द्रव्यादयः पुरुषान्ताः सर्व एव शेषस्य लक्ष्या उत कानिचिदेवेति । द्रव्यगुणसंस्कारा एव शेषाः न कर्मफलपुरुषाः । द्रव्यादिषु त्रिष्वेव नियतः शेषभावः इति पूर्वपक्षः । सिद्धान्तस्तु यथा द्रव्यादयस्त्रयः परार्थास्तथैव कर्मफलपुरुषा अपि । तस्मान्निर्दिष्टानां समेषां शेषत्वम् । तथा हि दर्शपूर्णमासादि फलार्थमेव सम्पद्यते पुरुषश्चौदुम्बरी सम्मानादिषु गुणभूतः श्रूयते । इयान् विवेकोऽत्र भवति । द्रव्यगुणसंस्काराणां यागं प्रति शेषत्वं नियतं कर्मादीनां त्वापेक्षिकम् । कर्मणः फलं प्रति शेषत्वेऽपि द्रव्यं प्रति प्रधानत्वमेव । फलस्य पुरुषं प्रति शेषत्वेऽपि यागं प्रति प्राधान्यमेव, पुरुषस्यौदुम्बरी सम्मानादि

प्रति शेषत्वेऽपि फलं प्रति प्राधान्यमिति। ईदृशस्याङ्गत्वस्य विचारः प्रथम-पादविषयः।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रतिषेधादिति सूत्रेण निर्दिष्टेषु श्रुतिप्रामाण्यमासाद्य शेषत्वविचारः प्रथमे पादे विहितः। लिङ्गप्रमाणेनाङ्गत्वविचार इह द्वितीये पादे विधीयते। लिङ्गमिह शब्दसामर्थ्यम्। तथा चोक्तम्—'सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते' इति। तस्माद्रूढावस्य तात्पर्यम्। समाख्या तु यौगिकीति तस्याः भेदोऽवधारणीयः। बर्हिर्देवसदनं दामीति बर्हिर्लवनप्रकाशको मन्त्रस्तत्प्रकाशन-लिङ्गेन लवनक्रियायां विनियुज्यते लवितव्यं च बर्हिर्द्विविधं भवति मुख्यं गौणञ्चेति। मुख्यं कुशकाशादि दशविधदर्भरूपम् गौणं तु तत्सदृशं तृणान्तरम्। अत्र संशयः किं मुख्यस्यैव कुशादेर्लवने मन्त्रस्य विनियोग उत गौणस्यापि तृणान्तरस्येति पूर्वपक्षेऽत्र मुख्यवद् गौणस्यापि शब्देनोच्य मानत्वं तुल्यम्। तथा च मुख्यवद् गौणेऽपि बर्हिषि लवनं प्राप्तं तत्र लवन प्रकाशकमन्त्रस्य विनियोगो भवितुमर्हति। सिद्धान्तस्तु मुख्यस्य शीघ्रतर-प्रतीतत्वेन तस्मिन् मन्त्रं विनियुज्य चरितार्थं लवनप्रकाशनसामर्थ्यरूपं लिङ्गं विलम्बितप्रतीततया गौणं प्रतीक्षते। तस्मान् मुख्यस्यैव बर्हिषो लवने मन्त्रो विनियोजनीय इति। एवमन्येषामप्यधिकरणानां विचार इति स्थाली-पुलाकन्यायेनात्र विषयस्य दिग्दर्शनं कृतम्। फलतः लिङ्गस्य स्वरूपं तेषु प्राबल्यं दौर्बल्यं च विचारितम्।

वाक्यमूलकत्वस्याङ्गत्वस्य विचारस्तृतीयपादेऽत्र विहितः। तथा हि उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्नेति ज्योतिष्टोमे श्रूयते। अत्र सन्देहो भवति उच्चैस्त्वादयो धर्मा मन्त्राणामुत वेदानामिति। मन्त्रधर्मा उच्चैस्त्वादय इति पूर्वपक्षः। वेदधर्मास्ते इति सिद्धान्तः। यतो हि विधि-वाक्यानामुपक्रमे श्रूयते त्रयो वेदा असृज्यन्त अग्नेः ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेद इति। एतदुपक्रमोपसंहारैकवाक्यताबलेनोपसंहारभूतेषु विधिवाक्येष्वपि ऋग्यजुःसामशब्दाः वेदपरा एव नेयाः। अत्रैव प्रकरणस्य स्थानक्रमस्य समाख्यायाश्च यथाक्रमं प्रामाण्यमासाद्याङ्गत्वविचारः विहितः। पुनरेतासां समाख्यादीनां परस्परं विरोधे का गतिरित्यपि विचारितम्।

चतुर्थपादस्यापि विचारविषयः श्रुतिप्रकरणयोः लिङ्गवाक्ययोश्च विरोधे कथं विनियोगः मन्त्राणां कार्य इत्येव। अत एव निवीतोपवीतादिष्वर्थ-वादत्वविधित्वादिनिर्णयहेतुत्वं श्रुत्यादीनां च परस्परविरोधसदसद्भावविवेक-श्चात्र विद्यते।

पञ्चमपादस्य विषयः विरोधप्रतिपत्तौ किं कार्यमिति। तथा हि दर्शपूर्णमासयोः शेषकार्याणि श्रूयन्ते 'उत्तरार्धात् स्विष्टकृते समवद्यति' 'इडामुपह्वयती'त्यादि। तत्र सन्देहः किमुपांशुयाजद्रव्यात् आज्यात् स्विष्ट-कृदादि शेषावदानं कर्तव्यमुत नेति। विधिपक्षोऽत्र पूर्वपक्षिणः। सर्वेभ्यो हविर्भ्यः समवद्यति इति वाक्येन सर्वेभ्यो हविर्भ्यः शेषकार्यं प्रापितम् निषेध-पक्षस्तु सिद्धान्तिनः। सम्पन्नप्रयोजनस्यैव हविर्द्रव्यस्य शेषः शेषावदानरूपां प्रतिपत्तिमपेक्षते। ध्रौवं त्वाज्यं न सम्पन्नप्रयोजनम्। तेन कर्तव्यानामुप-स्तरणादीनामसम्पन्नत्वात्। तस्मादाज्येन न भवति शेषकार्यमिति।

षष्ठपादे तु यत्राङ्गत्वविचारे श्रुतिलिङ्गादीनि षट्प्रमाणानि न प्रसरन्ति तत्र का गतिरिति विचार्यते। अनारभ्य श्रूयते—'यस्य पर्णमयी जुहू-र्भवति न स पापं श्लोकं शृणोती'ति। तथा हि जुह्वाः या पर्णमयतात्र विहिता सा किं प्रकृतौ विकृतावुभयत्र निविशते आहोस्विद् विकृतावेवेति सन्देहे सिद्धान्तः प्रकृतावेव निविशते पर्णमयता। यत् प्रकृतौ वर्तते तद् प्रकृतिवद् विकृतिः कर्तव्येत्यतिदेशेन विकृतावपि प्राप्नोति। एवं च प्रकृतौ प्राप्ताया जुहूपर्णताया विकृतावतिदेशवाक्येनैव प्राप्तत्वे यदि तस्या एव पुनः साक्षात् विध्यन्तरेण विधानं स्यात् तर्हि द्विरुक्तिरेव स्यात्, सा तु न न्याय्या। तस्मादनारभ्य विधानविचारः षष्ठपादे विहितः।

सप्तमे पादे बहुप्रधानोपकारकादीनां प्रयाजादीनां विचारः प्रदर्शितः परमङ्गत्वमधिकृत्यैव। अत एव वाक्यप्रकरणाभ्यामङ्गत्वनियमनमिह विषयः।

अष्टमे तु पादे स्वाम्यर्थो निरूपितः। तथा हि ज्योतिष्टोमादौ दक्षिणा दानेन कर्मकरा आसादयितव्याः। एतदेव तेषां परिक्रय इत्युच्यते। अत्र संशयः इदं परिक्रयरूपं कर्म केन कर्तव्यम् यजमानेनाहोस्विदध्वर्युणा अन्येन

वा ऋत्विजेति। यागीयद्रव्याणां यागार्थं परित्यागरूपं कर्म विहाय सर्वं तदङ्ग-मृत्विग्भिरेव कर्तव्यं परिक्रयसाधनभूतं च दक्षिणादानं दक्षिणा चाध्वर्यववेदे समाम्नाता। तस्मादाध्वर्यव समाख्याबलादध्वर्युणैव दक्षिणादानं तद्द्वारा च परिक्रयणं कर्तव्यमिति पूर्वपक्षे परिक्रयणं कर्मणामनुष्ठानात्प्रागेव भवति। परिक्रयणात् प्राक् ऋत्विजामार्त्विज्यमेव न सम्पन्नम्। आर्त्विज्याभावे तेषां यागेन सम्बन्धो नास्ति। अतः परिक्रयणं यजमानेनैव कर्तव्यम्। परिक्रया-नन्तरं च सर्वं तत्तदृत्विग्भिर्यथाश्रुतं कर्तव्यमिति सिद्धान्तः। एवं च साधु समुपसंहृतममुना पद्येनाध्यायपादार्थः।

श्रुतिः लिङ्गं च वाक्यादि विरोधप्रतिपत्तयः।
अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः ॥ इति।

चतुर्थाध्यायः पादचतुष्टयात्मकः। क्रत्वर्थपुरुषार्थविवेक एवात्र विषयः। प्रधानाङ्गकर्मणां विचारानन्तरं किमर्थं तदिति जिज्ञासायाः सुलभत्वात्। तथा हि कर्मसु कानिचित् साक्षात् पुरुषेप्सितफलसाधनानि कानिचित् पुनः कर्मान्तरसम्पादनद्वारैव फलसाधनानि। आद्यानां प्रयोजकं पुरुषेप्सितं फलमन्त्यानां तु तत्तत्कर्मान्तरम्। आद्यानि साक्षात्पुरुषेप्सितसाधकत्वात् पुरुषार्थानि। अन्त्यानि कर्मान्तरस्य साधनानीति क्रत्वर्थानि भवन्ति। पुरुषस्य प्रीतये यद् विधीयते तत्पुरुषार्थम्, केवलं क्रतुस्वरूपपौष्कल्याय यद् विधीयते तत् क्रत्वर्थमिति तयोर्लक्षणं सुवचम्। क्रत्वर्थपुरुषार्थयोर्लक्षणे स्थिते कः पुरुषार्थः कश्च क्रत्वर्थ इति विचारस्य प्रवर्तनं सर्वथौचित्यमावहत्येव।

प्रधानस्य प्रयोक्तृत्वमप्रधानाप्रयोक्तृता।
फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥ इति।

श्लोकेन चतुर्थाध्यायपादगतविषयाः संक्षेपेण सूच्यन्ते। अत्र प्रथमं सन्देहो जायते क्रत्वर्थपुरुषार्थयोर्विवेकः कर्तव्यो न वेति। अस्य विवेकस्या-प्रयोजनत्वान्न कर्तव्य इति पूर्वपक्षः। अनेनैव विवेकेन कर्मणां प्रयुक्तिः सम्यग् ज्ञातुं शक्यते। तस्मात्साक्षात् परम्परया वा प्रयुक्तिनिर्णयायोपयुक्तोऽयं विचार इति सिद्धान्तः।

एवं च क्रत्वर्थपुरुषार्थयोर्लक्षणे स्थिते कः पदार्थः क्रत्वर्थः कश्च पुरुषार्थ इति पृथक् पदार्थविचारोऽधुना प्रवर्तते । दर्शपूर्णमासयोः श्रूयते 'चमसेनापः प्रणयेत् । गोदोहनेन पशुकामस्य प्रणयेदिति' । अत्र संशयः यदिदं गोदोहनं तत्क्रत्वर्थं पुरुषार्थं वेति । क्रत्वर्थमेवेदमिति पूर्वपक्षः । अपः प्रणयनेन गोदोहनं साक्षादेव क्रतुमुपकरोति । सिद्धान्तस्तु गोदोहनेन पशुरूपफलजननरूपपुरुषप्रीतिरुत्पाद्यते । क्रतुपौष्कल्यार्थमपां प्रणयनं तु प्रकारान्तरेणापि चमसादिना भवति । गोदोहविधानं तु केवलपशुरूपफलसम्पादनाय तस्मात्पुरुषार्थमेवेदमिति दिक्प्रदर्शिता क्रत्वर्थपुरुषार्थविवेकस्य ।

प्रयुक्ति विचारारम्भे प्रधानस्य प्रयोक्तृत्वमभिहितम् । तद्यथा चातुर्मास्ये वैश्वदेवे श्रूयते 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन' मिति । अत्र संशयः द्वयोर्द्रव्ययोरामिक्षावाजिनयोः कतरद् दधिप्रक्षेपस्य प्रयोजकम् किमामिक्षासम्पादनार्थं दधि प्रक्षिप्यते उत वाजिनसम्पादनार्थमिति । पूर्वपक्षस्तु उभयार्थो दधिप्रक्षेपः । उभयश्च हविष्ट्वेनाम्नातं विद्यते । सिद्धान्तस्तु वाक्येनात्र न द्रव्यान्तरं हविष्ट्वेन विधीयते अपि तु पय एव दधि सम्मिश्रम् । तच्च द्रव्यमामिक्षैव तत्रैव दधिपयसो रसस्य संभवात् वाजिने तु न विद्यते दधिपयसो रसः । तस्मादामिक्षार्थ एव दधिप्रक्षेपः वाजिनं तु अनुनिष्पाद्यं, न भवति प्रयोजकम् । तस्मात् प्रधानस्य प्रयोक्तृत्वं निष्पद्यते ।

द्वितीयपादे अप्रधानस्याप्रयोक्तृता विचारिता । तद्यथा ज्योतिष्टोमेऽग्नीष्टोमीयः पशुः । तस्य पशोर्यूपे बन्धनमाम्नातम् 'खादिरे बध्नाति पालाशे बध्नाती'ति । अस्यैव सन्निधौ श्रूयते 'यूपस्य स्वरुं करोती'ति । यूपस्यैवैकोंऽशः स्वरुरिति ।

अत्र संशयः किं यूपात् पृथगेव स्वरुरुत्पादयितव्यः उत क्रियमाणं यूपमनुनिष्पन्न एव ग्रहीतव्य इति । अर्थात् शाखाच्छेदनादि व्यापाराणां प्रयोजकः स्वरुर्भवति न वेति । पूर्वपक्षस्तु 'स्वरुं करोती'ति पृथक् स्वरोः करणं विधीयते । करणं च छेदनादिना काष्ठस्य स्वरुत्वसम्पादनम् । तस्मात् स्वरुः छेदनादीनां भवति प्रयोजकः । छिद्यमानस्य यूपस्य यः प्रथमः खण्डः पतति स

स्वरुरित्येतावन्मात्रमेवार्थः स्वरुं करोतीत्यस्य । करोतेश्चादानमर्थः । तस्मात् स्वरुविध्यर्थं छेदनान्तरमपि तु यूपमनुनिष्पन्न एव स्वरुः ग्रहीतव्यः । तस्मान्न भवति स्वरुश्च्छेदनादेः प्रयोजक इति सिद्धान्तः । अप्रधानमप्रयोजकं भवतीति दिङ्मात्रमिह दर्शितम् ।

प्रधानफलचिन्ता तृतीयपादविषयः । तद्यथा दर्शपूर्णमासयोरपः प्रणयनमाम्नातम् । तत्र विशिष्य श्रूयते 'गोदोहनेन पशुकामस्य प्रणये'दिति । अत्र सन्देहः अपः प्रणयनार्थं यद् गोदोहनपात्रमुक्तं तत्किं काम्यमात्रार्थमुत नित्यकाम्योभयार्थमिति । नित्यकाम्योभयार्थमिदं पात्रमिति पूर्वपक्षः । सिद्धान्तस्तु कामविशेषसिद्धयर्थं पात्रविशेषस्य विधानम् । तच्च कामे सत्येव योग्यं नान्यथा । नित्ये प्रणयनं तु चमसेनापः प्रणयतीति सामान्यतो विहितेन येन केनापि पात्रेण सम्भवति काम्यं पात्रं नित्ये नान्वेतीति काम्यार्थमिदं पात्रमिति । एवं यत्र काम्ये कर्मणि प्रातिस्विकरूपेण फलं श्रूयते तत्र तदेव फलं ग्राह्यम् । यथा 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति । अत्र सौर्यस्य चरोः निर्वपनफलं ब्रह्मवर्चसां प्राप्तिरिति । यत्र च पुनः न श्रूयते फलं यथा विश्वजिता यजेतेति । तत्र स्वर्गः फलं कल्प्यते । अन्यथानर्थकः स्याद् विधिरिति तात्पर्यम् ।

चतुर्थपादस्तु जघन्याङ्गविचारपरः । तथा हि राजसूयप्रकरणे 'राजसूयेन स्वाराज्यकामो यजेदिति' राजसूयमुक्त्वा तत्सन्निधाने यागरूपा अनुमत्यादय उक्ता अयागरूपा द्यूतादयोऽपि । तत्र सन्देहः किमेतानि कर्माणि यागरूपाण्ययागरूपाणि या सर्वाण्येव मुख्यानि आहोस्वित् कानिचदेव मुख्यानि कानिचिदङ्गानीति । प्रकरणपाठस्य सर्वत्र समानत्वात् सर्वाण्येव मुख्यानीति पूर्वपक्षः । सिद्धान्तस्त्वत्र स्वाराज्यरूपफलस्य साधनत्वेन याग एव श्रुतः । अतो यागरूपाणामनुमत्यादीनामेव फलसाधकतया मुख्यत्वमितरेषां त्वयागरूपाणामफलानां द्यूतादीनामङ्गत्वमिति ।

द्वितीय तृतीय चतुर्थाध्यायैरनुष्ठेयानां कर्मणां स्वरूपमवधारितम् । इदानीं पञ्चमेऽध्यायेऽनुष्ठानस्य क्रमो निरूप्यते । क्रमश्च पौर्वापर्यलक्षणोऽत्र

ग्राह्यः । श्रुत्यर्थपाठस्थानमुख्यप्रवृत्त्याख्यान्यत्र षट् प्रमाणानि सन्दृश्यन्ते । एषु क्रमेषु पूर्वपूर्वस्य बलीयस्त्वं भवति । तथाचोक्तम्—

श्रुत्यादिभिः क्रमस्तस्य विशेषो वृद्ध्यवर्धने ।
श्रुत्यादेर्बलिता चेति पञ्चमाध्यायपादगाः ॥

श्रुत्यादिभिः षट् प्रमाणैः क्रमस्य निरूपणं प्रथमपादस्य विषयः । तस्य विशेषमधिकृत्य विचारः द्वितीयपादस्य विषयः । तस्य वृद्ध्यवृद्धी अधिकृत्य विचारस्तृतीयपादस्य विषयः । श्रुतिषु क्रमबोधिकासु बलाबलविचार-श्चतुर्थपादस्य विषयः ।

तथा हि दीक्षासु गृहपत्यादीनां कर्तव्यासु क्रमः श्रुत्या विधीयते । यथा अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारम् । अत्र दीक्षायाः क्रमोऽपि विधीयते न तु दीक्षाकर्ममात्रम् । यत्र प्रयोजनवशेन क्रमनिर्णयः सोऽर्थक्रमः । यथा अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र यवागूपाकं विनाग्निहोत्रहवनमसम्भवमिति पूर्वं यवागूपाकः पश्चाद् हवनमिति । पदार्थ-बोधकवाक्यानां यः क्रमः स पाठक्रमः । यथा 'समिधो यजति' 'तनूनपातं यजती' त्यादि । स्थानं नामोपस्थितिः । यथा साद्यस्के अग्नीषोमीयसवनीयानु-बन्ध्यानां सवनीयदेशे सदानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानं पश्चादि-तरयोः । प्रधानक्रमेण योऽङ्गानां क्रमः स मुख्यक्रमः । अर्थात् येन क्रमेण प्रधानं कर्म क्रियते तेनैव क्रमेण तदङ्गस्याप्यनुष्ठानमिति । सह प्रयुज्यमानेषु पदार्थेषु सन्निपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये हि द्वितीयादिपदार्थानां प्रथमा-नुष्ठितपदार्थक्रमाद् यः क्रमः स प्रवृत्तिक्रमः ।

अधिकारिनिरूपणात्मकः षष्ठोऽध्यायः । अस्याप्यष्टौ विद्यन्ते पादाः । कोऽनुष्ठातेत्यधिकार इदानीं कर्मसु विचार्यते । अधिकारश्च कर्तृत्वसमाना-धिकरणफलभोक्तृत्वम् । फलं स्वर्गादिकं कर्म वा प्रधानमिति जिज्ञासायां स्वर्गादि फलमेव प्रधानमिति सिद्धान्तः ।

अधिकारी तस्य धर्माः प्रतिनिध्यर्थलोपने ।
दीक्षा सत्रं देयवह्नी षष्ठपादेष्वमी स्थिताः ॥

इति ह्यत्र पदार्थबोधकवाक्यम्। यद्यपि सुखविशेषात्मकं स्वर्गं यागफलं जीवमात्रं कामयते तथापि मानव एवात्राधिकारी। अन्यस्य कर्मानुष्ठाने शक्त्यभावात् कर्तृत्वमेव न संभवति।

यद्यपि स्त्रीपुरुषसाधारणं मानवमात्रमधिकारीति कथनेन स्त्रीणां स्वातन्त्र्येण यागाधिकारापत्तिस्तथापि सहैवाधिकारः दम्पत्योः न तु स्वातन्त्र्यमेकस्य कस्यचिदिति सिद्धान्तः।

अधिकारिधर्मः द्वितीयपादविषयः। अत एव सत्रफलं समग्रं सत्रकर्तॄणां सप्तदशपुरुषाणां प्रत्येकमभिसंबध्यते। तथा च तद्बोधिका श्रुतिः— 'श्रद्धाकामा उपेयुः, सप्तदशावराः सप्तविंशपरमाः सत्रमासीरन्नि'ति। प्रातिनिध्यविचारात्मकोऽस्य तृतीयः पादः। अत्र नित्यकर्मविषये स्वशक्त्यनुसारमेवानुष्ठानं विधेयम्। अत एवापरित्याज्यतायामस्य तात्पर्यम् न तु तत्साङ्गताया मङ्गहीनमपि नित्यकर्म विधेयमेव।

एवं सत्रे स्वामिनः प्रतिनिधिर्भवति असौ सत्रफलभाग् भवति न वेति संशये निषेधपक्ष एव सिद्धान्तः। अर्थादपचरितस्यैव स्वामिनो फलभागित्वं न तु प्रतिनिधेः। एवं सोमस्य प्रतिनिधित्वेन पुतीकायाः ग्रहणं न तु सोमभाव-निमित्तकः पूतीकाभिषवणविधिः। 'यदि सोमं न विन्देत पुतीकामभिषुणुया दिति' श्रुतेरेवमेव तात्पर्यम्। अर्थलोपविचारात्मकश्चतुर्थोऽस्य पादः। प्रारब्धकर्मसु अर्थलोपनिमित्तकप्रायश्चित्तादिप्रतीकारा अत्र चिन्त्यन्ते। तदयथा दर्शपूर्णमासयोः पुरोडाशादवदानानि भवन्ति मध्यादवद्यति पूर्वार्धादवद्यतीत्यादि। अत्रावदाने पुरोडाशस्य विहिते खण्डे नष्टे सति अन्यदेव द्रव्यं ग्राह्यं न त्ववशिष्टात् पुरोडाशात् पुनरवदानं कर्तव्यमिति तात्पर्यम्। पञ्चमे पादे दीक्षाविचारः। दीक्षणीयेष्टया सम्पन्नः संस्कारो दीक्षापदार्थः। ज्योतिष्टोमप्रकरणे दीक्षाकल्पाः श्रूयन्ते—'एका दीक्षा तिस्रो वा दीक्षाः चतस्रो वा दीक्षाः द्वादशदीक्षा' इति। सा चैकस्मिन् दिनेऽनुष्ठितैका, त्रिषु चतुर्षु द्वादशसु वा दिनेषु दीक्षानियमा वाङ्नियमादयोऽनुवर्तनीया इत्यस्य वाक्यस्यार्थः।

तत्र सन्देहः किं ज्योतिष्टोमे द्वादशदीक्षाकल्पा उपादेया आहोस्विद्

दीक्षासंख्यायामनियम इति । पूर्वपक्षोऽत्र द्वादशैव दीक्षाः । 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति श्रूयते । यज्ञार्थं याचनया द्रव्यसम्पादनं भृतिवननम् । तच्च नित्यम्, तत्संयोगेन द्वादशत्वपक्षोऽपि नित्य एकत्वादिसंख्यानां च विकृतिषु संबन्ध इति ।

उदाहृतवाक्यस्य दीक्षितो भृतिं वन्वीतेत्येतावत्येव तात्पर्यम् । द्वादशवचनं प्रदर्शनार्थम् । एवं च सति प्रत्यक्षश्रुता एकत्वादिकल्पा अबाधितास्तिष्ठन्ति । तस्मात् सर्वे कल्पाः ज्योतिष्टोमे विकल्पिता इति सिद्धान्तः ।

सत्रविचारात्मकोऽत्र षष्ठः पादः । सप्तदशावराः सत्रमासीरन्निति श्रुतिवाक्यम् । प्रयाजेषु चानुष्ठानप्रकारे पुरुषभेदकृतः भेदो विद्यते । कण्व काश्यपादिगोत्राणां नाराशंसो द्वितीयः प्रयाजः, इतरेषां तु तनूनपादेव । त एते भिन्नकल्पाः । तत्र संशयः, सत्रेषु किं समानकल्पानां भिन्नकल्पानां च सहाधिकारः आहोस्वित् समानकल्पानामेव सहाधिकार इति सप्तदशावरा इति निर्विशेषं सामान्यमेवोक्ताः सत्रिणः । न चोपलभ्यते भिन्नकल्पानां सहानुष्ठाननिषेधः । तस्मात् समानकल्पाः भिन्नकल्पाश्च सर्वेऽत्राधिकारिणः सत्रेष्विति पूर्वपक्षे, सिद्धान्तः भिन्नकल्पानां सहानुष्ठाने कर्म विगुणं स्यात् । यस्मिन् काले कण्वगोत्रीयस्य नाराशंसः प्राप्नोति तस्मिन्नेव काले ऽपरस्य तनूनपात् प्राप्तः । परस्परेण विपरीतकरणे कर्मवैगुण्यम्, कर्मवैगुण्ये च सत्र फलाभावस्तस्मात् समानकल्पानामेव सहाधिकार इति ।

यज्ञे किं देयं किं च न देयमिति विचारः सप्तमपादविषयः । 'विश्वजिति सर्वस्वं ददाती'ति श्रुतिवाक्यम् । सर्वस्वदानमिह विहितम् । अत्र सन्देहो भवति यावत् किञ्चिदिह स्वशब्देनाभिप्रेतम् आहोस्वित् यत्र यजमानस्य प्रभुत्वयोगः । किं पित्रादीनामपि दानं धनादिदानमिव कार्यम् पित्रादिष्वपि स्वशब्दव्यपदेशस्य तुल्यत्वादिति शंका, सिद्धान्तस्तु स्वसत्त्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलो व्यापार इह दानपदवाच्यः । स्वशब्दस्य च चत्वारोऽर्थाः भवन्ति आत्मा, ज्ञातिः, आत्मीयं, धनञ्चेति । एष्वेक एवार्थः धनपदवाच्योऽत्र गृह्यते । तत्रैव तादृशदानपदार्थस्य सम्भवात् । पित्रादि ज्ञातीनां दाने सति स्वकीयपितृत्वसंबन्धत्यागपूर्वकं परकीयपितृत्वसंबन्ध आपद्येत, सा चापत्तिर्न स्वस्य न वा प्रतिग्रहितुरिष्टा ।

एवं कृत्स्नं भूमण्डलं देयं न वेति विचारे निषेधकोटिरेत्र सिद्धान्तः। सकलानां प्राणिनां कर्मफलोपभोगभूमिः साम्राजापि ने देया, अपि तु भूखण्डः कश्चन देय इति तात्पर्यम् । अग्निविचारात्मकोऽष्टमः पादः । अधिकार विचारे साग्निनिरग्निविवेक इति तदर्थः। आहिताग्निरधिकारी अनाहिता ग्निर्वेति विचार्यते प्रजाकामं चतुर्होत्रा याजयेदिति श्रुत्या चातुर्होत्रं विहितं, तत्र किमाहिताग्निरधिकारी अनाहिताग्निर्वेति संशये एषा वा अनाहिताग्ने-रिष्टिर्यच्चतुर्होतार इति श्रुत्या स्पष्टमभिहितत्वात् अनाहिताग्निरेवाधि-कारीति निर्णयः।

अतिदेशसामान्यनिरूपणपरः सप्तमोऽध्यायः । अन्यत्र प्रणीतस्य धर्मस्यान्यत्र कार्यतः प्राप्तिरतिदेशपदार्थः।

'प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।
येन धर्मप्रदेशः स्यात् सोऽतिदेश इति स्थितिः ।।'

इति शाबरभाष्ये समुद्धृतं पद्यं न तु शबरस्वामिन इदम् ।

'प्रत्यक्षोऽप्यतिदेशोऽस्य शेषः सामनिरूपणम् ।
नामलिङ्गातिदेशौ द्वौ सप्तमाध्यायपादगाः ।। इति।'

माधवोऽत्र भणति ।

प्रथमतोऽतिदेशस्य द्वैविध्यम्, नामातिदेशो वचनातिदेशश्चेति । पुन-र्नामातिदेशस्य त्रैविध्यम् कर्मनाम, संस्कारनाम यौगिकविधिश्चेति। वचनाति-देशोऽपि द्विविधः श्रुतमानुमानिकं चेति ।

प्रथमेऽत्र पादे प्रत्यक्षोक्त्यातिदेशो विचार्यते । अयमभिप्रायः पूर्वेणा-ध्यायषट्केन प्रकृतीनामर्थात् प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासा-दीनामितिकर्तव्यता चिन्तिता । उत्तरेणाध्यायषट्केनाविहितेतिकर्तव्यता-काणां विकृतीनामपि धर्माः सन्त्युत न, यदि सन्ति तर्हि के ते कथं च तेऽनु-ष्ठेया कियन्तश्चे ते इति यथाक्रमं विचार्यते । तत्र प्रथममतिदेशः।

दर्शपूर्णमासप्रकरणे प्रयाजादय उपदिष्टाः, ज्योतिष्टोमप्रकरणे च

दीक्षणीयादयः । अत्र सन्देहो भवति किमेते प्रयाजादयो यागार्था आहोस्विद-पूर्वार्था इति । यागो गुणवान् स्यादित्युद्देशेनैवानुष्ठेया आहोस्वित् तज्जन्यापूर्वसम्पादनायेति ।

अत्र यागर्थत्वेनैवानुष्ठेयाः प्रयाजादय इति पूर्वपक्षे सिद्धान्तः यागो न मुख्यस्तस्य साक्षात् फलासाधकत्वात् । अपूर्वमेव मुख्यं साक्षात्फलसाधकत्वा-दिति फलवतः मुख्यस्यैवापूर्वस्य कृते प्रयाजादिविधानम् । तथा च करण-भूतस्य यागस्येतिकर्तव्यतारूपस्य प्रयाजादेश्चोभयोरपि प्रथममपूर्वेणैवान्वयः। पश्चात्तयोः परस्परं गुणप्रधानभावेनान्वयः । अतिदेशविशेषविचारपरः द्वितीय-पादः । नामातिदेशस्तु तृतीयपादविषयः । मासमग्निहोत्रं जुहोतीति वाक्ये अग्निहोत्रनाम्ना नित्याग्निहोत्रस्य धर्मा मासाग्निहोत्रे अतिदिश्यन्ते । आनु-मानिकातिदेशस्तु चतुर्थपाद विषयः । सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति श्रुतिः । तत्र संशयः किमस्मिन् सौर्ये कर्मणि केऽपि धर्मा अतिदिश्यन्ते न वेति । सौर्येऽवघातादयो धर्मा न प्राप्नुवन्ति प्रापकप्रमाणानां श्रुतिलिङ्गा-दीनामभावादिति पूर्वपक्षः । सौर्यो यागः उपकरणापेक्षः करणत्वात् लौकिक-भोजनवत् वैदिकदर्शपूर्णमासवच्चेति आनुमानिकातिदेशः स्पष्ट एव ।

विशेषातिदेशविचारो ऽष्टमाध्याय विषयः। तथा चात्र जैमिनीयन्याय-माला—

'स्पष्टलिङ्गास्तथास्पष्टा प्रबलादपवादतः ।
अतिदेशविशेषाः स्युरष्टमाध्यायपादगाः ।।'

स्पष्टेन लिङ्गेनातिदेशः, अस्पष्टेन लिङ्गेनातिदेशः, प्रबलेन लिङ्गे-नातिदेशः, अतिदेशापवादश्चेति पादार्थाः यथाक्रममवधारणीयाः । यथा सौर्यचरुनिर्वापकर्मणि दर्शपूर्णमासाङ्गानां मध्ये कतिपयान्येवाङ्गानि न तु सर्वाण्यतिदेष्टुमिष्टानि । एवं वाजिनयागे सौमिको विध्यन्तो नातिदिश्यते अपि तु ऐष्टिकविध्यन्त एवातिदिश्यते । एवं हविर्गणे धर्माणामतिदेशः श्रूयमाणदेवतालिङ्गेन भवति न तु क्रमलिङ्गेनेति । एवं दर्विहोम इति कर्मणो नामधेयम् न तु गुणविधिरिति दिक् प्रदर्शिताष्टमाध्यायस्य ।

ऊहाध्यायो नवमः । अतिदिष्टपदार्थस्य कार्यवशाद्रूपान्तरकरणमूहः । स च त्रिविधः मन्त्रोहः, सामोहः संस्कारोहश्च । मन्त्रोहो यथा 'अगन्म स्वः

सं ज्योतिषा भूमा' इति दर्शपूर्णमासयोः मन्त्ररूपो धर्मः फलसंबद्धः श्रूयते। देवतासंबद्धश्च यथा अग्नेरहमुज्जितिमनूज्जेषम् इति। अस्योहः विकृतियागे 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम' इत्यत्र 'अगन्म स्व'रित्यस्य स्थाने अगन्म ब्रह्मवर्चसं'मित्यूहनीयम्। अग्नेरहमुज्जितिमित्यस्य स्थाने सूर्यस्याहमुज्जिति-मित्यूहनीयम्। सपरिकरसामोहसंस्कारोहविचारपरो द्वितीयः पादः। यस्मिन् ग्रन्थे सामगास्तृचे तृचे साम एकैकं गायन्ति सोऽयं सामोहग्रन्थः स च नित्योऽनित्यो वेति संशये तस्य पौरुषेयतयानित्यत्वं सिद्धयति। एवं दर्शपूर्ण-मासविकृतिर्वाजपेयः। तत्र प्राकृतव्रीहिस्थाने नैवारश्चरुः श्रुतः। अत्र संशयः ये व्रीहिषु कर्तव्याः संस्काराः प्रोक्षणावहननादयस्ते किं नीवारेषु भवन्ति उत नेति। व्रीहिधर्माः प्रोक्षणावघातादयः संस्काराः ये दर्शपूर्णमासे व्रीहिषु कर्तव्यत्वेन चोदितास्ते विकृतियागे वाजपेये नीवारेष्वपि कर्तव्यास्तदैव तेषां चरुद्रव्यत्वं स्यादिति निर्णयः। तृतीयपादः मन्त्रोहविचारपरः। अग्नये जुष्टं निर्वपामीति देवताविषयो मन्त्र आम्नातः। व्रीहीणां मेधसुमनस्यमाना इति द्रव्यविषयको मन्त्रः प्रकृतियागे। विकृतौ पुनः सौर्यं देवता नीवाराश्च द्रव्यम्। अत्र निर्वापमन्त्रे अग्नये जुष्टं सुमनस्यमाना इत्युभयत्र ऊहनं विकृति-यागे तद्गतदेवताद्रव्यप्रकाशनाय कार्यम्। अत एवाग्नये इत्यस्य स्थाने सूर्याय एवं व्रीहीणामित्यस्य स्थाने नीवाराणामिति पठनीय ऊहात्। मन्त्रोहप्रसङ्गे समागतसमस्यासमाधानं चतुर्थपादस्य विषयः। विषयाकलनात्मकं माधवस्य पद्यमिह सर्वथा सुसंगच्छते—

'प्रकृतस्थानपतितपदार्थान्तरबाधतः ।
ऊहः प्रयोगो विकृतः ऊह्यमानतयोदितः ॥
ऊहारम्भोऽथ सामोहः मन्त्रोहस्तत्प्रसङ्गतः ।
नवमाध्यायपादेषु चतुर्ष्वेते प्रकीर्तिताः ॥' इति।

बाधो हि दशमाध्याय विषयः अतिदिष्टपदार्थस्य निवर्तनं बाध-स्वरूपम्। प्रकृतिवद् विकृतिः कर्तव्येति सामान्यतोऽतिदेशनियमः। तत्र संशयः सर्वं प्राकृतं कर्म विकृतौ कार्यमाहोस्वित् किञ्चिद् बाध्यत इति। यस्याङ्गस्य विकृतौ प्रयोजनं नास्ति तस्याङ्गस्य विकृतावनुष्ठानं न भवति। अयमप्य-ध्यायः शरभपादात्मकः। अत एव द्वारलोपस्तस्योदाहरणादिविस्तारः,

कार्यैकत्वाद् बाधः, एतस्य प्रतियोगिनः समुच्चयस्य विचारः, बाधप्रसङ्गतः ग्रहादिविचारः, एतत्प्रसङ्गेन सामविचारः, प्रकीर्णं विचारः, नञर्थविचारश्च यथायथमिह विहिताः । इत्थं बाधबाधविचारेण प्रयोज्यत्वं सुनिश्चितं भवतीति तात्पर्यम् ।

इदानीं प्रयोगविकारात्मकस्तन्त्रो निरूप्यते । तन्त्रावापौ हि एकादशाध्यायविषयः । सकृत् कृतं यत् बहूनुपकरोति तत्तन्त्रम् । यथा बहूनां ब्राह्मणानां मध्ये एको दीपः । यस्तु आवृत्त्या समुपकरोति स आवापः । यथा तेषामेव ब्राह्मणानामनुलेपनम् । तथा हि दर्शपूर्णमासान्तर्गतानामाग्नेयादीनां षण्णां यागानामेकमेव फलं स्वर्गं तन्त्रेण जायते । अस्योपोद्घातः प्रथमे पादे, तन्त्रावापयोः संक्षेपेण विचारः द्वितीये पादे, तन्त्रस्य विस्तृतं विवेचनं तृतीये पादे, आवापस्य विस्तृतं विवेचनं चतुर्थे पादे विहितम्—

'उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः ।
आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः ॥'

इति जैमिनीयन्यायमाला साधूपपादयति ।

दर्शपूर्णमासयोः प्रधानकर्मणोर्देशः कालः कर्ता चैकमेव तन्त्रेण प्रतिप्रधानम् संबध्यते, प्रयाजादिषु दर्शपूर्णमासाङ्गेषु पुनरेते देशादयः प्रधानदेशादिभ्यो भिन्ना न भवन्तीति तन्त्रस्य विषयः ।

एवं दर्शपूर्णमासेष्ट्यां षड्यागसंघरूपायां द्वौ समुदायौ दर्श इत्येकं त्रिकं पूर्णमास इति द्वितीयं त्रिकम् । सन्ति च प्रयाजादीनि ईष्टयङ्गानि । अत्र संशयः किं दर्शस्य पूर्णमासस्य च पृथगङ्गानां प्रयोग उत तन्त्रेणेति ।

दर्शपूर्णमासाख्यं कर्म यद्यप्येकफलसाधनत्वेनैकं तथापि दर्शप्रयोगात् पूर्णमासप्रयोगो भिन्न एवेत्यनुष्ठानकालभेदादेव स्पष्टम् । एवं च कालभेदेन प्रयोगभेदात् प्रयोगशेषाणामावृत्तिः प्रति त्रिकं कार्येत्यावापोदाहरणम् ।

द्वादशाध्यायविषयस्तु प्रसङ्गादिलक्षणात्मकः । अन्यत्र कृतस्यान्यत्र प्रसक्तिः प्रसङ्गः । यथा प्रासादकृतस्य दीर्घदीपस्य राजमार्गेऽप्यालोक प्रसारः ।

अस्त्यग्निषोमीयः पशुः पुरोडाशश्च—अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेदिति । अत्र पशौ चोदकप्राप्तानि प्रयाजादीन्यङ्गान्यनुष्ठीयन्ते । अत्र संशयः पशौ कृतान्यङ्गानि पुरोडाशेऽप्युपकुर्वन्ति आहोस्वित् पुरोडाशेऽन्यान्यनुष्ठेयानीति ।

पाशुकतन्त्रमध्ये पुरोडाशविधानस्य प्रसङ्गसाधनात् पशुप्रयोगेण पुरोडाशापूर्वोपकारसिद्धिः । तस्मात् पश्वङ्गैरेव प्रयाजादिभिः पुरोडाशसिद्धौ न तत्राङ्गान्तरापेक्षेति सिद्धान्तः ।

एवं बिहारशब्दवाच्यमग्नित्रयं विद्यते गार्हपत्यदक्षिणाहवनीयरूपम् । अत्र संशयः किमस्मिन्नग्नित्रये लौकिकानि कर्माण्यनुष्ठीयन्ते आहोस्वित् वैदिकानि आहोस्वित् सर्वाणि लौकिकानि वैदिकानि चेति ।

गार्हपत्ये हवींषि श्रपयन्ति, दक्षिणाग्नावन्वाहार्यं पचन्ति, आहवनीये जुह्वतीत्येतादृशैः प्रत्यक्षवचनैर्निराकाङ्क्षाणां गार्हपत्यादीनां लौकिकार्थत्वं नोपपद्यते । तस्माद् वैदिकाग्निहोत्रादिकर्मार्थमेवाग्नित्रयमिति तन्त्रिनिर्णयः ।

समुच्चयचिन्ता तृतीयेऽत्र पादे प्रवर्तते । अष्टरात्रे प्रथममहः विश्वजिन्नामकं, ततः षडहो ज्योतिर्नामकं ततोऽष्टममहः अभिजिन्नामकं भवन्ति । विश्वजिन्नामके प्रकृतियागे परिधानाय वत्सत्वक् विहिता, सा च विश्वजिदिति नामसाम्येनाष्टरात्रस्य प्रथमेऽहनि विश्वजिन्नामकेऽतिदेशेन प्राप्ता । ज्योतिष्टोमे च परिधानार्थमहतं वासो विहितं तच्च ज्योतिरिति नामसाम्येनाष्टरात्रस्य द्वितीयभागे षडहेऽतिदेशेन प्राप्तम् । पुनरष्टरात्रस्यान्तिमे भागेऽभिजिन्नामकेऽपि वास एवातिदेशेन प्राप्तम् । सर्वत्र नामातिदेशेनैव परिधानस्य प्राप्तिः । अत्र भवति संशयः, किं वत्सत्वक् धार्यायवाहतं वासो धार्यमिति विकल्पः । अथवा द्वयमपि धार्यमिति समुच्चयः ? अधः परिधानाय वासो योग्यतरं भवति ऊर्ध्वाङ्गप्रावरणाय च वत्सत्वग् योग्यतरा भवतीति द्वयोरपि धारणं कार्यमिति समुच्चयः ।

एवं विकल्पो यथा दर्शपूर्णमासयोरनुष्ठाने प्रायश्चित्तद्वयं श्रूयते—वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौणमासीं वा अतिपात्य अग्नये पथिकृते पुरोडाशमष्टकपालं निर्वपेत् यो दर्शपूर्णमासयाजीसन्नामावास्यां

वा पौर्णमासीं वातिपातयेदिति च। अत्र संशयः किं प्रायश्चित्तयोर्विकल्प आहोस्वित् समुच्चय इति। विहिताकरणजन्यदोषसमाधानं दृष्टमेव प्रयोजनं प्रायश्चित्तयोरिति विकल्प एव। यथा यवव्रीह्योरन्योन्यनिरपेक्षत्वाद् विकल्प इति। तथा च पादार्थसंग्रहश्लोकः माधवस्य—

'प्रसङ्गस्तन्त्रिनिर्णीतिः समुच्चयविकल्पने।
द्वादशाध्यायपादार्था इति पादार्थसंग्रहः॥' इति।

एवं द्वादशाध्यायगतपादेष्वभिहितानां विवेच्यानां संक्षेपेण दिग्दर्शनं विहितम्।

उपसंहारेऽत्र विनिवेदनीयं यदिह प्रमादाद् यथाक्रमं मुद्रापणकाले तन्त्रवार्त्तिकाजितयोः पाठः पत्रैकपरिमितोऽवसितोऽतिष्ठत्। अतस्तस्यात्र यथास्थानं २८०क इतिरूपेण पृथक् पत्रे मुद्रापयित्वा संयोजनं कृतं ग्रन्थ-सौन्दर्यापहारकमप्येतद् ग्रन्थत्रुटितनिवारकमिति मदीयात्र बुद्धिः। एवमेव प्रूफसंशोधनादिजन्या अन्यविधा अपि त्रुटयो विपश्चिदपश्चिमानां दृष्टिपथा-तिथिर्भवितुमर्हन्ति, तत्र क्षमासाराणां साधुस्वभावानां कोविदानां समक्षं क्षमा-याचनैव मादृशां शरणम्। 'को न मुह्यति वचःपथे चरन्निति कवचमस्माक-मभिनवाचस्पतिमिश्रवचः। अथवा 'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः' इति कुमारिलभट्टपादस्यैवोक्तिरिह मम भवतु शरणम्।

इदानीमहं पुण्यं कर्तव्यमाचरामि साहाय्यमिहाचरतां सारस्वत-बन्धूनां कृते यथायथं कृतवेदितां विज्ञाप्य। सन्ति चात्र संस्मरणीयाः गुरुचरणाः प्रो० श्री अनन्तलालठाकुरमहाशयाः, येषामाशीर्वचांसि मम पाथेयं लोकयात्रायामिति प्रणतिपरम्परया तान् सभाजयामि। कल्याणमित्र-मस्माकं विद्वद्वर्यः डा० गयाचरणत्रिपाठिमहाभागोऽस्य विद्यापीठस्य प्राचार्यः, डा० शिवकुमारमिश्रमहाशयः वरिष्ठप्रवाचकः, पण्डित श्री जीवेश्वरझा शर्मा मातृकासंग्रहाध्यक्षः, पण्डित वनमाली विस्वालशर्मा व्याकरणा-ध्यापकः, श्री रामानन्द थपलियाल शर्मा च सहायक पुस्तकालयाध्यक्षः, श्री उपेन्द्रत्रिपाठी शाकुन्तलमुद्रणालयस्वामी चात्र मम कृतवेदिताया भाजनानि भवन्ति। एतैः सत्परामर्शदानेन पुस्तकहस्तलेखदानेन सधैर्यं मुद्रणे च मामु-

पाकारीति । अन्ते च शुभाशीर्वचोभिरभिनन्दामि च डा० कमलनयनशर्ममहोदयान् जयपुरकेन्द्रीयसंस्कृत विद्यापीठेऽधुना प्रवाचकपदमलङ्कुर्वतः, कु० अर्चनाचतुर्वेदि शुभोदयामस्माकं विद्यापीठ एव शोधसहायकपदे कार्यरताम्, डा० रामकिशोरझा शर्माणं चेहत्यम् । एतैः यथासम्भवमाचरितं साहाय्यं ममेति समुल्लेखनीयतां यान्त्यत्र । अन्ते पुनः

दूरादसूयां निर्धूय कृपां कृत्वा ममोपरि ।
विलोकनीयो ग्रन्थोऽयं मीमांसारसिकैर्बुधैः ।। इति

महाशिवरात्रिः २३।२।९०
इलाहाबाद

विदुषामाश्रवस्य
किशोरनाथझाशर्मणः

---

# तन्त्रवार्त्तिकम् ।

## द्वितीयाध्यायस्य प्रथमः पादः ।

### [भावार्थाधिकरणम्]

संबन्धं तावल्लक्षणद्वयस्य करोति । तत्र प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमित्युक्तम् । तत्कुतः, नैव हि प्रथमेऽध्याये सूत्रकारेण किञ्चन लक्षणेन प्रमाणादेः स्वरूपमुपवर्णितम् । तन्नाम लक्षणमुच्यते, येन तद्व्यतिरिक्तेभ्यस्तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते । न चेह प्रमाणदीनां लक्षणमुक्तम् । अनुमानादीनि तावन्नैव सूत्रितानि । प्रत्यक्षमपि धर्मं प्रत्यनिमित्तत्वेनोपन्यस्तं न लक्ष्यत्वेनेति व्याख्यातम् । न च शब्दोऽपि कश्चिद्धर्मप्रमाणभूतो लक्षितः, अस्मिन्नेवाधिकरणे तस्य लक्ष्यमाणत्वात् ।

### अजिता

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमिति *भाष्यमवयवशो व्याचिख्यासुः* संक्षेपव्याख्ययोपक्षिपति — संबन्धं तावल्लक्षणद्वयस्य करोतीति ।

*भाष्याक्षराननुभाषणं* च क्रमादुपक्रमविषयत्वसिद्धेस्तावच्छब्देन चास्य दर्शितत्वात् करिष्यत्यध्यायार्थव्याख्यानग्रे संबन्धं तावत्करोतीति तावच्छब्दस्यार्थः । संप्रत्यवयवानामर्थे[थं] निरूपयिष्यन्नाक्षिपति तावत् — तत्र प्रमाणलक्षणं वृत्तमित्युक्तमिति । हेतुमाह — नैव हीति । अध्यायार्थो ह्यनुभाषणीयः । सौत्रश्चार्थोऽध्यायार्थो भवति । नार्थान्तरं *भाष्यकारा*द्युक्तम् । तेनोक्तम् — सूत्रकारेणेति । प्रमाणादेरिति । व्याख्यास्यति अनुमानादीनि तावन्नैव *सूत्रकारेण* सूत्रितानीति किं तेषां निषेधेन ।

यत्तु प्रमाणानामादिः प्रत्यक्षं यत् सूत्रणादितराण्यपि सूत्रितप्रायाणि भवन्ति, तदपि धर्मं प्रत्यनिमित्तत्वेनोपन्यस्तं न लक्षणत्वेनेति ।

अथ वा विध्यर्थवादादिष्वपि परिहारदानात् तेषामादिशब्देन ग्रहणमिति चोदनालक्षण [मी० सू० १।१।२।] सूत्रेणाधिकृतस्य प्रमेयस्य धर्मस्य प्रमाणस्वरूपाभिधानाद् [1]वक्तुमिव लक्षणमित्याशङ्क्याह — तन्नाम लक्षणमिति । प्रमाणविशेषविधिरयं नाप्रतीतप्रमाणस्वरूपविधिः । [2]तदेतद् विवृणोति[3] — न च शब्दोऽपीति । अस्मिँस्तु अधिकरणे यजेतेत्याख्यानं[4] फलभावनाकरणत्वेन पदान्तरो[5]पात्तकारकोत्पादितं धात्वर्थं [6]विरुद्धधर्मस्य प्रमाणं भवतीति निरूपणा[7]च्चोदनाया रूपं लक्ष्यत इति ।

---

१. उक्तमिव पू० मा० ।

२. आधारमातृका इत एवारभ्यते । इतः प्राक् तत्र नोपलभ्यते ।

३. विवृतम् आ० मा० ।

४. °त्याख्यातम् आ० मा० ।

५. °रोपनीत° आ० मा० ।

६. °विवधद्धर्मस्य आ० मा० ।

७. °चोदनारूपं प्रमाणं आ० मा० ।

यदपि च *वृत्तिकारेण* सर्वेषां लक्षणं प्रदर्शितं न तदध्यायार्थत्वेनोपसंहर्तुं युक्तम् । सूत्राध्यायार्थानुपसंहारात् । कथं च समस्तलक्षणार्थव्यतिरिक्त एवार्थे सूत्राणि क्षीयेरन् । अपि च [1]*वृत्तिकारेण* योऽप्युक्तः षट्कः प्रत्यक्षपूर्वकोऽपरीक्ष्यतया सोऽपि नैव लक्षणगोचरः, लोकप्रसिद्धार्थानि हि तान्यपरीक्ष्यत्वेनोक्तानि न प्रथमाध्यायविषयत्वेनोपसंहारमर्हन्ति । तस्माद् यत् प्रथमाध्याये वृत्तं तदालोच्यैतद् भाष्यं नेयम् । तत्र प्रमाणलक्षणं तावच्चोदना-

*वृत्तिकार* मतेनाध्यायार्थत्वमङ्गीकृत्य [1]प्रमाणानां लक्षणस्यासौत्रत्वेनानुपसंहार्यत्व उक्ते किमिति *वृत्तिकार*व्याख्यात एव सूत्राणामर्थो न स्यादित्याशङ्क्याह—कथं चेति । लक्षणार्थस्तावत् प्राधान्येन प्रतिज्ञातं चोदना[2]प्रामाण्यं धर्मे । तच्चेतर[3]निमित्तनिरपेक्षत्वे चोदनायाः प्रतिपादिते प्रतिपादितं भवतीत्येतावतो लक्षणान्तर्भावः । तत्र निमित्तपरीष्टिप्रतिज्ञापुरस्सरमेतत् प्रतिपादनं विहाय यद्यन्य[4]परीक्षामिषेण प्रमाणानां लक्षणमनन्तरफलादर्शनाच्च चोदनाव्यभिचारस्तत् समाधानं च सूत्रैरनु[5]ष्ठीयेत । ततो लक्षणार्थादन्यत्रैव सूत्राणि क्षीयेरन् लक्षणार्थप्रतिपादनाय न किञ्चिदवशिष्येतेति । अपि च *वृत्तिकार*मतेनापि सूत्रेषु व्याख्यायमानेषु नाध्यायार्थत्वं प्रमाणानां[6] लक्षणस्येत्याह—अपि चेति । लक्षणप्रतिपाद्यो हि लक्षणार्थो भवति नान्यतः सिद्धो हेतुत्वेनाभिहितः । अत्र चेदृशं प्रत्यक्षादिलोकसिद्धमतो न परीक्षणीयमित्येवं यः प्रमाणषट्क उक्तो नासौ स्वरूपप्रतिपत्त्यर्थमुक्तो भवति । किन्तु अपरीक्ष्यतया प्रतीयतामित्युक्तः, अतो न स्वरूपेण लक्षणगोचर इति । तस्मादस्य *भाष्यस्या*नुरूपेऽर्थेऽलभ्यमानेऽनुवादत्वेन यथोक्तविषयत्वात् श्लिष्टयापि व्याख्यया तत्रैव योजना कार्येत्याह — तस्माद् यत् प्रथमेऽध्याय इति । तद् योजयति — तत्र प्रमाणलक्षणं तावदिति । प्रमाणलक्षणमित्येतदभिधानं चोदनालक्षणाभिधानाश्रयं तदर्थत्वाश्रयं वा । प्रमाण-

---

१. भर्तृप्रपञ्चेन ।

१. प्रमाणलक्षणस्या° आ० मा० ।

२. चोदनायाः प्रामाण्यम् आ० मा० ।

३. तच्चेतरानिमित्तत्वेऽनपेक्षत्वे च आ० मा० ।

४. यद्यपि परीक्षा° आ० मा० ।

५. °रनुस्रियते आ० मा० ।

६. प्रमाणलक्षणस्य आ० मा० ।

लक्षणाश्रयगस्य, विध्यादितत्त्वनिर्णीतिः प्रमाणेनैव स्थिता । समस्तो हि प्रथमः पादश्चोदनासूत्रपरिकरः । तत्र च धर्मस्य चोदनालक्षणत्वमुक्तम् । अतोऽत्र-धारितार्थलक्षणशब्दसाहचर्यात् प्रमाणशब्दः प्रतिपाद्यत इत्येवं व्युत्पाद्य धर्मविषय एव व्याख्येयः । सत्यपि प्रमेयमात्रवाचित्वे, अस्मिन् शास्त्रे जिज्ञास्यत्वेन धर्मः प्रमेयः प्रक्रान्त इति स एव गृह्यते । अथ वा करणमेव प्रमाणं तस्यैव लक्षण-मुक्तम् । यद्यपि च सर्वप्रमाणानां तन्नोक्तं तथापि धर्मप्रमाणस्य चोदनात्वं लक्षणमित्येतावतैवोक्तं मन्यते । न चावश्यं सर्वात्मनैव लक्षिते लक्षणत्वम् ।

**लक्षणं चात्रानुभाषितं चोदनालक्षणाभिधानाश्रयं विध्यादि[1]तत्त्वनिर्णीतिश्च यात्रानुभाषिता सा प्रामाण्येनैव संस्थिता । प्रथमेऽध्याये तदतिरिक्तेन रूपेण तस्यास्तत्रास्थितत्वादिति ।**

**कथमौत्पत्तिकत्वादिहेतुप्रसाध्योऽर्थश्चोदनालक्षण[2]सूत्राश्रय उच्यते । कथं चासावनेनानुभाष्यत इत्याशङ्क्याह — समस्तो हीति । प्रतिज्ञो[3]प-स्थापितमेव ज्ञानं हेत्वादिभिः प्रमाणतां नीयतेति । तेन प्रतिज्ञाश्रयमेव प्रमेयं भवति । शक्यते चानेनानुभाषितुमित्युक्तं—तत्र च धर्मस्येति ।**

**अथ वा श्लोकोत्तरार्द्धे द्वितीयादिपादप्रतिपाद्यानामनुकीर्तनात् प्रथमपादविषयानुकीर्तनमिदं लक्ष्यते । कथं चोदनालक्षणाश्रयमुच्यत इत्यत्राह — समस्तो हीति । धर्मस्य प्रमाणस्यैतावतैवाभिधानेन प्रमाण-लक्षणमुक्तं [4]गम्यते । यतो धर्मप्रमाणमेव प्रकृतत्वात् प्रमाणशब्देनोच्यते ।**

**यद्यपि धर्मस्य चोदनाप्रमाणमित्युक्तं न प्रमाणस्य चोदनात्वं लक्षण-मिति । तथापि अर्थादिदमुक्तमेव तथा यद्यपि व्यभिचारस्य दूषित-त्वादभिमतप्रामाण्यवेदाख्यागमविशेषसमर्पकं चोदनात्वं[5] न भवति तथा-प्यचोदनातो व्यवच्छेदकत्वमात्रेण लक्षणमित्युक्तम् । एतावता क्लिष्टत्वं मन्यते शब्देन दर्शितम् । व्यवच्छेदकत्वमात्रं च लक्षणशब्दप्रवृत्तिनिमित्तं न लक्ष्यगतसकलरूपोपादानमित्याह — न चावश्यमिति ।**

---

१. विध्यादिकत्व आ० मा० ।
२. तत्राश्रय आ० मा० ।
३. प्रतिज्ञोत्थापितमेव आ० मा० ।
४. मन्यते आ० मा० ।
५. चोदनापदं आ० मा० ।

विशेषरूपाणामानन्त्येन सर्वलक्षणाभावप्रसङ्गात् । अपि चौत्पत्तिकसूत्रेण विशेषोऽप्ययुक्त एव येनागमविशेषो गम्यते । अथ वोपन्यस्तस्य चोदनात्मकस्य प्रमाणस्य लक्षणं प्रामाण्यकारणमित्युपसंहारः । तथा यद्यपि विधेरिदं रूपमिदमर्थवादस्येदं मन्त्रस्येत्येवं नोक्तं तथापि धर्मं प्रत्युपयोगाभिधानात्तत्त्वं निर्णीतम् । अवसराभावात्तु तत्स्वरूपं न निर्दिष्टम् । श्रुतिमूलत्वं ज्ञानस्य स्मृतिप्रामाण्ये तत्त्वम् । नामधेयस्य चोदनान्तर्गतत्वात् प्रमाणत्वम् । संदिग्धार्थनिर्णये वाक्यशेषसामर्थ्ययोः प्रामाण्यमित्येवं समस्तमध्यायं प्रामाणलक्षणमाचक्षते । तन्न प्रस्मर्तव्यमिति । अविस्मृतप्रामाण्यो हि भेदादिप्रतिपादनम् **'अविशेषादनर्थकं हि स्यात्'** [मी० सू० २।२।२] इति क्रियमाणं सहते । अन्यथा ह्यनर्थकं

**अथ वा प्रतीयन्त एवौत्पत्तिकत्वादिहेत्वेकवाक्यतया[1] वेदाख्यागमचोदना इत्यव्यभिचार इत्याह** — अपि चौत्पत्तिकसूत्रेणेति ।

तथापि धर्मं प्रत्युपयोगाभिधानादिति । **विधेरनुपयोग[2] औदुम्बराधिकरणे दर्शितः ।**

**अथ वा त्रिविभागस्य वेदस्य मन्त्रार्थवादयोस्त्र्यंशभावनाविध्येकवाक्यताभिधानात् तदतिरिक्तस्य भागस्य विधिशब्दात् विधेयस्य त्र्यंश भावनाभिधानेनोपयोगो दर्शितो भवति । नामधेयस्यापि विधित्वान्तर्गतिप्रतिपादनेनैवानुकीर्तितः । तन्निर्वाहाया[3]नुविशेषविचारो गुणविधिर्नामधेयमित्यनेनेति । विध्यर्थवादमन्त्राणां स्थिता पौरुषेयत्वानां धर्मं[4] प्रमितावुपयोग मात्रप्रतिपादनेन प्रतिपादितोपयोगांशत्रयात्मिकानां स्मृतीनां ज्ञानस्य समूलताप्रतिपादनेन प्रामाण्य[5]तत्त्वं निर्णीतमित्याह**—श्रुतिमूलत्वं ज्ञानस्येति । **नामधेयस्य त्र्यंशत्रयानन्तः पातित्वेनाशङ्किता प्रामाण्यस्य विध्यन्तर्भाववर्णनेन प्रामाण्यतत्त्वं निर्णीतमित्याह** — नामधेयस्येति । **एवमर्थवादस्य विधेश्च पदार्थसामर्थ्योपायस्य सन्दिग्धार्थनिर्णयेऽपि अपरस्मिन् प्रामाण्यतत्त्वं निर्णीतमित्याह** — सन्दिग्धार्थनिर्णय इति । **तेन [6]सूक्तं — विध्यादितत्त्वनिर्णीतिः प्रामाण्येनैव स्थितेत्यर्थः । एतदेव मीमांसकप्रसिद्धचा द्रढयति** — एवं समस्तमध्यायमिति ।

---

१ °तया चोदनाविशेष इत्य° आ० मा० । २. विधेरुपयोग आ० मा० ।
३. तन्निर्वाहाय तु° आ० मा० । ४. धर्मं प्रत्युपयोग० आ० मा० ।
५. प्रामाण्यं निर्णीतमिति आ० मा० । ६. साधूक्तम् आ० मा० ।

नामेत्येव प्रत्यवतिष्ठेत । ननु प्रधानाप्रधानचिन्ता तृतीयचतुर्थयोर्विषयः कथमत्रोपन्यस्यते । केचिदाहुः, इह द्रव्यकर्मणोरुत्तरत्र तु कर्मणामेव गुणप्रधानत्वविचारादपौनरुक्त्यमिति । तदयुक्तम् । 'द्रव्यगुणसंस्कारेषु' [मी० सू० ३।१।३] इत्यत्र सर्वाभिधानात् । तेनैवं वाच्यम्—

लक्षणार्थोऽत्र तत्त्वेन भेदः शब्देतरादिभिः ।
तमन्वपूर्वभेदोऽपि प्राधान्यं तत्प्रसिद्धये ॥

कर्मभेदस्तावदौत्सर्गिको लक्षणार्थस्तदपवादत्वेनाभेदः । तदनु निष्पादिनौ त्वपूर्वभेदाभेदौ । तत्र प्रतिकर्मभेदमपूर्वभेदप्रसक्तौ तृतीयसिद्धः प्रधानाप्रधानविचारः पुनरपवादत्वेनारप्स्यते । सत्यप्यवहन्त्यादीनां शब्दान्तरादिभिर्भेदे कर्माकाङ्क्षितदृष्टप्रयोजनपर्यवसानान्न क्रियाजन्यापूर्वान्तरोत्पत्तिः । यत्तु नियमापूर्वं तत् क्रियाकृतं न भवतीति न तथा व्यपदिश्यते । तेन यत्रैव द्रव्यादीनि प्रति क्रियाणां प्रधानत्वं तत्रैव तद्भेदनिमित्तापूर्वभेदसिद्धिः । अस्य च विवेकार्थं वद्

तृतीयचतुर्थयोरिति । चतुर्थेऽपि दर्शपूर्णमासयोरिज्यामात्रं प्रधानमुताग्नेयादीनि पयोऽन्तानि प्रधानानीतराण्यङ्गानीत्यादि क्रत्वर्थपुरुषार्थविवेकाय [1]विचारयिष्यत इति । तमन्वपूर्वभेदोऽपि । लक्षणार्थ इति । फलापवर्गित्वात् क्रियाणां नान्तरेण फलभेदं भेदः स्यादिति ततोऽपूर्वभेदावसायः । स च लक्षणार्थो धर्माणां व्यवस्थितये [2]विवक्षितत्वादिति । क्रियाजन्येति । जन्यं जननीयं यदर्था क्रियेत्यर्थः । [3]तन्नास्ति दृष्टप्रयोजनानुनिष्पादि तु नियमादृष्टमुत्पाद्यमानं क्रियायास्तत्प्रयोजनत्वेनाविवक्षितत्वात् न विधीयते न निषिध्यते वा । तदिदमुक्तम् — यत्तु नियमापूर्वमिति । क्रियाकृतमिति । ईप्सितकर्मनिष्ठायाः वाक्यार्थं हि विचारयन् यत्क्रियाया भावयेदिति भावनाकर्म विधिपरिगृहीतम् तत् क्रियाकृतमित्याह— न तथा व्यपदिश्यत इति । सत्येवान्वयेऽविवक्षितत्वात् अव्यपदेशं वदति । तद्भेदनिमित्तापूर्वभेदसिद्धिरित्यपि क्रियाभेदस्य निमित्तं क्रियाभेदो वा निमित्तम् यस्येति भावना कर्मैवापूर्वं परिगृहीतमनुनिष्पादितोऽनेवं[4]भूतत्वादिति । पूर्वापराध्यायसंबन्धप्रसिद्धयेऽपराध्यायार्थसंक्षेपोक्ति *भाष्यकारीयां* व्याख्यास्यन्नाह — अस्य च विवेकार्थमिति ।

---

१. चिन्तयिष्यत इति आ० मा० ।    २. °येऽपेक्षितत्वादिति आ० मा० ।
३. तत्र यदस्ति आ० मा० ।    ४. ऽनेवं विधत्वादिति आ० मा० ।

गुणप्रधानलक्षणं वक्ष्यते तदपवादार्थं 'धर्ममात्रे तु' [मी० सू० २।१।८।] 'स्तुतशस्त्रयोः' [मी० सू० २।१।१३।] इति वाधिकरणद्वयं प्रस्तोष्यते । ततश्चाख्यातद्वैविध्ये विचारिते प्रसङ्गात् तृतीयप्रकारमभिधायकत्वं प्रतिपादयितुं मन्त्रप्रस्तावः, तल्लक्षणदोनि तु प्रसक्तानुप्रसक्तेन यावत् पादसमाप्ति । ततः शब्दान्तराभ्यासाभ्यां भेदमुक्त्वा पौर्णमास्यधिकरणेनाभ्यासापवादः करिष्यते समुदायानुवादत्वात् । ततस्तदपवादार्थमुपांशुयाजाघाराग्निहोत्रपशुसोमाधिकरणानि । ततः संख्यासंज्ञागुणैर्भेदः । तावच्च गुणगतो विचारो यावत् प्रकरणान्तराधिकरणम् । ततस्तन्न्यायानुवृत्तिराशाखान्तराधिकरणात् । तत्र च षट्कातिरिक्तभेदकारणव्युदासः संज्ञाभ्यासगुणप्रक्रियाणां चाशङ्कानिवृत्तिरित्येतावान् भेदलक्षणार्थः । एष एव चार्थोऽवश्यं वक्तव्योऽङ्गाङ्गित्वाद्यवधारणार्थम् । न चान्यस्येदानीमवसरोऽस्तीत्ययमेवाध्यायसंबन्धः । कुतः —

शेषशेष्यादयः सर्वे कर्मभेदनिबन्धनाः ।
कार्ये ज्ञातेऽधिकारः स्यादुपदेशेऽतिदेशधीः ॥

प्राक् तावत् प्रमाणलक्षणाद् वेदार्थविचारात्मकत्वान्न कस्यचिद्भेदलक्षणादेः प्रस्ताव इत्युत्तरकालमारम्भः । तत्रापि शेषशेषित्वं प्रयोजकाप्रयोजकत्वं क्रमश्च भिन्नानां भवतीति न भेदलक्षणात् प्रागारभ्यते । तथाधिकारः कर्मस्वरूपेऽवधारिते तद्योग्यतया शक्यो निरूपयितुमिति पश्चापि लक्षणानि प्रतीक्षते । तथोत्तरः षट्कोऽतिदेशविषयत्वादुपदेशज्ञानाधीनसिद्धिः समस्तः समस्तं पूर्वषट्कमपेक्षते । ततश्च परिशेषसिद्धोऽयं भेदलक्षणस्य संबन्ध इत्यत्रारभ्यते । षड्विधः कर्मभेद इति साधनभेदोपचारात् । वक्ष्यमाणसूत्रक्रमानुरोधान्नामधेयं संख्यानन्तरं पठितव्यं सदनादरादन्ते पठितम् इतिकरणो हेत्वर्थः षट्विधः कर्मभेद एतैः कारणैरिति यावत् । अथ वा करणे भेदशब्दं व्युत्पाद्य सामानाधिकरण्येनैव शब्दान्तरादीनि व्याख्येयानि । संज्ञाशब्दान्तरयोः संख्यागुणयोश्चापौनरुक्त्यं स्वस्थाने वक्ष्यामः । सर्वदा चैषां भिन्नविषयत्वान्न श्रुत्यादिवद्

न [1]चान्यस्येदानीमवसरोऽस्तीत्यत्र हेतुप्रश्नः—कुत इति । साधनभेदोपचारादिति । भेदस्य स्वतो विधानासंभवादिति । भिन्नविषयत्वादिति । एकार्थत्वेन [2]शीघ्रप्रमाणप्रमिते भेदे बिलम्बितस्य कृतकरत्वेन तत्राप्रामाण्याद्

१. न चान्यस्ये° आ० मा० । २. शीघ्रं प्रतीते भेदे आ० मा० ।

भिन्नविषयत्वमिति । प्रकृतानुनिष्पाद्य पूर्वभेदानुसारसिद्ध्यर्थमिति । यदा बलाबलचिन्ता भविष्यतीति तद्भेदप्रतिपादनमात्रं तात्पर्येण । अन्यदुपोद्घात-प्रसक्तानुप्रसक्त्यादिना । तत्र —

चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते ।
प्रसक्तानुप्रसक्तादि प्रस्तुतादुपजायते ॥

यथेदमेवाधिकरणं प्रकृतानुनिष्पाद्यपूर्वभेदानुसारसिद्ध्यर्थमुपोद्घातत्वेन भविष्यति कतरस्मात् पदात् फलेन संबध्यमानादपूर्वभेदाभेदावनुगन्तव्याविति । यदा निरवयवौ वाक्यवाक्यार्थौ स्यातां ततः किं प्रतिपदं धर्म इत्यादिरसंबद्ध एव विचारः स्यादत आह — वाक्ये च पदानामर्था इति । अत्रापि चोद्यते—

चोदनालक्षणत्वेन वाक्यार्थोऽवस्थितो यदा ।
धर्मः प्रतिपदं वाच्यः कथमाशङ्क्यते तदा ॥

यदि हि धर्मस्वरूपमभिधीयेत ततः किं पदेन पदेनोच्यत इति विचारो युज्यते लाक्षणिके त्वयुक्तः । तदुच्यते—

धर्मत्वं फलसंबन्धात् पदार्थस्यैव युज्यते ।
तत् किमेकस्य सर्वेषामिति युक्ता विचारणा ॥

न चात्र यो धर्मः स किं पदेन पदेनोच्यत इत्येवं विचार्यते । किं तर्हि यः पदेन पदेनोच्यते स किं फलसंबन्धोत्तरकालं वाक्यार्थात्मना गम्यमानो धर्मो भवति, अथेतरपदार्थानुगृहीत एकः पदार्थ इति । तथा च सर्वैरेकस्य धर्मत्वं प्रतिपादितं भवति । साक्षात्फलसाधनमात्रस्य धर्मत्वाभ्युपगमात् । न तु सर्वेषा-मेकः कश्चिदर्थोऽस्ति यः सर्वैरेक इत्येवमाश्रीयेत । यच्च फलपदेन सह संबध्यते तस्यार्थं धर्ममपूर्वसाधनं च मन्यन्ते । तेन किं सर्वाणि पदानि फलेन संबध्यन्ते

हि कर्मणो पूर्वं तदा कर्मभेदेनापूर्वभेदोऽनुस्रियत इति । चोदनालक्षण-त्वेनेति प्रवर्तकं वाक्यम् । चोदना वाक्यार्थश्च [1]पदार्थैर्लक्ष्यते न [2]पदैरना-धीयत इति ।

ननु यदाप्येकस्य फलसाधनत्वं तदाप्यन्येषां फलवदुपकारित्वेन धर्मत्वान्न सर्वैरेको गम्यते । पदार्थैकत्वे ह्येतत् स्यादित्याशङ्क्याह — साक्षात् फलसाधनमात्रस्येति । सामान्येन स्थापितस्यार्थस्य विशेषविचारः संगच्छते । तेन [3]कस्य धर्मत्वमित्युपक्रान्तमनेन तु कुतोऽपूर्वमिति विव-क्षितम् । तेनाह — अपूर्वसाधनं चेति ।

१. पदार्थो लक्ष्यते आ० मा० ।　　२. न पदैरभिधीयत इति० आ० मा० ।
३. तस्य आ० मा० ।

किं वैकमिति विचारः । किं प्राप्तं प्रतिपदमिति । कुतः —

ऐकरूप्येण संबन्धः प्रधानेन च सिध्यति ।
तस्मात् फलपदेनैव सर्वं संबध्यते पदम् ।।

यदि हि विशेषो गम्येतेदं फलसंबन्धयोग्यमिदं नेति, ततः किञ्चिदेव संबध्येत । अनवगम्यमाने तु सर्वाणि पदानि फलेनैव संबध्यन्ते । यदि चैकं फलसंबन्धीतराणि च तत्संबन्धीनीति कल्प्यते ततो वाजपेयाधिकरणन्यायेनैकस्य फलं प्रत्युपादानविधानं गुणभावादितरत्तु प्रत्युद्देशानुवादप्राधान्याद् वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । सर्वेषां तु फलं प्रत्युपादीयमानानामैकरूप्यात् तन्त्रसंबन्धोपपत्तिः । सर्वश्च सति संभवे गुणमतिलङ्घ्य प्रधानेनैव नित्यं संबध्यते । तस्मात् सर्वेषां फलसंबन्धाद्धर्मत्वं, तत्र तु किं सत्त्रिवत् प्रत्येकं कृत्स्नं फलं साधयन्ति, अथ दर्शपूर्णमासवत् संहत्य, तथा किं विकल्पेन समुच्चयेन वेत्यादि

तत्र तु किं सत्त्रिवदिति । किमेषां प्रतिसाधनं फलं भिन्नोत्पत्ति सत्त्रिफलवदुत सकृदुत्पत्ति दर्शपूर्णमासफलवद् संहत्येति । एकफलान्वयमात्रेणोक्तम् । तथैकमपि फलं प्रति किं दर्शपूर्णमासवत् समुदितानां[1] फलसाधनत्वमुत विकल्पितानामिति । अथ वा दर्शपूर्णमास वदिति समुच्चितानामेवैकफलसाधनत्वमुक्तम् । साधनांशे पक्षान्तरो[2]त्थापनं विकल्पितानां वेति । सर्वथा त्रय एव पक्षा इति । ऋद्धिकामाः सत्रमुपासीरन्नित्यादिषु सन्देहः । किं तस्य तस्य तत्फलमुत सर्वेषामेकं फलम् प्रत्येकं तदवयवा इति । तत्रानेकसाध्ये कर्मणि एकस्य कर्तृत्वानुपपत्तेः पर्षदः कर्तृत्वं कर्तुश्च फलम् । अतः पर्षत्फलेनाधिक्रियत इति ।

अत्र चोत्तरं पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् । एकैकस्मात् पुरुषात् भावनाकर्तुः पुरुषेणार्थितस्य सिद्धिः । कर्तुश्च फलम् । अतश्च तस्य तस्यर्द्धिफलेनाधिकारः स्यात् । ऋद्धिकामा इत्युद्दिश्यमानत्वात् अविवक्षितसाहित्यात् फलार्थिन[3] उद्दिश्य यागः साधनत्वेनोपादीयते कर्तृत्वमप्येषामासीरन्निति । पृथक् निवेशिना बहुत्वेन[4] भेदितं तेषां तु यागनिर्वृत्तावुपादीयमानत्वात् विवक्षितसाहित्यानामेकस्मिन् यागे प्रत्येकं कर्तृत्वमनुभवतां प्रत्येकं फलमवसीयते । कर्तृणां चात्र परस्परापेक्षा न सापेक्षाणां कर्तृत्वमिति ।

---

१. समुच्चितानां आ० मा० ।　　२. पक्षान्तरोपस्थानम् आ० मा० ।
३. फलिन उद्दिश्य आ० मा० ।　　४. बहुवचनेन आ० मा० ।

यथेष्टं कल्पनीयम् । तत्र फलभूमगरीयस्त्वादेकशब्दोपादानाभावात् सत्रिवत् प्रत्येकं साधनशक्त्यवगमात् सर्वेभ्यः पृथक्फलमिति पक्षः । अथ वारुणादिन्यायेनैकवाक्योपादानात् संहतानां फलम् । अथ वैकेन[1] निराकाङ्क्षत्वान्न तदानीमेवेतरसंबन्धोपपत्तिस्तस्माद्विकल्प इति । अत्राभिधीयते —

फलेन यस्य संबन्धस्ततोऽपूर्वं प्रकल्प्यते ।
तदल्पत्वोपपत्तौ च न युक्ता बहुकल्पना ॥

यदि हि फलसंबन्धमात्रपर्यवसाय्येव वाक्यं भवेत् ततः कदाचिदपि सर्वाणि फलेन संबध्येरन् । इह तु तावन्मात्रेणासिद्धेरपूर्वमन्यत् कल्पयितव्यं तच्चानुपपत्तिप्रमाणकं, तत्रैकापूर्वकल्पनयोपपन्ने नादृष्टान्तरकल्पनाप्रमाणमस्ति । यो ह्यनेकान्यपूर्वाणि कल्पयति कल्पयत्यसावेकं, तच्चेत् कल्पितमर्थवत्त्वाद् वाक्यस्य क्षीणान्यथानुपपत्तिर्नापूर्वान्तरस्य प्रमाणं भवति । तस्मादेकमेव फलसंबन्धि, तस्माच्चापूर्वमितरत् फलवदुपकारीत्यध्यवसीयते । न चात्र विरोधो भविष्यति नामधेयत्वेन परिहारात् ।

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र किं संहत्यै[1]वमेकस्मिन् फले साधनत्वं प्रत्येकं वा भिन्नेष्विति संशये प्रथगुत्पन्नानां प्रत्येकं फलमाकाङ्क्षतां प्रत्येकं फलान्वये प्राप्ते उत्तरं प्रयोजनाभिसंबन्धात् पृथक् सतां ततः स्यादेककर्म्यमे[2]कशब्दाभिसंयोगात् । पृथक्तामपि ततः स्यादेककर्म्यमेकफलं वा कुतः समुचितानां प्रयोजनाभिसंबन्धात् । तदेव कुतः एकेन दर्शपूर्णमासशब्देन समुदायीकृतानां फलाभि[3]संबन्धादुपादीयमानावगत साहित्यस्य विवक्षा । या तु प्रत्येकमुत्पत्तौ फलाकांक्षा सैकेनापि पूर्यत एवेति । फलभूमगरीयस्त्वादिति । गरीयस्त्वमादृतत्वं विध्यपेक्षितत्वादिति । अरुणादिन्यायेनेति । असत्येऽप्येकशब्दोपादाने [4]फलभावानां प्रत्युपादीयमानानां समुदाये वाक्यसमाप्तेः समुच्चितेभ्यः फलमिति । अथवैकेनेति । भिन्नव्यापारत्वादरुणैकहायन्योरविकल्पः फलभावनाकरणयोस्त्वफलापूर्वं प्रति व्यापृतिः । अतस्तुल्यार्थत्वात् समुदायासंभव इति । नामधेयत्वेनेति । एको हि फलसंबन्धो भवन् वक्ष्यमाणेन न्यायेन धात्वर्थो भविष्यति ।

---

१. अथवैकनिराकाङ्क्षत्वादिति मुद्रितपाठः । अजितानुकूलस्तु मूले धृतः पाठः ।

१. संहत्यैषामे आ० मा० ।

२. एक शब्दाभिसंयोगात् पृथक्तामपि ततः स्यादेककर्म्यं इति आ० मा० नास्ति ।

३. °भिसंयोगात् आ० मा० ।

४. फलभावानां आ० मा० नास्ति ।

अगत्या च 'दशापवित्रेण ग्रहं संमार्ष्टि' इतिवन्मत्वर्थलक्षणाश्रयणात्, अर्थाक्षिप्तसाध्यांशद्वारेण वा धात्वर्थैरात्मीयकरणग्रहणसिद्धेः । एवं स्थिते कतरदेकं संबध्यतामिति सर्वथानेकादृष्टकल्पनापरिहारादनियमप्राप्तावुच्यते —

तथा च तत्समानाधिकरण्येन चित्रादिपदानां नामधेयत्वं न्याय्यं भविष्यतीति न वैरूप्यलक्षण[1]दोषापत्तिरिति दोष इति। अस्य तु परिहारस्याव्यापित्वात् परिहारान्तरमाह — [2]अगत्या चेति। लक्षणा चादृष्टकल्पनातो ज्यायसी। लौकिकी हि सेति। न चात्र लक्षणापीत्याह — अर्थाक्षिप्तेति। यद्यपि वाक्यं न धात्वर्थोत्पत्तिपर्यवसानम् तथापि भावनाविषयतामागच्छतः करणतानुपपत्तेरस्त्यर्थाक्षिप्तो धात्वर्थस्य साध्यत्वमंशः। स चात्र प्रकृतिप्रत्यययोः समभिव्याहारमात्रात् स्फुरति। स च यद्यपि विधिवशात् करणत्वप्रधानस्तथापि साध्यतया गृहीतकारकस्यैव धात्वर्थस्य करणत्वमादधातीति। अतो न मत्वर्थलक्षणया धात्वर्थस्य[3] करणान्वयः। हन्तैवं मत्वर्थलक्षणोच्छेदादुद्भिदधिकरणसिद्धान्तक्षतिः सापि नास्ति। यतः क्रियाकारकलक्षणोऽन्वय एव समर्थितः। यदा तु विधिरजहत्कारकान्वयं धात्वर्थं करणीकरोति तदा सोमेन[4] यागेनेत्यन्वयानुपपत्तेः पूर्वप्रतीतान्वयोपायो वाक्यार्थः ईदृशोऽवगम्यते। [5]सोमवता यागेनेति। पूर्वप्रतीतान्वयवशात्तु लक्षणा भवन्ती नातीव दुष्यतीत्यत्रोच्यत इति [6]सर्वेभ्योऽपूर्वमिति संभवे कुतोऽपूर्वमिति सूत्रितविचारानवसरादेतदाक्षिप्तः सर्वेभ्य एकस्माद् वेति विचारः कृतः। संप्रत्येकस्मादिति स्थिते सूत्रितं विचारमवतारयति — एवं स्थिते[7]कतरदेकमिति। अत्र चोदयति—सर्वथेति। पूर्वेण न्यायेनानपह्नुत्यैव सर्वेषां फलान्वययोग्यतामनेकादृष्टकल्पनां परिहार्यैकस्मादिति स्थापितं पर्यायेणापि च फलसाधनतदुपकारित्वे प्रतिपाद्यमाने परिह्रियत एवानेकादृष्टकल्पना। तेन नियमासिद्धौ कथं नियतस्यापूर्वसाधनस्य मार्गणं कतरत् तदेकमिति।

---

१. लक्षणविरोधापत्तिदोष इति आ० मा०।
२. अशक्त्या चेति आ० मा०।
३. धात्वर्थान्वयः आ० मा०।
४. श्येनेन आ० मा०।
५. श्येनवता॰ आ० मा०।
६. सर्वेभ्योऽपूर्वसंभवे आ० मा०।
७. कुतस्तदेकमिति आ० मा०।

प्रधानफलसंबन्धि तत्संबन्ध्यङ्गमिष्यते ।
प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥

न ह्येकस्मिन् वाक्ये तदेव कदाचित् फलसंबन्धात् प्रधानं कदाचित् फलवदुपकारादङ्गं युज्यते नियतरूपत्वादङ्गाङ्गिभावस्य । तस्मान्नियोगेनैवाख्यातपदान्नामपदाद्वापूर्वप्रतीतिः । कः पुनर्भावः के वा भावशब्दा इति । यावन्तः फलसंबद्धेषु वाक्येष्वाख्यातशब्दा यजतिजुहोतीत्येवमादयस्तेषु प्रत्ययार्थप्राधान्यात् कर्तरि च लकारोत्पत्तेर्यागादिविशिष्टकर्त्रभिधानं, कथञ्चिद्वा विपर्ययात् कर्तृविशिष्टयागाद्यभिधानं मन्वानस्य प्रश्नः । सत्यामपि चैकपर्यनुयोगेनोभयपर्यनुयोगसिद्धौ योऽयं यजनमिज्या याग इत्याद्युदाहृत्यैव भावार्थतां ब्रवीति तन्नूनं केऽप्यलौकिकभावशब्दा अपीत्युभयप्रश्नः । सिद्धान्तवादी तु भवतेर्णिजन्तात् 'एरच्' [ पा० सू० ३।३।५६ ] इत्यच् प्रत्यये कृते भावनावाचिनं भावशब्दं व्युत्पाद्याख्यातस्य चान्वयव्यतिरेकाभ्यां तत्परत्वं कर्त्रभिधानप्रतिषेधं चाभिप्रेत्योदाहरति यजति ददातीति ।

ननु पूर्वाधिकरणपूर्वपक्ष एवायम् विकल्पेनेति । निराकृतश्चासौ । उच्यते पूर्वं वाक्यगम्यफलसाधनत्वमेव सर्वेषां तत्र प्रयोगे विकल्प इत्युक्तम् । इदानीं तु वाक्यमेवानियतं फलसाधनं बोधयत्वित्युच्यते, अत्रोत्तरं — प्रधानं फलसंबन्धीति । यदि वाक्यमैक्यरूप्येणावस्थितमनियमं बोधयेत् । स्यादप्येतत् । अत्र तु प्रधानाङ्गत्वकृतो वचनव्यक्तिभेदः संपद्यते, न चैकं वाक्य[1]मनेकव्यक्ति सम्भवति । अतः पूर्वाधिकरणेनैकस्मादिति° सिध्यन्नियमेनैवैकस्मादिति सिध्यति । अत उपपन्नो विचारः — कतरत्तदेकमिति । कथञ्चिद् वा विपर्ययादिति । प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्यस्यौत्सर्गिकन्यायस्याख्यातेषु क्रियाप्राधान्यप्रतीत्या धात्वर्थस्य च क्रियात्वेन बाधात् विपर्यय इति । योऽयं यजनमिज्येति । भावोत्पन्नल्युडादिप्रत्ययान्तधातुवाच्यार्थो भाव इति [2]मन्वानो यजनादिशब्दरहितेषु चित्रया यजेतेत्येवमादिषु उदाहृतेषु वाक्येषु भावार्थपदसद्भावं श्रुत्वा [3]तर्कितवान् नूनमन्य एवास्य भावो भावशब्दाश्चाभिमता इति । तेनार्थं पृष्ट्वा शब्दमपि पृच्छतीति — सिद्धान्तवादी त्विति । अन्यमेव भावमभिप्रेत्य तद्वाचित्वं चाख्यातप्रत्ययस्य शब्दान्तरकथनेनैवार्थान्तरं सूचयन्नुत्तरं ददातीति ।

---

१. °मनेकवचनव्यक्ति आ० मा० ।　　२. मन्यमानो आ० मा० ।
३. कीर्तितवान् आ० मा० ।

परः पुनर्भवतेर्णिजन्तादन्येन नैषोऽर्थोऽभिधीयते, न चाख्यातप्रत्ययस्यात्र व्यापारो, धात्वन्तरार्थत्वात् । कामं तुल्यजातीयत्वेन धातवो ब्रूयुस्तेऽपि तु यागादिवचनत्वादसमर्था इति मत्वाह — ननु यागदानहोमशब्दा इति । अत्रोच्यते —

यागदानाद्यनुस्यूतो भावनात्मावगम्यते ।
नित्यमाख्यातशब्देभ्यस्तस्माद् भावार्थतेष्यते ।

यावानेव ह्यनन्यलभ्योऽर्थः शब्दाद् गम्यते स सर्वः शब्दार्थः सर्वत्र चाख्याते धात्वर्थश्च तदनुरक्ता च भावना विज्ञायते । तस्माद् भावार्थत्वव्यपदेशः तद्व्यतिरिक्तास्तु द्रव्यगुणशब्दा विज्ञायन्त एवेति न पृष्टाः —

तत्र द्रव्यादिशब्दानां निष्पन्नार्थाभिधायिनाम् ।
करणार्थत्वयोग्यत्वात् प्राप्नोति फलसंगतिः ॥

सर्वत्र हि फलं साध्यत्वात् सिद्धरूपं साधनमपेक्षते न साध्यान्तरं, नामार्थश्च सिद्धत्वात्तदपेक्षापूरणसमर्थो नाख्यातार्थः स्वयमेव तावत् साध्यत्वात् । तस्माद् द्रव्यादिभिः फलमिति प्राप्ते सूत्रेणोत्तरं दीयते—

भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः ।
तैः कुर्याद् यजिना स्वर्गमेष ह्यर्थो विधीयते ॥

**परः पुनरिति । प्रतिपाद्यार्थान्तरं शब्दस्य तद्वाचित्वे प्रत्यवतिष्ठत इति । धात्वन्तरार्थत्वादिति । भावयति धात्वन्तरार्थत्वात् तत्समुच्चारितोऽनभिधाय कथं च प्रकृतिसमुच्चारितः स एव प्रत्ययोऽभिधास्यतीति । धातव एव तु प्रकृतित्वेन तुल्यजातीयकत्वादसमुच्चारिताः सम्भवन्त्येकार्थनिवेशित इत्याह — कामं तुल्यजातीयत्वादिति । ननु यागदानहोमशब्दा इत्यत्र न स्वाभिमतभाववचनतापरेण विवक्ष्यते किन्तु भावनाव्यवच्छेदेन देवतोद्देशद्रव्यत्यागादिमात्रार्थमिति । यागदानाद्यनुस्यूत इति । लोकप्रतीतिमात्रसिद्धोऽर्थो विचारविषयत्वोपलक्षणतां यातीति प्रतीतिमात्रमुक्तं विचारसमये तु स्वपक्षहेतुतयोदितं भावार्थत्वं विप्रतिपन्ननिराकरणेन स्थापयिष्यतीति ।**

**तेभ्योऽपूर्वक्रियागतिरिति । अपूर्वकर्मिका भावनापूर्वक्रिया । अथ वापूर्वस्य कर्तुः क्रियानिष्पत्तिः । तथा च *भाष्यकारो* व्याचष्टे क्रियाकरणं**

फलसंबन्धो हेतुरपूर्वप्रतिपत्तेः। संबन्धश्चाकाङ्क्षापूर्वकः। सा च भावशब्देभ्यः प्रसर्पन्ती दृश्यते न द्रव्यगुणशब्देभ्यः। तस्मादाख्यातेभ्योऽपूर्वभावना गम्यते। तत्र च धात्वर्थस्य करणत्वप्रतिपत्तिः प्रत्यासत्तेः। अतस्तेनैव फलकरणभूतेनान्यथानुपपत्त्यापूर्वं भाव्यत इत्यवधार्यते। कथं पुनर्यज्यादीन् पृथक्कृत्य केवलप्रत्ययवाच्य एव भावनार्थो लभ्यते भावयेदिति। कुतः—

अभिदध्युः स्वशक्त्या हि विधिमात्रं लिङादयः।
ण्यन्तस्य भवतेरर्थः केनांशेनाभिधीयते।

न च धात्वन्तरार्थं यज्यादयः प्रतिपादयन्ति। स्वार्थमात्रव्यापृतत्वात्। अतः शब्दरहितमेवेदमारोप्यते भावयेदिति। किञ्च—

शब्दान्तरस्य योऽप्यर्थः पर्यायैरभिधीयते।
न स तेनैव सहितस्तस्मिन्नर्थे प्रयुज्यते॥

निष्पत्तिरिति। कथं पुनर्यागादीनि पृथक् करोति। यागादय एव व्यापारविशेषाद् धातूपादानाः फलभवनसमर्थतया भावेनेति सामान्यशब्देनोच्यन्ते। तांश्च करणांशनिक्षेपेण पृथक्कृत्य फलभवनसमर्थव्यापारमात्ररूपेणाभिधीयमानो नात्रापरो व्यापार [1]उपलक्ष्यते। केवलप्रत्ययवाच्य इति च न प्रत्ययस्याभिधायकत्वनिषेधपरं किं चासौ व्यापारोऽङ्गीक्रियमाणो धातूनां [2]स्वार्थाभिधानोपक्षीणशक्तित्वात् प्रत्ययवाच्योऽङ्गीकर्तव्यः, स च कथं लभ्यत इति व्यापाराक्षेपपरम्। कुत इत्याक्षेपहेतुप्रश्नः। तस्य कथनमभिदध्युरिति। यतो लिङादयोऽपि [3]संभाविताभिधाना विध्यभिधानोपक्षीणशक्तयोऽतः केनांशेन भावनाभिधीयताम्। न हि तृतीयोंऽशोऽस्तीति। अथ वा द्वितीयस्याप्यंशस्यान्यत्रोपयोगात् प्रथमस्य तु यागाद्यभिधायकत्वादसम्भावनीय इत्यभिप्रायः। तदेतद् व्यक्तीकरोति — न च धात्वन्तरार्थमिति।

शब्दान्तरस्य योऽप्यर्थ इति। यदपि लिङर्थस्य भावयतिकरोतिभ्यां विवरणं तदपि विपरीतसाधनम्। यतो योऽपि शब्दान्तरस्य पिकादेरर्थः पर्यायैः कोकिलादिभिरभिधीयते तस्मिन्नर्थे न स पर्यायः तेनैवाभिधेयार्थेन सहितः प्रयुज्यमानो दृश्यते। तेनात्रापि लिङः प्रयोगो न स्यादिति।

१. लभ्यते आ० मा०।
२. समर्थाभि° आ० मा०।
३. शब्दभावनाविध्यभि° आ० मा०।

तद् यथा पिकमानयेत्युक्ते यो नामार्थं न प्रतिपद्यते तस्मै कोकिलशब्दमेव केवलं प्रयुञ्जते न कोकिलः पिक इति । तथात्र यद्याख्यातस्य करोतिर्ण्यन्तो वा भवतिः पर्यायस्ततस्तदर्थकथने तन्मात्रमेव प्रयोक्तव्यं नाख्यातप्रत्ययोऽपि, न हि तदानीं विविच्य ज्ञायते केनांशेन क्रिया प्रत्याय्यत इति । अत्र तु भावयेत् कुर्यादिति वा पुनरपि लिङ् प्रयुज्यत एव । अतश्च योऽनेन यजतेः परेणार्थः प्रतिपादितोऽसौ भावयतेरपि परेण तेनैवेत्यधिकावाप एव भावयतिः । तस्मादवैदिक इति । अत्राभिधीयते । सर्वत्रैव तावत् —

सिद्धकर्तृ क्रियावाचिन्याख्यातप्रत्यये सति ।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥

इह केभ्यश्चिद्धातुभ्यः परा तिङ्विभक्तिरुच्चार्यमाणा कर्त्रात्मलाभमात्रमेव व्यापारं प्रतिपादयति यथास्तिभवतिविद्यतिभ्यः । अपरेभ्यस्तु सिद्धे कर्तर्यन्यात्मलाभविषयव्यापारप्रतीतिः । यथा यजति ददाति पचति गच्छतीति ।

उपपद्यते वा प्रयोग इत्याह — नहि तदानीमिति । तेन करोतिना प्रत्ययार्थाभिधाने प्रत्ययस्याप्रयोगः प्राप्तः प्रयोगं तु दृष्ट्वा ज्ञायते न नूनं यजति परस्य प्रत्ययस्यात्र करोतिनार्थ उपात्तः, किन्तु पुनरपि प्रत्ययेनैव करोत्यर्थस्तु यजेतेत्यत्राविद्यमान एवारोपित इति । तदेतदाह — अतश्चेति ।

सिद्धकर्तृ क्रियावाचिनीति । अत्र यदेव क्रियाभिधानं प्रत्ययस्य साध्यं तदेवोपलक्षणं दृश्यते, तत्रैवं वक्तव्यमदोषोऽयमिति । तथा हि लब्धस्वरूपोऽर्थः प्रमाणेनावसीयते । तत्र प्रमाणोपन्यासात् प्राग् वस्तुतः सिद्धि विशेषणस्योपादाय धर्मी विशिष्यते हेतोरव्यापकत्वदोषपरिहाराय । सामान्यवाचिना ह्याख्यातप्रत्ययशब्देनात्र धर्म्युपात्तो नायं पर्वत इतिवद् विशेषः [1]प्रत्ययार्थगम्यः । यथा तु तत्रैव परोक्षे पर्वते यः पर्वतोऽग्निमाँस्तस्याग्निमत्तां धूमेन साधयामो न पर्वतमात्रस्येति । उच्यते — अभिधानपरिशुद्धये प्रतिपत्ता तु हेतुव्यवस्थितेरेव धर्मिविशेषं प्रतिपद्यते । [2]ततश्चात्रापि विशेषणाविशेषणञ्च कर्तुः सिद्धिरत्र प्रागपि सिद्धेनात्यन्ताप्रसिद्धिरिति । यश्च

१. प्रत्यक्षावगम्योयंऽ आ० मा० ।
२. तथात्रापि आ० मा० ।

द्रव्यमेव च विशिष्टशक्त्युपेतं प्रचलितात्मतत्त्वं विप्रकीर्णस्वभावं पूर्वापरीभूतं पूर्वा[1]वस्थातः प्रत्युत परामवस्थामप्राप्तं व्यापारशब्दवाच्यं भवति। तत्र कदाचित् कर्तैवैवमवस्थः प्रतीयते, कदाचित् सिद्धे कर्तर्यन्यः। तद् यदा कर्तुरेवैषावस्था भवति तदासौ स्वयमेवान्यस्मादात्मलाभमपेक्षमाणः परनिष्पत्तावव्याप्रिय-

द्रव्यव्यतिरेकेण पटादिवद् घटस्यानुपलब्धेः क्रियावस्त्वेव नेच्छति तं प्रत्याह — द्रव्यमेवेति। न द्रव्यव्यतिरेकेणानुपलब्धेरभावस्तस्याः। यतो, नासौ क्रियावादिभिर्व्यतिरिक्तेष्यते किन्तु द्रव्यमेव कदाचित् क्रियाशब्दप्रत्ययावनुभवति कदाचिन्नेति रूपव्यभिचारात्त[1]दतिरेकेणावस्थात्मिका क्रियाङ्गीक्रियते। तामवस्थां निरूपयन् शक्तिशब्देन फलोदयानुकूलतामाह। योग्यतामात्रतां विशिष्टशब्देन व्यवच्छिनत्ति। कीदृशं तर्हीत्यत आह — प्रचलितात्मतत्त्वमिति। प्रचलितमात्मतत्त्वं यस्य तत्तादृशं द्रव्यं, तस्य प्रचलनं लोलीभावः क्रियेत्यर्थः। अनत्यन्तव्यतिरेकात् द्रव्यप्राधान्यनिर्देशः प्रचलितत्त्वमेव व्याकरोति—विप्रकीर्णस्वभावमिति। रूपस्यानुपसंहारे विप्रकीर्णता। फलोदयं यावदौदासीन्यप्रच्युतेः प्रभृत्यभिमतं करोतीति रूपं नैककाललक्षणपर्यवसितं [2]नानन्वितं तच्च क्षणेष्वयुगपद्भाविषु नावयविवदुपसंहाररूपं, किन्तु पूर्वापरवर्तमानक्षणेष्वैकध्येन [ ष्वैकार्थ्येन ]व्यवस्थितं तदेतद्व्याकृतं—पूर्वापरीभूतमिति। पूर्वापरौ क्षणौ गृहीत्वा स्थितमित्यर्थः। ननु क्षणिका क्रिया कथं तस्याः पूर्वापरीभावः। भवतु, सा तु न विकल्पप्रत्ययगोचरः, तत्समाहारस्तु तेन विषयीक्रियते। स च स्वप्रत्ययादभिमतं करोतीत्येवं रूपादन्यवस्तुविलक्षणः कालक्षणभेदेऽपि सिध्यन् फलोदयानुकूलतामात्रेण वर्तमानः साध्यस्वभावः प्रसिध्यन् समाह्रियमाणानामपि क्रियाक्षणानामन्तरेणापि कालक्षणभेदं करोति प्रत्ययविषयात्मिकां साध्यस्वभावतां गमयतीति। अस्ति च विभागपूर्वकत्वात् संयोगस्य तदवसानत्वाच्च क्रियायाः क्षणान्तरव्याप्तिरिति। संप्रत्येतामवस्थामवस्थान्तरव्यतिरेकोपलम्भेन स्फुटीकरोति — पूर्वावस्थात इति। ओदनं करोतीत्येतत्प्रत्ययाविषयस्तत्र यदौदासीन्यावस्थातः प्रच्युतं पुनरीदृशमेव परामवस्थामप्रतिपन्नं करोति प्रत्ययविषयरूपेण क्रियेति। कदाचित् सिद्धे कर्तरीति। कर्तुः कर्तृत्वादेवेयमवस्था सिद्धा। अन्यस्य त्वेवकारेण पूर्वं व्यवच्छिन्नानेन प्रति-

---

१. प्रथमावस्था इति मुद्रितपाठः। अजितायां प्रतीकतया परिगृहीतस्तु पूर्वावस्थात इति पाठः।

१. तदतिरेकिण्ववस्था आ० मा०।

२. किन्तु व्यासक्तं स तच्च काललक्षणेष्वयुगपद् भाविषु नावयविवदुपसंहृतरूपं किन्तु इत्यत्र आ० मा० पाठः।

माणत्वान्न करोतिशब्दवाच्यतां प्रतिपद्यते । यदा तु लब्धात्मकोऽन्यत्र व्याप्रियते तदा करोतीत्येवमपदिश्यते । तथा च किं करोति पठति गच्छतीति सामान्य—विशेषरूपेण सामानाधिकरण्यप्रयोगो दृश्यते, न तु किं करोति भवत्यस्ति वेति प्रयुज्यते । तस्माल्लब्धात्मककर्तृव्यापारवचनानि करोत्यर्थवन्त्याख्यातानि । तत्र च क्रियमाणेन केनचिदवश्यं भवितव्यम् । कुतः —

करोतिः क्रियमाणेन न कश्चित् कर्मणा विना ।
भवत्यर्थस्य कर्ता च करोतेः कर्म जायते ॥

करोतेर्नित्यं सकर्मकत्वाद् यावत् क्रियमाणं न लभ्यते न तावदर्थः पर्यवस्यति सर्वकारकाणां चैकत्रा[1]वान्तरक्रियासु कर्तृत्वं प्रतिपाद्यमानानां प्रधानक्रियासु कर्मादिविभागो जायते । प्रतिक्रियं योग्यताभेदादवान्तरक्रियावैचित्र्यं भवति । तत्रान्वयव्यतिरेकाभ्यामिदमवगतं भवति क्रियायाः कर्ता करोतेः कर्म संपद्यत इति । तथा हि —

नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥

य एव हि प्रवृत्तभवनः संभावितभवनो वान्येन प्रयुज्यते स एव ।

**पद्यते तेनान्योऽपीत्यर्थः सम्पद्यत इति । तस्माल्लब्धात्मकेति । अत्रोभयोरपि सामान्यविशेषयोर्विप्रतिपन्नं प्रति बोधनाय — तस्मादिति । करोति सामानाधिकरण्यहेतुपरामर्श इति । अत्र भाव्यनिष्ठतामस्य व्यापारस्य दर्शयितुं त्वेकदेशोपात्तभवनविशिष्टाभिधानसमर्थेन [1]भावनाशब्देन शास्त्रे व्यवहारः । करोतीत्यर्थवचनता च लौकिकसामानाधिकरण्येन साधिता । तदनयोः सम्प्रतिपत्त्यर्थं करोति भावयत्योरेकार्थतां व्युत्पादयितुं क्रमते तत्र करोतावपि भवनमभिधेयव्यापारविशेषणं भावयतिवदिति व्युत्पादयति — तत्र च क्रियमाणेनेति । भवत्यर्थस्य कर्ता चेत्यस्य योजना कर्मणः क्रियान्तरकर्तृत्वानपेक्ष्यमाशङ्क्याह—सर्वकारकाणां चेति । तथापि कर्मणि यैकत्रावान्तर क्रियोपलब्धा सैवान्यत्राप्यस्तु किं क्रियान्तरमार्गणेनेत्यत्राह — प्रतिक्रियं चेति । तद् यथा पचिक्रियायां विक्लिद्यमानं कर्मत्वयोग्यं गमिक्रियायां संयुज्यमानमिति । य एव हि प्रवृत्तभवन इति । वृक्षोऽङ्कुरे प्रवृत्तभवनः [2]सेकरोपणादिना प्रयुज्यते । घटो मृदि संभावितभवनः । अथ वा विवक्षितविकल्पोऽयं घट एव कारणसिद्ध्या प्रवृत्तभवनः संभावितभवनो वेति । लब्धायां च करोति**

१ चावान्तरेति मुद्रित पाठः चैकत्रावान्तरेति अजिता सम्मतः पाठः ।

१. भावनाशब्देन आ० मा० नास्ति ।

२. सेककरणादिना० आ० मा० ।

क्रियमाणत्वेनावधार्यते नान्यः । तथा च न कश्चित् खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते । यत्रापि पादौ कुर्वित्यादिषु निष्पन्नानां कर्मत्वप्रयोगो दृश्यते तत्राप्यनिष्पन्नसंस्कारादिविवक्षया पादादिशब्दप्रयोगादव्यभिचारः । सत्यपि च करोतेरनेकार्थत्वे सर्वत्र गन्धनावक्षेपणादौ किञ्चिदनुत्पन्नोत्पादनसामान्यमवगम्यते । अथ वा यदास्योत्पादनाभिधायित्वं तदैव विशिष्टाख्यातसामानाधिकरण्यं दृष्टमिति तद्गतस्योत्पाद्यमानमेव कर्म भवतीत्युपपन्नम् । तेन भवतिक्रिया तावल्लब्धा । ततश्च —

करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ।।

भवतिकरोत्योः शक्तिभेदाद् विक्लिदिपचत्योरिव नियतं प्रयोज्यप्रयोजकव्यापारवचनत्वम् । तत्र च कदाचिदभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्यव्यापारो वा स्वयमेवाक्षिप्तप्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते, कटं करोति, ओदनं पचतीति । कदाचिदाक्षिप्तप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं, घटो भवति, विक्लिद्यन्ति तण्डुला इति । कदाचिदुभौ भिन्नौ समुच्चित्य प्रयोगः, करोति कटं देवदत्तः स च भवति । कदाचिदुपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः क्रियते देवदत्तेनेति स्वयमेवेति वा प्रयोगे । कदाचित् पुनः समानपदैकदेशोपात्तोपसर्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारो विवक्ष्यते । तदा च करोतिपचत्योस्तादात्म्येनाशक्तेरप्रयोगाद्

**कर्मणोऽपि भवति क्रियायां भवतेः परस्य णिचः करोत्यर्थ एव विषयः संपद्यते [1]इति व्युत्पादयति — ततश्चेति । करोत्यर्थवशेन भवनमनुभविता भवितुस्तत्कर्मता । ततश्च करोत्यर्थो भवने भवितुः प्रयुक्तिः । करोत्यर्थं कर्ता च प्रयोजको भविता च तस्य प्रयोज्य इत्यापद्यते । सति च करोत्यर्थस्य प्रयोजकव्यापारत्वे तदवचनणिज्विषयता प्रसिद्धा । यादृश्यां च विवक्षायां तस्मिन्नेव व्यापारे करोतेः प्रयोगः यादृश्यां च भावयतेस्तद् विवेचयन् विवक्षाभेदान् सप्रयोगानुपन्यस्यति — तत्र कदाचिदिति । घटमिति द्वितीययाभिधेयया कर्मशक्त्या भवनमाक्षिप्यते । स्वयं वा प्रयोजकव्यापारेणेति । ओदनं पचतीत्यादि दृष्टान्तायेति । क्रियते घट इति । अत्राक्षिप्तस्य भवन-**

---

१. इत्याह — ततश्चेति आ० मा० ।

भूविक्लिद्योश्च केवलप्रयोज्यक्रियानिष्ठत्वान्न साक्षात् प्रवर्तितुं शक्तिरस्तीति वाचकत्वेन द्योतकत्वेन वा णिजपरः प्रयुज्यते भावयति विक्लेदयतीति च । तथा चाह —

प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः ।
ण्यन्ता एव प्रयुज्यन्ते तत् प्रयोजककर्मसु ॥

न च तेषामण्यन्तानामशक्तिरित्यन्येषामशक्त्या भवितव्यम् । अन्येषां वा शक्तिरित्येषामपि तद्वद् भवितव्यम् । कुतः —

शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः ।
तेन नाना वदन्त्यर्थान् प्रकृतिप्रत्ययादयः ॥

एवं करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थः सिद्धः ।

तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥

यत्तूक्तं न विधित्वव्यतिरिक्तं लिङादयोऽर्थं वदन्तीति । तदयुक्तम् । कुतः

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥

स्य प्राधान्यं कर्मणः सक्रियस्य प्राधान्यादिति । न च तेषामण्यन्तानामिति । अण्यन्तेन भवतिना अनभिहितत्वाण्णिजर्थोऽसौ न धात्वर्थ इत्यवधारितः कथं धातुनैव करोतिनाभिधीयत इत्येवं वैपरीत्येऽपीति । यदा चैवं भावनाशब्दस्य वृत्तिस्तदा तदर्थस्य भावनाया इदं रूपं निरूपणीयमिति प्रसङ्गादाह — तेन भूतिषु कर्तृत्वमिति । अभिधाभावनामाहुरिति । य आहुः श्रेयः साधनं विधिरिति तत्र व्याख्यायते । प्रवर्तयतः शब्दस्य श्रेयः साधनं ज्ञानं करणं तदभिधां प्रवृत्तिभावना, तामभिधाभावनामाहुः । कुर्वन्तीत्योदनपाकं पचतीतिवन्नेयं सा च विधानं विधिरित्यनया व्युत्पत्त्या विधिरित्युच्यते । साध्यसाधनेतिकर्तव्यताभिश्च विशेषैरियमर्थवादाधिकरणे व्यवस्थिता[1] । अथ वा श्रेयः साधनशक्तिरेव शक्तिमतः प्रवृत्तिफलोदये व्यापारात्मना शब्देनाविधीयमाना अभिधेया भावनेत्येवमभिधा भावना । [2]अथ वान्यसमवेतापि शब्देन प्रवृत्तिप्रयोजननेनोदीयमाना अभिधाः शब्दस्यैव भावनेत्यभिधाभावना तां चाहुरेव — लिङादय इति । अन्यथा वा विधितत्त्वं वर्ण्यते

---

१. वर्णिता आ० मा० ।

२. अथवेत्यतः भावना यावत् आ० मा० इत्यत्र नास्ति । अतः भावनान्तरं तां चाहुरेवेति पाठोऽत्र ।

यदा हि सर्वाख्यातानुवर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावनावगता भवति तदा तद्विशेषाः सामान्याख्यातव्यतिरिक्तशब्दविशेषवाच्या विधिप्रतिषेधभूतभविष्यद् वर्तमानादयः प्रतीयन्ते । तथा च सर्वत्र सामान्यतः करोत्यर्थोऽवगम्यते किं करोति पचति किमकार्षीदपाक्षीत्, किं करिष्यति पक्ष्यति, किं कुर्यात् पचेत्, किं न कुर्यान्न पचेदिति । तत्रार्थात्मिकायां भावनायां लिङादि शब्दानां यः पुरुषं प्रति प्रयोजकव्यापारः सा द्वितीया शब्दधर्मोऽभिधात्मिका भावना विधिरित्युच्यते । विशेषतश्चेयमर्थवादाधिकरणे वर्णिता । यत्तु पर्याय-स्थित्यतिलङ्घनं प्रत्ययापरित्यागादभिहितम् । तत्रोच्यते —

केवलस्याप्रयोगित्वात् कर्तृसंख्यादिसंग्रहात् ।
रूपाविनाशसिद्धेश्च प्रत्ययोऽपि प्रयुज्यते ॥

यदि हि केवलः करोतिर्भावयतिर्वा प्रयोगार्हौ स्यातां ततः कोकिलशब्द-प्रयोगे पिकशब्दवत् प्रत्ययो न प्रयुज्येत, न तु केवलायाः प्रकृतेः प्रयोगः, अपभ्रंशत्वप्रसङ्गात् । तेन यस्मिन् कस्मिंश्चित् प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कथ्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते नान्योऽभ्यधिकार्थान्तरापत्ति-प्रसङ्गात् ।

ननु च, इक्श्तिपौ धातुनिर्देशे विहितावतस्तद्युक्तौ करोतिभावयती प्रयुज्येयाताम् । नैतदस्ति । तथा सति शब्दपदार्थकत्वान्नैव ताभ्यामाख्या-तार्थः कथ्येत । यत्तु क्वचिदर्थेऽपि धातुमिक्श्तिबन्तं प्रयुज्यते यजिः यजति रिति च तत्, शब्देऽभिहिते लक्षणयार्थप्रतीतिरित्यवगन्तव्यम्, न चेह किञ्चि-ल्लक्षणाश्रयणे प्रयोजनमस्ति येनावाचकः प्रयुज्येत । तत्रान्यदेवानिष्टमापद्येत कृञ्भुवौ धातू तिङाभिधीयेते इति । तस्मादर्थपरत्वसिद्ध्यर्थमाख्यात प्रत्ययसहितावेव प्रयुज्येते । यदि च भावनैवैका प्रत्ययार्थः स्यात् करोतिभावयती वा समस्तप्रत्ययार्थोपादानसमर्थौ भवेतां ततः केवलप्रयोगोऽप्याशङ्क्येत, न तु तदुभयमप्यस्तीति करोतिभावयतिभ्यां कथितेऽपि भावनार्थे कर्तृ-संख्यादिप्रत्यायनार्थं पुनः प्रत्यय उच्चार्यते । यस्तु तत्र भावनाभिधानांशः स प्राप्तत्वादनूद्यते । अन्यथा हि भावनैवैका प्रत्ययार्थः करोतिभावयती वा कर्तृसंख्यादीनामप्यभिधायकाविति भ्रान्तिः स्यात् । नित्यं च पूर्वापरीभूता भावनाख्यातेनोच्यते । तत्र यदि प्रत्ययान्तरं प्रयुज्यते ततः करोतिभावयति-भ्यां द्रव्यवदुपसंहृतरूपोच्यमाना नैवाख्यातसदृशी कथ्येत । तस्मादवश्यं यदपि

प्रयोक्तव्यमिति । किञ्च—

भावना गम्यमाना च धातुप्रत्ययसंनिधौ ।
कस्य वाच्येति विस्पष्टं न कदाचित्प्रतीयते ।।

यदि ह्येकान्तेनास्याः प्रत्ययार्थत्वमवधार्येत ततः करोतिभावयतिभ्यां प्रत्ययपौनरुक्त्याशङ्का स्यान्न तु तदस्ति उभयसंनिधौ गम्यमानत्वात् । केवल प्रकृतिप्रत्ययप्रयोगाभावाद्धि न विवेको विज्ञायते । शक्यते हि वक्तुं धातुसहितेन प्रत्ययेनोच्यत इति । अथ वा प्रत्ययानुगृहीतेन धातुना, अथ वोभाभ्याम्, न च शक्तिकल्पनायां विशेषः सर्वथार्थापत्तिसाम्यान्न च विवेकज्ञानप्रयोजनमस्ति ।

स्यादेतत्, कृदन्ताद्धातोरप्रतीतेस्तिङ्व्यभिचारिण्येव नेति । तदयुक्तम् । अस्तिविद्यतिभवतिपरेषु प्रत्ययेष्वप्यदर्शनात् । न वा कृदन्तेष्वप्यत्यन्तं भावना नास्ति किञ्चिदपकृष्यमाणरूपप्रतीतेः । कृत्येषु तावद्धोक्तव्यम् यष्टव्यमिति किञ्चिन्न्यूनाख्याताद् गम्यते । तत्रापि कर्मोत्पन्नेषु द्रव्यप्राधान्याद् ब्राह्मणो न हन्तव्य इति भावोत्पन्नेभ्यो न्यूनतरा नहि तत्र प्रयोजकव्यापारप्राधान्यम् । एकत्र धात्वर्थप्राधान्यादपरत्र स्वव्यापारविशिष्टप्रयोज्यपरत्वात् । एतेन भावकर्मोत्पन्नलकारास्तिङोऽपि व्याख्याता । तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिरविशिष्टा । अतो न तिङन्तानां तुल्यकल्पत्वम् । तथा 'अव्ययकृतो भावे भवन्ती'ति स्मरणाविशेषेऽपि स्वसंवेद्यमीषन्न्यूनभावनाविज्ञानम् । 'अभिक्रामं जुहोति' 'दर्भतरुणकेनोपघातं जुहोति' 'अभिषुत्य हुत्वा

सर्वत्रोद्दिष्टेन प्रयोजनेनान्यविषयोऽपि व्यापारो निरूप्यते । तत्र यथान्येषां शब्दानां[1] स्वभिधेयाभिधानमेव उद्दिष्टवाक्यार्थ[2] प्रतिपादनम् । एवं लिङोऽपि भावनाभिधानमेवोद्दिष्टपुरुषप्रवृत्तिवाक्यार्थप्रतिपत्तिप्रवर्त्तनम् । तच्च प्रवृत्तिसमर्थविशिष्टभावना प्रतिपत्तिद्वारेणेति [3]प्रतीतं सत्साध्यांद्यशानामभिमतादिरूपतां बोधयित्वा स्वर्गादीनि साध्यादिभावेन गृह्णाति[4]ना प्रतीतम् । सा च प्रतीतिरनन्योपाया लिङः शक्तिं कल्पयति । तेनार्थभावनाभिधानमेव प्रवृत्तिप्रयोजनत्वात् प्रवर्तनाविधिः । तां च प्रवर्तनां लिङादय आहुरिति । न चैतदेव धात्वर्थप्राधान्यं तद्विशिष्ट प्रयोज्यप्राधान्यं वा भावनाभिधायिषु तिङ्क्ष्वदृष्टमेषां भावनाभिधायित्वमापादयति । यतस्तिङ्क्ष्वेप्येतददृष्टमित्याह — एतेन भावकर्मणोत्पन्नलकारा इति ।

---

१. शब्दानामभिधानमेव° आ० मा० । २. वाक्यार्थप्रतिपत्तिवाक्यार्थ प्रति° आ० मा० । ३. प्रतुस्तसाध्याद्यंशा° आ० मा० । ४. गृह्णाति तथा प्रतीतम् आ० मा० ।

भक्षयन्ति पुरा वाच प्रवदितो'रिति सर्वत्र श्रुत्यैव भावनान्तरसापेक्षा भावनावगम्यते। पक्त्वः पक्ववानित्यपि निर्वृत्तरूपभावनोपसर्जनद्रव्यप्रतीतिः प्रत्यक्षा। एवं पाचकादिष्वपि द्रष्टव्यम्। तथा च सर्वत्र कारकापेक्षा दृश्यते। अन्यथा हि रुढितद्धितसमासेष्विवेयं न स्यात्। न च निर्व्यापाराणामेते व्यपदेशा भवन्ति। न चास्ति स व्यापारो यत्र किञ्चिदसन्न जन्यन्ते। ततश्च सिद्धः करोतिभावयत्योरर्थः। शक्यते च सर्वत्र सामानाधिकरण्यमपि दर्शयितुं विनापि पूर्वापरीभूतत्वेन। तद्यथा किं कर्तव्यं पक्तव्यं, कथंकारं जुहोति अभिक्रामम्, किं कृत्वा जुहोति अभिपुत्य, किं कृतवान् पक्ववान्, किं कृतं पक्वं किं क्रियो देवदत्तः पक्ता, केयं क्रिया पाक इति। न च करोतिसामानाधिकरण्यातिरिक्तमाख्यातेष्वपि भावनाप्रमाणं विद्यते। तस्माद्धातवोऽपि भावनां न मुञ्चन्ति। तथा चाहुः— करोतिरर्थेष्विव सर्वधातूनिति।

यत्त्वस्याः प्राधान्यं तत्कामं तिङाभिधेयं द्योत्यं वान्वयव्यतिरेकाभ्यामस्तु न स्वरूपम्। नन्वेवमपि यागेनेति धात्वर्थे निष्कृष्टे तेनैव भावनाप्युपात्तेति भावयेदिति पुनः प्रयोगो न प्राप्नोति। नैष दोषः। तथा हि द्व्यर्थस्य धातोर्भेदेनार्थे कथ्यमाने यागेनेति विशेषरूपं करणात्मना निष्कृष्टम्। इतरत्तु भावनात्मकं सामान्यरूपः शब्दान्तरेण भावयेदित्यनेन कथ्यते। अथ वा केचित् करणांशकर्तृसंख्यादयः प्रकृतिप्रत्यययोर्भेदेन वाच्याः। भावना तु समुदायाव्यभिचारात् समुदितयोरेवार्थ इत्यपि शक्यं वक्तुम्। तथा च ***सूत्रकारभाष्यकाराभ्यां*** भावार्थाः कर्मशब्दा इति सामानाधिकरण्यमेवाश्रितं न भावार्थत्वेन प्रत्ययाः कथिताः। शास्त्रे तु सर्वत्र प्रत्ययार्थो भावनेति व्यवहारः। तत्रायमभिप्रायः—

प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा।
प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते॥

यद्यप्यन्यद् विवेककारणं नास्ति तथापि प्राधान्यं प्रत्ययार्थधर्मं दृष्ट्वा नूनमियं प्रत्ययार्थ इत्यवगम्यते—

करोतिरर्थेष्विवेति। **करोतिरर्थद्वारेण सर्वधातूनर्थेष्वनुगतो यथेति कस्यचिद् दृष्टान्तोपादानमिति। यागेनेति विशेषरूपमिति। सामान्यांशस्याभिधेयस्यापि करणत्वायोग्यत्वात्तृतीयार्थो यागेनेत्यत्र विवक्षित इति।**

तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः ।
प्रत्ययश्रुतिवेलायां भावनात्मावगम्यते ॥

न केवलमेतावेवान्वयव्यतिरेकौ यौ परस्परपरित्यागेन लक्ष्येते । तस्मिन्नेव हि पदे 'तदागमे हि तद् दृश्यते' इत्यनेन न्यायेन विवेकोऽवधार्यते । यत्त्वस्त्यादिपरः प्रत्ययोऽपि भावनां जहातीति तुल्यं धातुसमुदायपक्षयोरप्येतत् । सर्वथा यत्र प्रतीयते तत्र तावत् प्रत्ययार्थत्वं निश्चीयते । अन्यत्र त्वयं विचार एव नास्ति । क्वचिद् व्यभिचारस्य चोत्तरमुक्तं तद्भूताधिकरणे । अथ वा नैवात्रापि व्यभिचारः । कुतः—

अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु न तथा सा प्रकाशते ॥

यद्यपि कर्तुरनिष्पन्नत्वाद् व्यतिरिक्तभावयितव्याभावादस्त्यादिषु प्रयोजकव्यापारो नातीव लक्ष्यते तथापि प्रत्ययसामर्थ्याद्भावयतीत्यवगम्यते किमित्यपेक्षिते चानिष्पन्ने कर्तर्यन्यत् किञ्चिदित्यकल्पनादात्मानमित्येव संबध्यते । केन भावनेन, कथं अवयवजननादिप्रकारेणेति । त्रयोऽपि तत्र भावनांशा भवनेनैव

**क्वचिद् व्यभिचारस्येति । पदावधारणोपायान् बहूनिच्छन्ति सूरय इत्यादिनेति । केचिदवयवा इति । यैर्घटः सामस्त्यं प्रतिपद्यते ते प्रयोज्यास्ततः प्रागभाविनां भवनं करणं, ततो प्रागभाविनामवयवानां जननमितिकर्तव्यता । यानुत्पन्नान् दृष्ट्वा शब्दप्रयोगस्ते प्रयोजकास्तेषां फलनिर्ष्पत्ति यावत्करणेतिकर्तव्यतास्वनुवृत्त आत्मानं करोतीति पूर्वापरीभावः । कर्तृफलसंस्पर्शि भावना । सर्वेषु च घटाभेदविवक्षायां घट आत्मानमात्मनो भवनेन भावयतीति प्रयोग इति ।**

**सत्तयात्मभवनमिति । सत्तयेति द्वाभ्यां सम्बध्यते । धात्वर्थस्य करणस्य कर्तृनिर्वर्त्यत्वात् । सत्तयाभवदित्युच्यते सत्तां प्रतिपद्यमानमित्यर्थः । न च प्रतिपन्नसत्त्वस्य भवनमुत्पत्तिः सम्भवति । तेन सत्तयात्मभवनमित्युच्यते । उत्तरेषु क्षणेष्वात्मनः सत्तां पूर्वक्षणसत्ताव्याप्त्या करोतीति पूर्वोत्तरक्षणसत्तारूपेण प्रयोजकप्रयोज्यता उभयसामान्यसत्तापूर्वापरीभावश्च व्यापार इत्यस्तीति धातुप्रत्ययाभिधानेन भेदकल्पनानुसर्तव्येति । तदेतदस्त्यादिषु भावनोत्पादनं रथन्तरं भवतीत्यादि विधिप्रतिषेधोपपत्तये इति । यस्य भ्रान्तिः**

पूर्यन्ते व्यापारान्तरासंभवात् । तत्र केचिदवयवा भावनव्यापृताः प्रयुज्यन्ते केचित्सिद्धभावनाः प्रयोजकाः । सिद्धभवनासिद्धभवनवर्ति च सामान्यमुभयसंपर्कादिभावनेत्यच्यते । एतेन जायते निष्पद्यते सिध्यतीत्यादीनि व्याख्यातानि । अस्तिः पुनर्जनिसमानार्थाद् भवतेरुपरितनीमवस्थामभिलपन् सत्तयात्मभवनं भवद् भावयतीत्येवमाख्यातप्रत्ययं लभते । तत्रापि तु कालकृतभेदपूर्वोत्तरसामान्यसत्तारूपेण पूर्ववदेव प्रयोज्यप्रयोजकव्यापारकल्पनानुसर्तव्या । सत्यामपि त्वेवमादिषु भावनायां निष्पन्नचेतनकर्तृविषयत्वाद्विधिप्रतिषेधयोरसंभवः । स्यादेतत् दृष्टो विधिरपि 'तस्मात्प्रायणीयस्याह्न ऋत्विजा भवितव्यम्' 'रथन्तरं भवति' 'अत्राध्वर्युः स्यात्' 'इहोक्थ्यानि स्युः' इति सत्यं दृश्यते न त्विह पूर्वेण तुल्यो भवत्यर्थः । सिद्धो हि पुरुषः कर्मसंबन्धनिमित्तमृत्विक्त्वं भवदन्यैरेव वाक्कायमनोव्यापारैर्भावयेदित्युच्यते । तथा रथन्तरादिषु सत्यपि श्रुत्या भवनविधिसंबन्धे तत्र संभवादनुमीयमाना भावनैव विधीयते । यत्र त्विहामुको भवेदिति प्रयोगस्तत्र भवतेस्तिष्ठत्यर्थवाचित्वात् संभवत्येव व्यतिरिक्तं भावयितव्यमित्येवं विज्ञायते । स्थानेनान्यत् किञ्चिद्भावयेदिति । तेन भूतभविष्यद्वर्तमानापदेशमात्रेष्वेवापारमार्थिकं भवितृव्यापारस्य भावनात्वं न विध्यादिषु । भूतादिकथनेऽपि यदा समस्तं व्यापारं धातुरेवोपादत्ते नावयवकालादिकृतभेदाश्रयणं तदा विस्पष्टाद्विरोधाद्धात्वर्थमात्रं कर्तृसंख्यादयश्चाख्यातपदार्थत्वेनावधार्यन्ते न भावना । न च भावनाव्यभिचारेण दोष इत्युक्तम् । यत्तु कृदन्तेष्वपि धातवो भावनां न व्यभिचरन्तीति । सत्यं धात्वर्था न व्यभिचरन्ति तैरेव तु गम्यमानत्वादनभिधेयत्वमपि शक्यं वक्तुम् । तथा हि—

धात्वर्थकारकैरेव गुणभूतोऽवगम्यते ।
भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयते ॥

स्मार्त्तं प्रति व्युत्पादयति—सत्यामपि त्विति । भूतादिकथनेऽपीति । सिद्धभावनासिद्धभावनानवयवानेकत्वेन घट इत्युपादाय भवतीत्युच्यमानं सर्वेषां भवनं घटभवनतयोपादत्ते । तस्यैकस्य करणताप्रयोज्यव्यापारता चेति विरोध इति । सत्यं धात्वर्थ इति । सत्यं न व्यभिचरन्ति । किन्तु धात्वर्थास्ते न धातव इति । अथ वा सत्यं न धातवो व्यभिचरन्ति किं त्वेवमसौ धात्वर्थान् व्यभिचरन्ति न स्वरूपेणेति ।

यथैव भावप्रधानत्वादाख्याते तत्संबन्धादेव गुणभूतकारकप्रतीतिसिद्धेर्न-कर्तृकर्मणोरभिधानं भविष्यत्येवं कर्त्राद्यभिधानादेव तदन्यथानुपपत्त्या भावना-सिद्धेरनभिधानं, गम्यमानापेक्षयैव च करोतिसामानाधिकरण्यं यथा पचति-शब्दस्य देवदत्तशब्देन, अतथाभूतयैव च कारकसंबन्धोऽप्युपपत्स्यते । अथ वा भावनोपसर्जनधात्वर्थनिष्पत्त्यर्थत्वात् कारकाणां धात्वर्थेनैव संबन्धसिद्धिः । स एव हि तानि स्वसिद्ध्यर्थमपेक्षते भावनापि च तथाभूतान्येव तानि गृह्णातीत्य-विरुद्धः संबन्धः । कृत्यानां तु प्रैषवाचित्वात् सत्यपि भावनानभिधाने तावत् स्वार्थपर्यवसानं नास्ति यावदंशत्रयपरिपूर्णा भावना न लब्धा । कुतः—

स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते ।
प्रैषैस्तस्य स्वरूपं च भावनांशत्रयात्मिका ।।

न हि पुरुषः स्वव्यापारं मुक्त्वान्यदनुष्ठातुं शक्तः प्रैषाश्चैनमनुष्ठापयन्ति । ते यदि तद्व्यापारं कथञ्चिन्नोपादद्युर्न नियोक्तुं शक्नुयुरित्येवमपि भावनाक्षेप-सिद्धिः । यावांश्च ब्राह्मणगतः कश्चित्प्रैषः स सर्वः प्राप्त्यभावाद्विधिरेव भवतीति विनापि स्मरणेन कृत्यानां विधायकत्वम् । अयमेव च विधिप्रैषयोर्विशेषः ।

प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्तप्रैषणं सर्वं विधित्वं प्रतिपद्यते ।।

**अथ वा भावनोपसर्जनेति । फलभावनाकरणाधीनत्वात् फलभूतेस्त-न्मात्रेणात्मानमलभमाना साध्यात्मनो धात्वर्थस्य करणत्वात् तत्सिद्धये कारकाण्यपेक्षते । तत्र तथारुण्यं द्रव्यपरिच्छेदाय क्रिययापेक्षितं [1]वाक्यादेव द्रव्येणापि सम्बध्यते । यथैकहायन्या तयारुणयेति । एवं काष्ठैः पाकोऽपि । पक्षान्तरविकल्पमात्रम् त्विदम् । यतो द्रव्यस्यारुणिम्ना विशेषणविशेष्यभावः कारकैस्त्वक्रियात्मकस्य [2]धात्वर्थस्य क्रियागर्भ एव सम्बन्धः । क्रियात्म-कत्वं वा धात्वर्थस्याभिप्रेत्यैवमुच्यते । फलभावनातो वावच्छिद्य धात्वर्थ-प्रधानया भावनया समन्वयो धात्वर्थान्वयो विवक्ष्यत इति । ननु कृत्यानां प्रैषवाचित्वमेवासिद्धं ब्राह्मणगतानां तदभावादत आह — यावांश्चेति । प्रैष एव शक्तिरन्यतः प्राप्तेरुपाधेरसंभवात् विधित्वेऽवतिष्ठत इति । कथम-न्यत्र शक्तिस्तदसंभवादन्यत्र स्यादत आह — अयमेवेति ।**

---

**१. वाक्यभेदेन आ० मा० ।**
**२. धात्वर्थस्येति नास्ति आ० मा० ।**

तस्मात् प्रत्ययार्थो भावनेत्युपपन्नम्। ननु च यदि प्रयोजकव्यापारो भावनेष्यते ततः पचावधिश्रयणादीनि, यजौ च मानसः संकल्प इत्यादीनां भावनात्वं त एव धात्वर्था इति धातुवाच्यैव भावना स्यात्। नैष दोषः—

धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते।
तथापि सर्वसामान्यरूपेणान्यावगम्यते॥

सर्वत्र ह्यधिश्रयणादी करोतीत्यपि सामान्यव्यापारांशः प्रतीयते पचत्यादि वाच्या विक्लित्त्यधिश्रयणादयः कर्मस्थाः कर्तृस्थाश्च। तत्र यदौदासीन्य-प्रच्युतिमात्रेण परिस्पन्दरूपं निरूप्यते सा भावना। ये तु तदनुरञ्जनसमर्था कर्तृकर्मगता विशेषास्ते तस्या एव करणेतिकर्तव्यतांशयोर्निविशन्ते। एवं तर्हि

त एव च धात्वर्था इति। पचिरपि न विक्लेदमात्रवचनः सिद्धयति विक्लित्तिभ्यामविशेषप्रसङ्गात्। अतो विक्लेदनाभिसन्धिकृतमधिश्रयणा-द्यप्युपादत्ते। अथ वा विशेषेणैवमुच्यते — त एव धात्वर्था इति। तत्र चयजौ तेनैव धातुनोच्यते पचावधिश्रयत्यादिना। सर्वथा धात्वर्था एव व्यापार-विशेषाः प्रयोजकव्यापारो न पुनः करोत्येवंरूपोऽपरो व्यापारोऽस्तीति। धात्वर्थव्यतिरेकेणेति। धात्वर्थसंसर्गोऽस्याः शब्दतो वस्तुतश्च सर्वदावस्थितो यद्वशेनोपजातभ्रमैरन्योन्यरूपावेशेनैक एवाधिश्रयणादिः साध्यस्वभावो व्यापारविशेष इत्युच्यते। शक्यते चैषा निपुणदृष्टिभिर्विवेक्तुम्। तथा हि अधिश्रयणं करोति पाकं करोतीति भिद्यमानेष्वपि पाकादिधात्वर्थेष्वभिद्य-मानो कथं धात्वर्थोऽन्तर्भवेत्।

एवं प्रत्ययातिरेकादवगतातिरेकायाः प्रत्ययविषयं निरूपयति — तत्र यदौदासीन्यप्रच्युतिमात्रेणेति। प्रयत्नपरिस्पन्दयोरुदासीनत्वविच्छेदः सामा-न्यात्मा करोत्यर्थ इत्यङ्गीकरणे विशेषप्रदर्शनमिदं परिस्पन्दरूपमिति। यदा तु सिध्यत्फलोदयानुकूलतामात्रं करोति फलमित्येतज् ज्ञानवेद्यात्यन्तमन्यानपेक्षा द्रव्यस्य फलोदये वृत्तिः क्रियेष्यते तदा प्रयत्नस्य प्रतिबन्धवशेन फलानुदये-ऽप्यप्रच्युतस्वरूपस्य संयोगव्यवधिना च फले हेतोस्तदपेक्षस्य न स्वरूपेण क्रियात्वम्। नहि क्रिया च स्यान्न क्रियते च किञ्चिदिति संभवति, स्वभावा-न्तराभावात्। परिस्पन्द एव तु संयोगविभागयोरत्यन्तमन्यानपेक्षः क्रिया।

धात्वर्थसामान्यं भावनेत्येतदापन्नम् । सत्यं साध्यतया सामान्यं न तु गोत्वादिरूपेण । कथम्—

अन्यदेव हि यागादौ सामान्यं करणात्मकम् ।
अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥

**यत्तु न परिस्पन्द एवैका क्रिया नः कणभोजिवदित्युक्तं न[1] तद्धात्वर्थव्यतिरेकक्रिया तत्त्वप्रदर्शनपरेण किन्तु भावनोपरागापादितसाध्याभावं धात्वर्थमेव क्रियां प्रपञ्चयति । विवृतं चैतत्तत्रैव क्रिया धात्वर्थमात्रं स्यादिति । अत्र चौदासीन्यप्रच्युतिमात्रतया भावनां धात्वर्थाद्विवेचयन् तत्तद्रूपान् व्यापारात्मनः कर्मकर्तृगतान् फलोदयावधि व्यापारस्यावान्तरफलात्मकान् संयोगविभागानेव धात्वर्थानभिप्रैतीति मन्यते[2] । ते च प्रतिप्रयोगं धातूपादानाः करणांशे निविशन्ते । तदनुकूलात्मानश्चेतिकर्तव्यतांशे भावनोपश्लिष्टानां चैषमितिकर्तव्यतात्वम् । न ह्यक्रियेतिकर्तव्यता भवति क्रियात्मकधात्वर्थवादिभिस्तु एवं व्याख्या कर्तव्या । द्वेधा परिस्पन्दः प्रतीतिविषयतामुपपादयति । विक्लेदनमधिश्रयणमुदकावसेकः स्थालीसंमार्जनमिति, प्रत्येकवर्तिभिर्विशेषैरोदनं करोतीति चाद्यपरिस्पन्दात् प्रवृत्त्या फललाभाद्युत्पत्त्यौदासीन्यप्रच्युतिमात्ररूपेण तत्र चरमं रूपं भावयति शब्दविषयः पूर्वाणि च करणेतिकर्तव्यतानामिति । एवं तर्हि धात्वर्थसामान्यमिति । करिष्यति भवान् भावनाकरणादिव्यवस्थां सति भेदे । स एव तूक्तेन हेतुना [3]सिध्यति यतोऽङ्गीकृत्य व्यतिरेकानुपलम्भं प्रत्ययानुवृत्तिव्यावृत्तिभ्यां वस्तुभेदान् भवान् साधयति । ताभ्यां च सामान्यविशेषात्मकमेकमेव वस्तु सिद्ध्यति न वस्तुभेद इति । सत्यं साध्यतयेति । यदि सामानाधिकरण्येनैतौ[4] प्रत्ययौ स्याताम् । भवेद् भवदभिमतम् इह तु पाकेन करोतीति वैयधिकरण्येनोपादीयमानाभ्यां प्रत्ययाभ्यां द्वावर्थाविभिन्नौ विषयीकृतावित्यभिप्रायः । पश्चिमेऽपि व्याख्याने शब्दार्थरूपेण भावना धात्वर्थोपादानं नेयम् । एतमेवाभिप्रायं हेतुप्रश्नपूर्वकं व्यधिकरणप्रत्ययदर्शितरूपवैलक्षण्येन व्याकरोति । अन्यदेव हीति । न यागादौ साध्यात्मसामान्यसम्बन्धस्तद्विलक्षणेन करणात्मनाऽव्याप्तेः । एवं भावनात्मसाध्यसामान्यादेव करणताविलक्षणं प्रतिपुरुषवर्तिनः साध्यात्मकानेव भावना-**

---

१. न तत् परिस्पन्दव्यतिरिक्तक्रियातत्त्व आ० मा० । २. गम्यते आ० मा० ।
३. न सिद्ध्यति आ० मा० । ४. °नैतावित्यारभ्य करण्येनोपादीयमानाभ्यामिति यावत् पू० मा० न पठति ।

भावनायां हि स्वयमेव प्रतिपुरुषं सामान्यविशेषौ भवतः। तथा तत्करणभूते यागादौ समवेतं भावनाकरणांशापेक्षितं धात्वर्थसामान्यं नाम यत्कर्म शब्देनाभिधीयते। विशेषणभावाच्च यागादयो भावनाविशेषा इत्युच्यन्ते न तद्व्यक्तित्वेन। शास्त्रप्रदेशे तु क्रियाकर्मशब्दौ कदाचिद्धात्वर्थे प्रयुज्येते कदाचिद्भावनायां कदाचित्तु प्रत्यासत्त्योभयत्रापि प्रयोगो न स्वरूपाभिधानेन। कुतः—

यादृशी भावनाख्याते धात्वर्थश्चापि यादृशः।
नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित्॥

भावनाशब्दो हि निष्पन्नात्मिकां सत्त्वरूपापन्नां लिङ्गसंख्यायोगिनीमभिधत्ते। न चासावाख्याते तादृश्यभिधीयते लिङ्गसंख्यारहितरूपेण गम्यमानत्वात्। एवं धात्वर्थोऽपि वेदितव्यः। तथा करोतिभावयतीत्येताभ्यामपि श्रुत्या तावदन्यादृगेवार्थः प्रतीयते कृञ्भावयत्यर्थंकरणिका भावना। न चैवंरूपाऽसौ यजेतेत्यादिष्वस्तीत्यपर्यायत्वम्। तत्रान्तरप्रत्ययोत्थापितभावनान्तरबुद्धिमविवक्षित्वार्थसंवादः कर्तव्यः। तेनादूरविप्रकर्षमात्रेणैष प्रयोगो नार्थसाम्येनेत्यवस्थित

**विशेषान् व्याप्नोति तदेतद्विवृतं भावनायां हीति। भावनया करणांशत्वेनापेक्षितम्। अथ वा भावनाक्षिप्तकरणसामान्यविशेषो भावनाकरणांशस्तेनापेक्षितं यज्यादिसमर्पितं यागादीनां करणत्वरूपं धात्वर्थसामान्यं नाम। तच्च फलोद्देशप्रवृत्तेन व्यापारेणान्तरीयकत्वेन विषयीकरणात् करणपक्षे निक्षिप्तमेव व्यापारान्वयमात्रविवक्षया शास्त्रे [1]कर्मधर्मसाधारणेन कर्मशब्देनाभिधीयते। नातोऽपि भेदावगम इत्यर्थः।**

**ननु भावनाविशेषा इत्यपि धात्वर्थाः शास्त्रे निर्दिश्यन्ते। अतस्तद्व्यक्तित्वमेषां स्यादित्यत आह—विशेषणभावाच्चेति। ननु शास्त्रे क्रियाकर्मशब्दौ सङ्कीर्णप्रयोगावतस्तयोरेकार्थनिवेशित्वं स्यादित्याशङ्क्या दूरविप्रकर्षमात्रेणासौ प्रयोगो न स्वरूपाभिधानेनेत्याह—शास्त्रप्रदेशेत्विति। कुतो मुख्यं शब्दं विहायैवं प्रयोग इति पृच्छति—कुत इति। मुख्यासम्भवादित्युत्तरमाह—यादृशी भावनाख्यात इति। एवं धात्वर्थोऽपीति। नाख्यान[2]शब्दोपात्तत्वात् यागादिशब्देनाभिधीयते इति। एवमाख्यातार्थानां भावनात्वं व्युत्पाद्य**

---

१. कर्मसाधनेन आ० मा०।

२. नाख्यातसदृशो यागेनाभिधीयत इति आ० मा०।

मनन्यशब्दवाच्यत्वं भावनायाः । सा तु प्रतीतमात्रैव प्राधान्यादपेक्षान्तरानधीनत्वाच्च प्रथमं तावत् साध्यांशमपेक्षते भावयेत् किमिति । तत्र यावती विध्युपेता भावना तस्यां पूर्वप्रतीतमपि विधित्वं तावन्नाश्रीयते यावदंशत्रयपूर्णा भावनानुष्ठानयोग्या न भवति । विधित्वप्रक्रमाच्च प्रथममेवैतज्ज्ञायते यादृशैरंशैः पूर्णेयं विधानमर्हति तादृशैः पूरयितव्येति । न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तोऽनुतिष्ठति । न च पुरुषार्थः साध्यव्यतिरिक्तांशपातित्वेन कैश्चित्प्रार्थ्यते ततोऽभ्यर्हिततरस्यान्यस्य साध्यस्याविद्यमानत्वात् । तत्र यद्यस्यां भावनायामपुरुषार्थः साध्यः स्यात्ततः पुरुषेष्वप्रवर्तमानेषु प्रत्ययस्य प्रयोजकशक्तिर्बाध्येत । तेन यद्यपि समानपदोपादानप्रत्यासत्तेर्धात्वर्थः सध्यांशपूरणायोपप्लवते तथाप्ययोग्यत्वान्निराक्रियते । न हि प्रत्यासत्तिरेवैका संबन्धकारणं योग्यत्वाद्यपि । तथा च वक्ष्यति यस्य येनार्थसंबन्ध इति । किञ्च—

संबन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते ।।

यथानया स्वर्गयागादिसाध्यसाधनसम्बन्धोपपादनं तद्व्युत्पादयति सा तु प्रतीतमात्रैवेति । साध्यप्रधानं भावनायां नातन्निष्ठतायां भावना स्यात् । तेन प्रतीतमात्रसाध्यमपेक्ष्यते[1] । किञ्च साध्यस्यापेक्षान्तराधीनत्वाच्च सेति कर्तव्यताकं साधनमपेक्ष्य साध्यं भवत्यतस्तेन प्रतीतेन तयोरपेक्षा न भावनामात्रेणेत्यर्थः । क्वचिच्चापेक्षान्तराणां तदधीनत्वादित्येवं पठ्यत इति तस्यां पूर्वप्रतीतमपीति । यदि हि भावनामात्रेण विधिः पर्यवस्येत्ततः उत्तरकालीने साध्यादिभिः परिपूर्णे विधिव्यावृत्तिर्न[2] स्यादिति । सम्बन्धमात्रमुक्तं चेति । ननु तथा धात्वर्थकर्मत्वे पदश्रुत्युपपादिते भावनाया विधिश्रुत्या पुरुषार्थांशसाध्यतेति । पदश्रुतेर्विधिश्रुत्या बाधं वक्ष्यति । सत्यमप्राप्तबाधस्त्वसौ । तेन पदश्रुतिकृता सामान्यसम्बन्धबुद्धिर्धात्वर्थस्य साध्यतामाश्रयेत्तदभावेन विधिस्तेन तु प्रतिबध्यत[3] इति वक्ष्यते । अत्र तूत्पन्नस्य सम्बन्धसामान्यबोधस्याबाध इत्युच्यते—तथा च विवृत्तमिति । यत्र हि शास्त्राद्भिनेति । स्वमर्थं प्रतिपादयतः शास्त्रस्य सन्निधिरूपो यः साधन-

१. अपेक्षते आ० मा० ।
२. व्यापृतिर्न पू० मा० ।
३. प्रतिषिध्यत आ० मा० ।

संबन्धमात्रं कृत्वा निवृत्तव्यापारायां श्रुतावन्यतरांशनिवेशो योग्यत्वादाश्रयितव्यः । तद् यदि साध्यांशादेकप्रत्ययोपात्तेन प्रत्यासन्नतरेण विधित्वेन प्रच्याव्यते ततोऽशान्तरेण नूनं संपत्स्यत इत्येवं प्रतीक्ष्यते । किञ्च—

साध्यांशे पुरुषाणां च प्रत्ययो न नियोजकः ।
स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा ॥

यत्र हि शास्त्राधीना पुरुषप्रवृत्तिस्तत्र तत्संनिकर्षविप्रकर्षावपेक्ष्येते, साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव शास्त्रात् सर्वे पुरुषाः प्रतिपद्यन्ते । ततश्च भावयेत् किमित्यपेक्षितमात्रे विनैव तावच्छास्त्रेणैतावदवगतं पुरुषार्थः कश्चिदिति । तत्र विशेषमात्रमनवगतत्वादपेक्ष्यते । तदपि च न साध्यात्मना, किं तर्हि, एतद्भावनाविषयत्वेन । ततश्च दूरस्थस्यापि स्वर्गादेरेव कृतास्पदस्य संगतिः । धात्वर्थसंबन्धस्त्वनपेक्षितः क्रियेत विध्यानर्थक्याच्च बाध्येततरां श्रुतिः । किञ्च—

भवने यस्य कर्तृत्वं कथंचिदवधारितम् ।
स्ववाक्ये वान्यवाक्ये वा स साध्यत्वं प्रपद्यते ॥

न चात्र धात्वर्थादेर्भवनक्रियासंबन्धोऽवगतः स्वर्गादीनां तु कामशब्दोप संबन्धाद् भवनसंबन्धो विज्ञायते । कुतः—

स्वर्गो मे स्यादितीत्थं हि स्वर्गादिः प्रार्थ्यते भवन् ।
तेनासौ भावनापेक्षः प्रयोज्यत्वेन गम्यते ॥

ततोऽवधृतस्वर्गादिसाध्यांशा भावना केन भावयेदित्येवं करणमपेक्षते । तत्र च शास्त्राधीनप्रवृत्तित्वात् तत्संनिकर्षादावाश्रीयमाणे प्रमाणान्तराच्च योग्यायोग्यत्वयोरज्ञानाद्विध्यविरोधाच्चात्यन्तप्रत्यासत्त्युपस्थितधात्वर्थातिक्रमकारणाभावात्सर्वफलभावनानां च केनचिद्धात्वर्थविशेषेण विनानुपपत्तेर्यागेनेत्येवं विज्ञायते । यद्यपि च यागः स्वयमेव तावदनिष्पन्नस्तथापि स्वसाधननिष्पादितः

**भावश्च शास्त्रप्रमेयो न साध्यतया प्रसिद्धसाध्योद्देशेन [1]विधानात् । अतो न साध्यतापगमे [2]विधिव्यावृत्तिरिति । तदपि च न साध्यात्मनेति न सामान्यात्मको विशेष इति । किन्तर्हि तदात्मनावगतानां साध्ये कोऽत्रेति योग्यायोग्यत्वयोरज्ञानादिति । विशेषणस्य यागस्य स्वर्गसिद्धौ योग्यतेत्यज्ञानम् । वाक्यार्थावगत्युपायस्तु सामान्ययोग्यतापगमोऽस्त्येवेत्युक्तं सर्वफलभावनानामिति । किञ्च यदि भावनोऽपीतरकालवर्तिवद्वेदः साधनत्वं बोधयति**

---

१. °द्देशेन साधनविधानात् आ० मा० ।
२. °सन्निधिव्यावृत्तिरिति आ० मा० ।

सन् साधयिष्यति सर्वमेव च कदाचिन्निष्पन्नं कदाचिदनिष्पन्नम्। न च प्राक्छास्त्रप्रवृत्तेर्निष्पत्तिः क्वचिदुपयुज्यते फलसिद्धिकालमात्रोपयोगित्वात् करणनिष्पत्तेः। प्रमाणवशाच्च त्रिकालवर्त्तिनामपि साधनत्वाविरोधः। तस्माद् यागादीनां करणत्वं तच्चापूर्वद्वारेणेति तच्छब्देभ्योऽपूर्वप्रतीतिः। अतश्चैवमपि सूत्रार्थः संभवति ये भावार्थाः भावनाप्रयोजनाः, कर्मशब्दाः यज्यादयः तेभ्यः क्रिया प्रतीयेतेति। ननु चोक्तेन कर्मकरणसंम्बन्धन्यायेन सकर्मकधातुयुक्तादेवाख्याताद्भावनावगतिः प्राप्नोति। तथा हि—

येनेप्सिततमैर्भावैः किमित्यंशोऽवरुध्यते ।
तद्योगी तेन धात्वर्थो न कश्चित्स्यादकर्मकः ॥

यदि वा सर्वधातूनां सकर्मकत्वापत्तिरथ वाकर्मकेभ्यो भावनया न भवितव्यम्। नैष दोषः। कुतः—

अन्यदेव हि धात्वर्थप्राप्यं कर्म सकर्मके ।
अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम् ॥

ओदनं पचति ग्रामं गच्छतीति धात्वर्थापवर्गलभ्यमेकं कर्म, अपरं पुनर्भावनाकर्म। तत्र कदाचिद्धात्वर्थकर्मैव भावनाकर्मत्वमपि प्रतिपद्यते पाकेनौदनं भावयतीति। कदाचित् पुनः स्वकर्मविशिष्टधात्वर्थयुक्ता भावना कर्मान्तरेण युज्यते ग्रामगमनेन स्वार्थं भावयेदिति, ओदनपाकेन चेति। तच्चैतद्धात्वर्थात् परत—

---

**न तत् प्रमाणान्तराप्रवृत्त्या निराकर्तुं शक्यमिति पूर्वोपपत्तिनिरुत्तरीकृतं परं विहसन्नाह—प्रमाणवशाच्चेति।**

**तद्योगी तेन धात्वर्थ इति। भावनायोगी यः सोऽकर्मको न स्यादकर्मको वा यः स भावनायोगी न स्यादिति। अन्यदेव हि धात्वर्थ[1]प्राप्यमिति। नानेनाधिष्ठानभेदः प्रतिपाद्यते, किन्तु धात्वर्थकर्मत्वमेव भावनां प्रति कर्मत्वं न भवति किन्तु भेदेनानयोः कर्मग्रहणमिति अधिष्ठानं तु भवेदप्येकमित्युक्तम्। तत्र कदाचिद्धात्वर्थकर्मैवेति। धात्वर्थस्याव्यापारात्मकत्वपक्षे तत्कर्म कथमिति। तदुच्यते—भावनोपरागात्तत्रापि क्रियात्वव्यवहारादन्तर्णीतधात्वर्थायां भावनायां क्रियाविशेषत्वेन प्रतीयमानायां धात्वर्थसाध्यमोदनादिकर्मात्मना[2]न्वीयमानं व्यापारसामान्यस्योद्दिष्ट तृप्त्यादिकर्मकत्वात्तद्विशेषस्य धात्वर्थस्य कर्मेत्युच्यते। व्यापारात्मन**

---

१. लभ्यमिति आ० मा०।
२. °ना प्रतीयमानम् आ० मा०।

स्तदवाप्यमात्रत्वेन गम्यमानं धात्वर्थान्तरतिरोहितं भावनाकर्मतया सर्वत्रावधार्यते। तच्च प्रायेणैवं कामशब्देनैव संबन्धमापद्यते। सुखकाम आसीत, स्वास्थ्यकामः शयीतेति सत्यपि आसिशेत्योरकर्मकत्वे यः प्रत्ययेन करोत्यर्थोऽभिहितस्तत् कर्मत्वेन च स्वादीन्यवधार्यन्ते। तेन करोतेः सर्वदा सकर्मकत्वादकर्मकाख्यातानामपि च तत्सामानाधिकरण्यदर्शनात् किं करोत्यास्ते, किं करोति शेत इति सिद्धैवमादिष्वपि सकर्मिका भावना।

यजेरपि तु यत्कर्म पूज्यत्वाद्देवतेष्यते।
तदुज्झित्वैव पुत्रादेः कर्मत्वं भावनाश्रितम्॥

तस्मात् सकर्मकाकर्मकयोरविशेषादासनेन भावयेदित्यपि प्रयोगसिद्धिः। कस्तर्हि सकर्मकाकर्मकयोर्भेदः। उच्यते—

एव तु धात्वर्थस्याकर्मकत्वं दुःसम्पादम्। उक्तं हि न चास्त्यसौ व्यापारो यत्रासत् किञ्चिन्न जायत इति। [1]तदाप्यमानत्वे नेत्युद्देशेन भावनाकर्मत्वं दर्शयति। धात्वर्थकर्मतां व्यवच्छिनत्ति। तच्च प्रायेणेति। शब्दशक्तिः प्रतिप्रयोगमेवं व्यवस्थितेति। अथ वा यस्योत्पत्त्या व्यापारः पर्यवस्यति। तद्व्यापारस्यापवर्गसम्पत्त्या कारकं कर्मेत्युच्यते। धात्वर्थावसानश्चाख्याताभिधानाद[2]विधीयमानो व्यापारः तदनन्तर भाव्येनाभिधानोपात्तेन रूपेण न कर्म गृह्णातीति तस्य प्राचुर्यम्। प्रयोगस्याव्यवहितफलोद्देशेन तु तदवसानता व्यापारस्य नाभिधानोपात्ता। विवक्षया स्वर्गिनं चिनुते इत्यादौ सम्पाद्या। वक्ष्यति ह्येतावानेव वर्तमानः काल इति। तेन तात्पर्याभिधायिन एव भावनाकर्मत्वोपपादकस्यैवं कामशब्दस्य तत्र प्रयोगः प्रचुर इति। धात्वर्थेनानुपस्थापिते कर्मण्यकर्मके धातौ भावना स्वमहिमलब्धेनैव कर्मणोपपद्यते इत्युक्तोपस्थापितेऽपि नावश्यं तदेव गृह्णातीति यथाप्रस्तुत एव यजतावित्याह—यजेरपीति[1]। अथवोक्तमिदं क्वाचिद्धात्वर्थकर्मैव।

भावना कर्म क्वचिदन्यदिति। तत्र यजेतेत्यत्र कथमित्यत आह—यजेरपि त्विति। भावना कर्मणैव तद्विशेषस्य धात्वर्थस्य सर्वत्रैव सकर्मकत्वोत्पत्तेः कथं तद्विभाग इति पृच्छति—कस्तर्हीति।

---

१. तद्वा वाच्यतामात्रत्वेनेति उद्देशेन आ० मा०।

२. °द्वसीयमानो आ० मा०।

साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक् ।
सकर्मकः स धातुः स्यात् पारम्पर्ये त्वकर्मकः ॥

आसनशयनादौ हि न नियमेनानन्तर्येण वेदं तदिति वा कर्म निरूप्यते, तेनाकर्मका अभिधीयन्ते । पचिगम्यादीनां तु विक्लिद्यतत्संयुज्यमानसाक्षात्संबन्धिकर्माव्यभिचारात् सकर्मकत्वं, न तु भावनाविशेषणे कश्चिद्विशेषः । सेयं भावनांशद्वयपरिपूर्णा सती सर्वकरणानामुपायाननुगृहीतानां करणत्वानुपपत्तेः कथं भावयेदितीतिकर्त्तव्यतामपेक्षते । सा च प्रत्यक्षादीनामनुग्राहकदर्शनशक्त्यभावादत्यन्तशास्त्रगम्येति यथासंनिकर्षं तदसंभवाद्वा यथाकथंचिदुपस्थाप्यमाना शास्त्रानुसारेण श्रुत्याद्युपदेशेन चोदनासामान्याद्यतिदेशेन वात्यन्तादृष्टोपकारद्वारेणान्यथानुपपत्त्या कल्प्यते । ततः परिपूर्णत्वादनुष्ठातुं योग्येति विधीयते । तद्विधानाच्चार्थापत्त्या यागादिविधानमित्युपपन्नं भावार्थसूत्रम् ।

भवन्ति केचित् कर्मशब्दा यागो यजनमिज्येत्युदाहर्तव्ये तत् सामानाधिकरण्यसिद्धश्येनैकत्रिकाद्युदाहरणं यागादिकरणत्वचोदनोत्तरकालभाविकर्मशब्दत्वेन पारतन्त्र्यात् सुज्ञानम्[1] । स्वतन्त्राणां कथञ्चिदपि भावार्थत्वाशङ्कासंभवात् । यागादयो हि स्वातन्त्र्येणापि कदाचिदनुमानाद् भावार्थाशङ्काविषयाः स्युरिति । केचिद् भावार्था न कर्मशब्दा यथा भावयेत् कुर्यादिति चोदाहरणम् । भूत्यादयस्तु प्रयोज्यव्यापारवचनत्वान्नैव यथावर्णितभावार्था इत्यनुदाहरणम् । तत्र यथाकथञ्चिण्णिजन्तव्युत्पत्त्या भावशब्द एको नीयेत नेतरो । तावपि तु प्रयोज्यव्यापारांशेन कथञ्चिद् भावार्थावित्युदाहृतौ ।

साक्षादिति । द्वेधा व्याचष्ठे । आनन्तर्येणेदं तदिति वेति । सम्प्रति प्रसङ्गात् करणोपदेशस्य चेतिकर्तव्यतासम्भवेन प्रतिष्ठा स्यादिति कर्तव्यताप्राप्तिं दर्शयति—सेयं भावनेति । यथा सन्निकर्षमिति । श्रुत्याद्युपदेशेन यथा कथाञ्चिदुपस्थाप्यमाना चोदनासामान्याद्यतिदेशेन कल्प्येत अर्थापत्त्या च दृष्टोपकारलाभ इति । यागादिकरणत्व चोदनेति । धातवो हि आख्यातप्रत्ययोपात्तभावनोपश्लिष्टस्वार्थविषयत्वेनोपलब्धपूर्वास्तदप्रयोगेऽपि पूर्वोपलम्भसामर्थ्याद्भवनोपश्लेषाधिकरणमेव स्वार्थमवबोधयन्तीति । श्येनादिशब्दास्तु कारकविभक्त्यन्ता भावनातो निष्कृष्य प्रदर्शितार्थेन धातुना सामानाधिकरण्यमनुभूय तदर्थवचनतां

१. यजेरन्निति आ० मा० ।

अथ वा द्वितीयसूत्रार्थव्याख्यानेन भावनाप्रयोजनत्वमंशवाचित्वे नास्तीति विनापि सकलार्थाभिधानाद्भवन्ति भावार्थाः। कथं पुनरमी न कर्मशब्दा यदा धातुमात्रं कर्मशब्दत्वेनोक्तं' • निर्विशेषस्य सामान्यस्यानुष्ठातुमशक्यत्वादकर्मशब्दत्वम्। अतो विशेषवाचिनामेव धातूनां कर्मशब्दत्वग्रहणादचोद्यमेतत्। यदि हि श्येनचित्रादर्शपौर्णमासशब्दाः फलैः संबध्येरंस्ततो यागकरणत्वाभावात्तत्सामानाधिकरण्यनिमित्तनामधेयत्वानुपपत्तेः प्रसिद्ध्यादिभिर्गुणविधित्वमेव स्यादतः स्थित एतस्मिन्नधिकरण इत्याह। कस्मात् पुनरिदं तत्रैव न नीतं प्रमाणलक्षणेनासंबन्धात्। अथ नामधेयत्वं कस्मादत्र नानीयते भेदलक्षणेनासंबन्धात्। तस्माद् यथान्यासमेव स्थितयोरर्थात् पौर्वापर्यसिद्धिः। न चैषामर्थितेति फलपदाभिप्रायम्। विविभक्तित्वादिति। संबन्धनिमित्ताख्यातविभक्तिविगमादथ वा निष्पन्नार्थाभिधायिसुब्विभक्तिविशेषयोगो विविभक्तित्वम्। तस्मान्न द्रव्यादिशब्दानां फलसंबन्ध इति। आह च—

साध्यसाधनसंबन्धः सर्वदा भावनाश्रयः।
तेन तस्य न सिद्धिः स्याद्भावनाप्रत्ययादृते ॥१॥

न तावत्प्रत्ययस्येष्टमपूर्वप्रतिपादनम्।
न च धातोः स्वतस्तत्स्यान्नाम्नो वा परतः समम् ॥

यदि हि भावनावचनस्यैवापूर्वप्रतिपादकत्वमिष्यते धातोर्वा प्रत्ययनिरपेक्षस्य ततो नामपक्षो दुर्बलः स्यादिह तु तथैव धातोः प्रत्ययसंबन्धानुगृहीतस्य भावनानुरञ्जननिमित्तं करणवाचित्वं भवत्येवं नामपदस्यापीत्यविशेषः॥२॥

**प्रतिपद्यमाना न भावनोपश्लेषं स्वार्थेऽन्तर्भावयन्तीति। अथ वा द्वितीयसूत्रेति। पूर्वं भवनश्लिष्टप्रयोजकव्यापाराभिधायिनो भावशब्दस्यार्थैकदेशभवनोपादानाद् भावार्थत्वमुक्तं सम्प्रति भावनोपादानेन प्रयोजकव्यापारविशेषणशक्तेस्तत्प्रयोजनत्वेन शब्देन भावार्थत्वमुच्यत इति। कस्मात् पुनरिति। औपोद्घातिकमपीदं प्रमेयविचारात्मत्वादत्रैवोचितं न प्रमाणलक्षण इत्यभिप्रायः। कथमाकृत्यधिकरणं वाच्यनिर्णयाय तत्रैवेति चेत् न, पदार्थानां वाक्यार्थप्रतिपत्त्युपायत्वेन प्रमाणवर्गेऽप्यन्तर्भावादिति ॥१॥**

**नाम्नो वा परत [1]इत्यपि शब्दस्यार्थे वा शब्दो व्याख्यातः। एवं नामपदस्यापीति। अथ वा परतो वा भवद्धातुवन्नाम्नः सममिति व्याख्येयमिति। नामार्थस्य न शक्नोति दृष्टेनोपकर्तुमिति।**

---

१. व्याख्यातोऽपि आ० मा०।

यदुक्तं यदैकस्मादपूर्वं तदेतरत्तदर्थं भविष्यतीति तद्गतं तावद् वस्तुधर्मेण विशेषं दर्शयति । कथम्—

बह्वदृष्टप्रसङ्गाद्धि धर्मो नेष्टः पदे पदे ।
नाम्नः फलेन संबन्धे परिहारो न तस्य च ॥

एकस्माददृष्टे कल्पिते यदीतरद् दृष्टार्थत्वेन तादर्थ्यं भजते ततो लाघवं लभ्यते । अस्य तु तादर्थ्यसिद्धये ततोऽपि पुनरदृष्टं कल्प्यत एव, ततो वरं फलेनैव सर्वाणि संबद्धानि । न च संबन्धवैरूप्यक्लेशाश्रयणं, नाम्नश्च फलसंबन्धेऽवश्यं धात्वर्थस्तदनुग्रहार्थोऽभ्युपगन्तव्यः । स च स्वयं निष्पाद्यः सिद्धरूपस्य नामार्थस्य न शक्नोति दृष्टेनोपकर्तुम् । न हि नामार्थस्तमपेक्षते शब्दप्रयोगवेलायामेव निष्पन्नतया गम्यमानत्वादनपेक्षणीयस्य वा सिद्धत्वेनायोग्यत्वात् प्रयुज्यतेऽस्मिन्निति चाभिधेय एव प्रयोगः । तदाधारैव हि निष्पन्नरूपोपलब्धिरनुत्पन्नत्वे क्रियारूपस्य वक्तव्ये विनाशित्वप्रदर्शनं निष्पन्नस्यापि क्षणिकत्वेन पुनः पुनर्निष्पत्त्यपेक्षोपपत्तेः । तेभ्यः पराकाङ्क्षान्याकाङ्क्षा, निष्पाद्यत्वेन वा प्रधानाकाङ्क्षा न विद्यत इत्यध्याहारः । अथ वा तेभ्यः परा दूरे आकाङ्क्षेत्यर्थः । कुतः, भूतत्वादेवेति । स्वरूपकथनार्थमुपन्यस्तं निष्पन्नत्वादेवेति । पुनरन्ते तदेव हेतुत्वेनोद्दिष्टं *सूत्रकारेण* ॥३॥

**नन्वाश्रयत्वेन शक्ष्यति । नैतत्, नहि सम्बन्धाय किञ्चित् विधीयते किन्तु सम्बन्धिनमुपकर्तुमतो नामार्थो धात्वर्थान्वयिना विधिविषयीकृतेन रूपेण फलं साधयत् प्रति सम्बन्धिनं प्रयोजनान्तरप्रयुक्तमेव धात्वर्थं गृहीत्वा साधयतीति श्लिष्यते । धात्वर्थस्य तु नामार्थं प्रति विधीयमानस्य न सम्बन्धातिरिक्तं किञ्चित्कार्यं पश्यामः । करणत्वमपि तस्य न सम्पाद्यम् । यतः क्रियानिर्वर्तकं रूपं करणं न क्रियासाध्यमिति ॥२॥**

**नहि नामार्थस्तमपेक्षत इति । अनेन निर्वृत्तेन ममेदं साधनीयमिति नापेक्षते, येन धात्वर्थस्तदर्थः स्यादिति । किमित्युच्चारणं प्रयोगो न व्याख्यायतेऽत आह—तदाधारैवेति । प्रयोगे रूपोपलब्धिरुच्यते । अभिधेया[1] च सेति । निष्पन्नस्यापि क्षणिकत्वेनेति यदि प्रमाणप्रवृत्तिसमये निष्पत्तिरपेक्षां वारयेत्ततस्तदभावोऽपेक्षासिद्धयेऽभिधीयेत । यतस्तु निष्पन्नस्याप्यनन्तरविनष्टस्यास्त्येवापेक्षातः स्थायित्वमेव व्यावर्तनीयमनिष्पत्तिरपि ह्यस्थायित्वादेवेति । निष्पाद्यत्वेन चेति । निष्पाद्यत्वेन कारणेन प्रधानस्य सतो याका-**

१. अभिधेये च आ० मा० ।

आख्यातवर्ती धात्वर्थः साध्यरूपः प्रतीयते ।
तस्मिन् फलवतीष्टे तु नाम्नो दृष्टार्थतेष्यते ।।

धात्वर्थस्तावत्प्रकृत्यैव साध्यात्मको विशेषतस्त्वाख्यातगतेन धातुनोच्यमानः । स यदि फलसाधनत्वेन चोद्यते ततोऽसिद्धरूपत्वात्तस्य साधनाकाङ्क्षायां सत्यां नामपदं गुणविधित्वेन नामधेयत्वेन वोभयथापि दृष्टेनैव तादर्थ्यं लभते । ननु नामधेयपक्षे नामपदमपि साध्यार्थं भविष्यतीति धातुतुल्यं स्यात् । न । तस्य फलसंबन्धे गुणविधित्वेन सिद्धार्थत्वात् । अपि च—

साध्यात्मकोऽपि धात्वर्थो यदा नाम्नाभिधीयते ।
तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ।

यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यस्तथापि नामपदेनोच्यमानो लिङ्गसंख्यायोगित्वात् सिद्धरूपोऽभिधीयते । अभिधानकृता चाकाङ्क्षोत्पत्तिर्न वस्तुकृता । तस्माद्युक्ता धातोरेवाकाङ्क्षा न नाम्न इति । किञ्चाश्रितत्वात् प्रयोगस्येति । अधुना शब्दप्रत्यासत्तिकृतो विशेषोऽभिधीयते । पुरुषव्यापारात्मिकायां भावनायां धात्वर्थोपश्लेषोऽपि पुरुषेणाश्रितस्तदतिक्रमहेत्वभावाच्च न नामपदग्रहणम् । तस्मादस्ति विशेषः ।।४।।

## [ अपूर्वाधिकरणम् ]

सिद्धं कृत्वापूर्वं तत्प्रतिपत्त्युपायशब्दविशेषविचारः कृतः । तस्य सिद्धत्वमेवाप्रसिद्धमतस्तदेव तावत् प्रतिपादनीयमित्यत आह—

ङ्क्षा निष्पादकं प्रति सा न विद्यते निष्पाद्यत्वस्यैवाभावादिति ।।३।।

धात्वर्थस्तावदिति । अक्रियात्मकत्वेन धात्वर्थस्य [1]क्रियानिवर्तकत्वमेव साध्यत्वं तच्च प्रकृत्या यतो न लोकसिद्धोऽसौ लभ्यत इति ।

ननु नामधेयत्वपक्ष इति । देशान्तरे परिहृतस्यापि[2] परिहारान्तरदानायोपन्यास इति । धात्वर्थोपश्लेषोऽपीति । आख्यातप्रतिपाद्यं भावनां धात्वर्थोपश्लेषमपोद्धृत्या[3]नुष्ठातुमशक्तिरिति ।।४।।

सिद्धं कृत्वापूर्वमिति । अनेन पूर्वाधिकरणाक्षेपादिदमधिकरणमिति दर्शयति । भावार्थेभ्योऽपूर्वमिति । निगमनमपूर्वसद्भावमेतदधिकरणप्रतिपाद्यमपेक्षते । अतस्तदाक्षिप्तमेतत्तदर्थव्यवस्थितये क्रियत इति । अत्र

१. क्रियानिर्वर्त्यत्वमेव आ० मा० ।
२. प्रदेशान्तरपरिगृहीतस्यापि आ० मा० ।
३. °मपोद्धृत्य प्रत्येतुम् आ० मा० ।

फलाय विहितं कर्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रति गम्यते ॥

वेदवाक्योपात्तस्वर्गयागादिसंबन्धान्यथानुपपत्त्या तच्चोदनयैवापूर्वमपि चोदितं भविष्यतीति प्रमाणवत् । तस्मादस्त्यपूर्वमिति । अत्रापरे निपुणंमन्यास्तन्निराकरणमाहुः—

प्रमाणपञ्चकाज्ञानादपूर्वं षष्ठगोचरः ।
तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते ॥

वस्त्ववबोधनार्थानि प्रत्यक्षादीनि पञ्च प्रमाणानि । तद्यत्र तानि न प्रवर्तन्ते तदभावेनाभावात्मनैवावगम्यते । न चापूर्वे तानि प्रवर्तन्ते । तस्मात् सर्वप्रमाणापूर्वत्वादन्वर्थनामैवासद्रूपमपूर्वं प्रतिपत्तव्यम् । तत्र प्रत्यक्षेण तावन्नावगम्यते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसंबन्धात् । नाप्यनुमाने, केनचिल्लिङ्गेन सहादृष्टसंगतित्वात् । न हि विशेषतः सामान्यतो वास्य केनचित्संबन्धोऽनुभूतपूर्वः । सर्वत्रैव च वस्तुसत्ताबोधायानुमानमपर्याप्तमित्युक्तं प्राक् ।

पदवाक्ये न चैतस्य वाचके शृणुमः क्वचित् ।
शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते ॥

**पूर्वपक्षोपपत्तयो यदि फलवचनसामर्थ्यादित्यादि भाष्योक्तास्ताः भाष्यव्याख्यायामनुसरिष्यति । दर्शिते तु प्रमाणे तासामवतार इत्यपूर्वे प्रमाणमाह— फलाय विहितमिति । तत् सिद्धिरिति कर्मणः फलार्थता सिद्धिः । वेदवाक्योपात्तेति । श्रुतार्थापत्तिगम्यां वेदवाक्यैकदेशमेयतामाह । सेयं व्यक्तीकृता तच्चोदनयैवेति । तदेतद्*भाष्यकारीय*मपूर्वप्रतिपादनाय सूत्रव्याख्यानं केचित् सिद्धान्तैकदेशिनो दूषयन्ति कर्मफलसम्बन्धस्याकल्पितेऽप्यपूर्वे सम्भवात् । अपूर्वकल्पनायाश्चानेकानुपपत्तिग्रस्तत्वात् । पूर्वाधिकरणं च भावार्थेभ्यः फलक्रियावगतिपर्यवसितमिति तेषामभिप्रायः ।**

**तदेतत् स्वपक्षपरिशुद्धये दूषयितुमुपन्यस्यति— अत्रापरे निपुणम्मन्या इति । रूपाद्यनात्मकत्वेनेति । आदिशब्देनान्यानप्युपलम्भ[1]फलोन्नीतान्**

---

1. फलोपेतान् आ० मा० ।

आगमिकत्वमप्यस्य पदेन वोच्यमानस्य स्याद्वाक्यगम्यस्य वा । तत्र पदं न तावत् किञ्चित्साक्षादेतस्य वाचकमस्ति । यत्त्वपूर्वमिति तदन्वर्थत्वात् सुतरामस्तित्वं बाधते । न च प्रमाणान्तरानवगतेऽर्थे पदं प्रवर्तते । न च स्वातन्त्र्येण प्रमाणमिति स्थितम् । तथा च वाक्यस्यावाचकत्वादेवाप्रामाण्यम् । न च केचित्पदार्थाः श्रूयन्ते, येषां भेदः संसर्गो वापूर्वं भवेत् । येऽपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकारास्तेऽपि च स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्यचिदित्यपूर्वं प्रत्यप्रमाणम् । उपदेशानवगते चातिदेशोऽपि न प्रवर्तते, विधिप्रतिषेधविषयत्वाच्च समस्तस्य वेदस्य । न क्वचिद्वस्तुस्वरूपप्रतिपादनार्थत्वं भवतीति नागमगम्यमपूर्वम् । न चादृष्टपूर्वस्यादृष्टसदृशस्य चोपमानविषयत्वम् । कामं वानुपलभ्यमानशशविषाणादिसारूप्यादभावात्मकत्वोपमानप्रसङ्गः । तस्मादसद्रूपेणोपमेयम् ।

अर्थापत्त्यापि नैवैतदस्तीत्येवं प्रतीयते ।
अन्यथाप्युपपन्नत्वात् फलयागादिसंगतेः ।।

दृष्टार्थापत्तिस्तावद्धर्मास्तित्ववदेवात्रापि निराकर्तव्या । स्वभावादिनापि ईश्वरदरिद्रादिवैचित्र्योपपत्तेः । श्रुतार्थापत्तिरपि कीदृशी भवति । यत्र प्रत्यक्षेणैवानुपपत्तिर्दृश्यते । न च कल्प्यमानोऽर्थः केनचिद्विरुध्यते, तद्यथा 'स्रुवेणावद्यति' इत्युक्ते न च कथञ्चिदपि मांसपुरोडाशादीनि तेनावदातुं शक्यन्त इति । प्रत्यक्षगम्यत्वात् । अपि च तत्रापि प्रसक्तेरेवं कल्प्यते द्रवाणामिति । न चैषा कल्पना केन चिद्विरुध्यते श्रुतहान्यश्रुतपरिकल्पनाभावात् । अपूर्वं तु न कदाचित्

योग्यताप्रकारान्निषेधतीति । तदन्वर्थत्वादिति । समुदायस्यार्थविशेषेणसम्बन्धग्रहणासम्भवेन रूढित्वानुपपत्तेरन्वर्थत्वम् । तदेतदुक्तम्—न च प्रमाणान्तरावगतेऽर्थे इति । स्वाभाविकत्वेनापीति । अस्वा[1]भाविकत्वेनापि वैचित्र्यस्य व्यवहितादपि कर्मणोऽपूर्वरहिता[2]दुत्पत्तिर्वक्तव्या । तच्चैतत् श्रुतार्थापत्तिदूषणेऽभिधास्यत इति । अत्र नोक्तमनुसन्धातव्यं तदत्रापीति । अपि च तत्रापि प्रसक्तेरिति । एवं च श्रुतहानिरश्रुतकल्पना च न स्यात् । तदेतदाह—न चैषा कल्पनेति । इयमीदृशी च कल्पना न श्रुतिविरोधिनी, तस्याभावात् । अङ्गीकरोति हि सामान्यशास्त्रमितरेण विशेषितमभिधेयसामान्य[3]प्रयुक्तविशेष उपसंहारम् । अपूर्वकल्पनायां तु नेयं विधास्यतीत्याह—अपूर्वं त्विति । न हि यागविधिरपूर्वंयागसाधा-

---

१. अस्वाभाविकत्वेऽपि आ० मा० ।

२. तावुपपत्ति० आ० मा० ।

३. सामान्यविशेष० आ० मा० ।

फलसाधनत्वेन संभाव्यते । यतोऽन्यकारणनिषेधे सति तद्विषया परिशेषसिद्धिः स्यात् ।

यदि त्वन्यनिवृत्त्यैव परिशेषः प्रकल्प्यते ।
शशशृङ्गनिमित्तत्वं फलानां किं न गम्यते ।।

न हि कारणान्तरप्रतिषेधमात्रेणापूर्वनिमित्तता गम्यते, शशविषाणादिभिरनैकान्तात् । अपि च यदि तावदपूर्वं यागस्य साध्यमिष्यते ततः श्रुतं स्वर्गं परित्यज्याश्रुतं परिकल्पितं भवेत् । अथ फलं प्रति साधनभूतं, ततः श्रुतयागपरित्यागात् सैव गतिः । न चाकारान्तरेण[1] तन्निरूपयितुं शक्यते । तेनागमप्रामाण्याद् यागादेव फलेन भवितव्यम् । कथं नष्टः साधयतीति चेत् । यदि शास्त्रादेवं गम्यते किं भवतो विरुध्यते ध्रियमाणेन वा फलं साधनीयमित्यत्र किं प्रमाणम् । अपि चाकाशादीनि नित्यावस्थितानि कस्मात् फलं न साधयन्ति । यदि च श्रूयमाणातिरेकेणावस्थायित्वसंभवादपूर्वेण फलं साध्यत इति कल्प्यते ततो वरमाकाशादेरेव कल्पितं, तस्य हि स्थानसद्भावावपि तावत् प्रसिद्धौ केवलं फलनिमित्तत्वमाश्रयणीयम् । अपूर्वे तु सद्भावप्रभृति सर्वं निष्प्रमाणकं कल्पनीयम् । अथ यागसंबन्धिता केनचिदवस्थितेन फलं दातव्यमित्यभिप्रायः । तथा सत्यपि—

यष्टुरेवात्मनो यागैः संगतस्य स्थितस्य च ।
निमित्तत्वं वरं क्लृप्तं लाघवं हि तथा सति ।।

यदि यागस्य विनाशित्वादन्येन तत्संबन्धिना फलं साध्यमानं यागेन साधितं भवति ततो लाघवादतिक्रान्तयागेनात्मनैव वरं साधयितव्यम् ।

**रण्येन साधनत्वमवगमयति । एवं तावन्नास्ति स्रुवावदानवत् परिशेषसिद्धिरूपार्थापत्तिरित्युक्तम् । एवमपि तु कल्पयतः श्रुतहान्यश्रुतापत्तिप्रसङ्ग इत्याह—अपि चेति । अश्रुतकल्पना च प्रमाणाभावेन दुष्यति । नहि तया श्रुतमुपपाद्यत इति । यदि च श्रूयमाणातिरेकेणेति । अस्मिन्नप्यभ्युपगमेनापूर्वं प्रमाणमाकाशात्मकर्माभावादिकारणोपपत्तेरिति । अभ्युपेत्य वादोऽयम् ।**

---

१. न च प्रकारान्तरेणेति पाठः काशीमुद्रितपुस्तके ।

यद्वा कर्मविनाशोऽयं फलं नः साधयिष्यति ।
अङ्गियागविधानाद्धि तदयत्नेन कल्प्यते ॥

विनाशिनि हि कर्मणि चोदिते किं दृश्यते, कर्म च विनष्टं शास्त्रप्रत्यया-च्च कालान्तरे फलं भविष्यतीति निश्चीयते । यच्च यत् प्रतीत्योपजायते तत्र तस्य निमित्तत्वमित्यवधार्यते । तस्मादभावनिमित्तमेव फलमस्तु । स्यादेतत् । न क्वचिद्वस्तुनः साधकत्वं दृष्टमिति । तदुच्यते । अपूर्वस्य वा क्व दृष्टं येना-त्राश्रीयते तदवश्यकर्तव्ये लौकिकनिमित्तधर्मातिक्रमे किमपूर्वनिमित्तत्वं कल्प्य-तामुताभावनिमित्तत्वमिति, क्लृप्ताभावनिमित्तत्वातिलङ्घनेन काल्पनिकापूर्व निमित्तत्वपरिग्रहो न युज्यते । किञ्च—

यदि चैकान्ततो ब्रूयुः शब्दाः कालान्तरे फलम् ।
ततस्तेनैव कल्प्येत निमित्तं वस्तु किञ्चन ॥

क्रियाफलसंबन्धप्रतिपत्तिमात्रचरितार्थासु चोदनास्वनुपात्ते कालान्तरे कर्मस्वभावादानन्तर्ये गम्यमाने कुत एतत्कालान्तरभावि फलं तत्सिद्धयर्थं चापूर्वं-कल्प्यत इति । तत्रैतत् स्यात् । कृते कर्मण्यनन्तरं फलमनुपलभ्य कालान्तरफलो-त्पादद्वारमपूर्वकल्पनमिति । तदयुक्तम् । कुतः—

पूर्वं निश्चित्य शास्त्रार्थं प्रयोगे हि प्रवर्तते ।
प्रयोगोत्तरकालं तु न शास्त्रार्थोऽवधार्यते ॥

स्वपक्षस्तु यागादेवातीतफलमिति । यच्च यत् प्रतीत्येति यत्प्राप्येत्यर्थः तदवश्यं कर्त्तव्य इति । न लोकावगतकारणसामान्यं क्रियात्वाद्यपूर्वे किञ्चिदस्ति । न च भावकारणसामान्यम् । भावानामपि केषाञ्चिद कारणत्वादित्यभिप्रायः । कर्म स्वभावादानन्तर्यमिति । ननु नानेनापूर्वमात्रं प्रतिक्षिप्यते, किन्तु कर्मफलसम्बन्धोऽपि । तत्र स्वपक्षोपसंहारो विरुध्यते । तस्मात् कृतत्वमात्रेणेति । तदुच्यते—यस्य मतं सत्येव हेतोः फलं नातीत-इति तं प्रत्येतदुच्यते कर्मणो हेतोः स्वभावादिति । स्वमते तु अकल्पिता पूर्वमेव शास्त्रफलसन्निधिव्यवधिसाधारणं कर्मणो हेतुत्वमात्रं गमय-तीति । प्रयोगोत्तरकालं त्विति । यावती पदार्था[1]नां वाक्यार्थप्रतिपादने

---

१. पदानामिति—आ० मा० ।

न ह्यविद्वान्विहितोऽस्ति [मी० सू० ३।८।१८] इति तावदवश्यं यावच्छास्त्रगम्यं तत्सर्वं प्रागनुष्ठानादवगन्तव्यम्। न च तत्काले कर्मफलकालवियोगज्ञानकारणमस्ति। यच्च शास्त्रप्रवृत्तिवेलायां तदन्तर्गतत्वेन नावधारितं तदुत्तरकालमेवावधार्यत इति। कुत एतत्। अपि च—

सर्वकर्तृष्वशक्तत्वाद्वैगुण्यं संप्रतीयते।
तेन च प्रतिबद्धत्वान्नार्थापत्तिरपूर्वभाक्॥

दृश्यत एवानन्तरफलानुत्पत्तिकारणवैगुण्यमिति न कालान्तरफलसिद्ध्यर्थमपूर्वं कल्पनीयम्। अनैकान्तिकी हि तदार्थापत्तिर्वैगुण्यमेव वरमननुभूतमपि कल्पयेत्। न च जन्मान्तरफलोत्पत्त्यर्थमपूर्वकल्पना। कुतः—

सुखदुःखात्मकत्वेन समानेष्वेव जन्मसु।
क्रियानन्तरमेवेह स्तः स्वर्गनरकावपि॥

न हि स्वर्गनरकौ नाम निरतिशयसुखदुःखस्वभावौ देशविशेषात्मकौ वा याविहैव जन्मनि नानुभूयेयाताम्। अलौकिकानां जिहासोपादित्सानुपपत्तेः। ये तु लौकिके प्रकृष्टे सुखदुःखे ते कर्मानन्तरमेव संभाव्येते इत्यविशेषः। किञ्च—

प्रतिषेधेषु चापूर्वं न शास्त्रार्थेन जन्यते।
तदतिक्रमजन्यं तु न भवेच्छास्त्रपूर्वकम्॥

'ब्राह्मणो न हन्तव्यः' इति हि निवृत्तिः शास्त्रार्थः। न च तया कालान्तरे किञ्चिज्जनयितव्यमिति नापूर्वकल्पनापेक्षते। हननस्य तु नरकपातः फलं, तद्यदि तेनापूर्वं जन्येत ततो हननस्याचोदितत्वाल्लौकिकक्रियाजन्यं सदपूर्वं न

सामग्री तदपेक्षेभ्यो योऽवगम्यतेऽर्थः स शास्त्रार्थः। न चानुष्ठानदर्शनं तेषां सामग्री शास्त्रार्थावधारणाधीनत्वादनुष्ठानस्येति। कर्मफलकालेति। कर्मफलकालयोर्वियोगो दूरे कर्मकालात् फलकालमिति। तदुत्तरकाल इति। अकल्पितापूर्वेण शास्त्रेण साक्षात् कर्मणः फलमित्युक्ते पश्चादपूर्वमन्तर्भावयन्तः शास्त्रविरोध आपद्यते। भवति त्वेतद्वैगुण्यं शास्त्रावसत्यननुगुणं फलानुदयकारणमित्याह—सर्वकर्तृस्विति। न हि अत्यन्ताभिमुक्तस्याप्यनेकसाध्यप्रयोगेषु कर्मस्वनेकसूक्ष्मविशेषोपेतसामादिमन्त्रोच्चारणवत्सु श्रुत्याद्याचारावसानप्रमाणकानेकाङ्गवत्सु क्वचिदपि वैगुण्यं मा भूदिति प्रतिज्ञातुं शक्यं प्रायश्चित्तहोमब्राह्मणवचनादिभिः स्तुतस्यापनयः सिद्धान्तेऽङ्गीकर्तव्य इति। ननु प्रतियोग्यसंभिन्नयोः सुखदुःखयोर्देशविशेषयोर्वा स्वर्गनरकयोरनेन देहेनाप्तुमशक्ययोरामुष्मिकत्वेन शास्त्रप्रवृत्तिवेलायामेव प्रतीतेः कुतो जन्मान्तरफलोत्पत्त्यर्थं नापूर्वकल्पनेति। पृच्छति—कुत इति। अविशेष इति। अभिधानतो विशेषः। हेतुः स्वभावाम्मतपक्षे-

वेदमूलं स्यात् । कल्पितमपि च तन्निष्क्रियत्वान्नैव देशान्तरे शरीरादिप्रापणसमर्थमित्यनर्थकम् । न चास्याश्रयः संभवति, क्रियाश्रयस्य पुरोडाशादेर्विनष्टत्वात् तद्व्यतिरिक्ते चारम्भानुपपत्तेः । एवमङ्गापूर्वाण्यपि निराकर्तव्यानि । किञ्च —

अङ्गानि यदि वापूर्वं कुर्वन्त्याराादवस्थितम् ।
असंबन्धात् प्रधानानां न स्यात्तेनोपकार्यता ॥

न हि कल्पितमप्यङ्गापूर्वं प्रधानैरसंबन्ध्यमानमुपकर्तुं समर्थं, न चामूर्तं प्रधाने तदपूर्वे वा निपतितुं समर्थम् । यदपि च प्रोक्षणादिनिमित्तं द्रव्यसमवायि तदपि तन्मात्रोपक्षयित्वादन्यत्रासंवरन्नेव फलसाधनस्यापूर्वस्योपकुर्यात् । अथ त्वङ्गापूर्वाण्यपि यजमानात्मन्येवावतिष्ठेरन्, एवं सति पुरुषार्थत्वापत्तेः कर्माङ्गत्वहानिः स्यात् । अपि च युगपत्प्रयोगवचनेन ग्रहणादङ्गापूर्वैर्युगपदेवोपकर्तव्यम् । न च परस्परेणासंबद्धानां यौगपद्यं संभवति । न चैषां कश्चित्संबन्धे हेतुरस्ति । एतेन प्रधानापूर्वाणां फलं यौगपद्यं प्रत्युक्तम् ।

तस्मात् कृतत्वमात्रेण प्रधानं पुरुषे फलम् ।
अङ्गानि च प्रधानेषु जनयन्तीति गम्यते ॥

न चापूर्वस्योत्पत्तिरभिव्यक्तिर्वोपपद्यते । कुतः—

न तावद् युगपज्जन्यं कर्मभिः क्रमवर्तिभिः ।
न चानवयवत्वात्तत् क्रमशोऽपि प्रतीयते ।

ऽस्त्येवानन्तर्यविशेष इति ।

क्रियाश्रयस्य पुरोडाशादेरिति । धात्वर्थाद्यपवृज्यमानादपूर्वमपवर्गश्च तस्य निक्षेपः स च पुरोडाशाश्रित इति । [1]तन्मात्रोपक्षयित्वादिति । व्रीहिमात्रस्योपकार्यत्वावगमान्न तण्डुलादिषूपकारानुवृत्त्यवगतिरिति । पुरुषार्थत्वापत्तेरिति । शास्त्रमेयोऽयमर्थोऽवगन्तव्योऽङ्गैरुपकारः पुरुषे आधीयत इति । तादर्थ्यप्रामाणिकत्वोपकारावगतिः । अतः पुरुषार्थत्वापत्तिरिति । न च परस्परेणेति । यौगपद्यमेकप्रवृत्तिसमयेऽपरस्य प्रवृत्तिर्न सम्बन्धमन्तरेण नियमात् संभवतीति । तस्मात् कृतत्वमात्रेणेति । न चात्र दृष्टानुसारः कर्तव्यः, [2]शब्दैकवेद्यत्वादस्यार्थस्येत्यभिप्रायः । न च

---

१. तन्मात्रोपक्षीणत्वादिति मुद्रितपुस्तकपाठः ।
२. शास्त्रैक० आ० मा० ।

एवं तावन्नोत्पद्यते । न चाभिव्यज्यते । कथम् ।

इन्द्रियार्थोभयेषां नः संस्काराद् व्यक्तिरिष्यते ।
न च यागादिभिः किञ्चित् संस्कृतं संप्रतीयते ॥

सर्वाभिव्यक्तीनां त्रयान्यतमसंस्कारद्वारत्वात्संस्कारान्तरमवश्यं कल्पनीयम् ततः पुनः स एव क्लेश इत्यप्रमाणता । यदि च क्रियानन्तरमपूर्वमुपलभ्येत ततोऽभिव्यज्येत इति ब्रूयाम । यदि चास्य प्रागस्तित्वे प्रमाणं भवेत्, न तु तदुभयमप्यस्तीति सर्वथा नास्त्यपूर्वम् । न चैतत्सूत्रं तत्प्रतिपादने विस्पष्टमित्य व्याख्यानमेतत् । अत्रोच्यते, यदिदं स्वमतिपरिकल्पितं विग्रहवदिवापूर्वं भवद्भि निराक्रियते न तेनास्माकं किञ्चिद्विरुध्यते । यतो न तत्तादृशं कस्यचिदिष्टं, किं तर्हि—

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा सापूर्वमिष्यते ॥

प्रधानकर्मणामङ्गकर्मणां वा प्राक् करणात्स्वर्गादिप्राप्त्ययोग्याः पुरुषाः क्रतवश्च स्वर्गकार्यायोग्याः । तामुभयीमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इत्यवश्यं सर्वेणाभ्युपगन्तव्यम् । असत्यां तस्यामकृतसमत्वप्रसङ्गात् । सैव च पुरुषगता क्रतुगता वा योग्यता शास्त्रेऽस्मिन्नपूर्वमित्युपदिश्यते । यत्तु प्रत्यक्षादिगम्यत्वमस्य नास्तीति सत्यं, श्रुतार्थापत्तिव्यतिरिक्तैर्न गम्यते, स त्वदोषः । किं कारणम्—

यागादिभिः किञ्चिदिति । संस्कारफलस्यापूर्वोपलम्भस्याभावात् । तदेतत् विवृतं—यदि चेति । विग्रहवदिति । स्वप्रधानं धर्मिप्रायेण विग्रहवत् सम्भवतीति प्राधान्यमनेनोपलक्ष्यते । कर्मभ्यः प्रागयोग्यस्येति[1] । अङ्गकर्मभ्यः प्रागयोग्यस्य[2] प्रधानकर्मणः प्रधानकर्मभ्यः प्रागयोग्यस्य पुरुष स्येति । पुरुषगता क्रतुगता वेति । स्वरूपप्रतिपादनप्रक्रियेयमुपरिष्टात्त्वन्यगताया अपि साधनशक्तित्वमात्मगताया एव च क्रत्वपूर्वेऽपि कारकत्वात् क्रतुगतत्वाभिधानमिति व्यक्तीभविष्यति । हन्त ! इतरैरवगमादभावगम्यत्वमायातं स्यादित्यत आह—स त्वदोष इति । श्रुतार्थापत्तिरेवैकेति

१. प्रागयोग्यस्येति स्थाने प्रयोगस्येति आधारमातृकापाठः ।

२. प्रयोगस्य आ० मा० ।

श्रुतार्थापत्तिरेवैका प्रमाणं तस्य वेष्यते ।
शब्दैकदेशभावाच्च स्वार्थेष्वागम एव नः ।।

येन वाक्येन यागात्स्वर्गो भवति प्रयाजादिभिश्च प्रधानोपकारो भवतीत्येतच्चोद्यते । तेनावश्यं विनष्टानामविनष्टानामपि चैषां कापि स्वकार्योत्पादनशक्तिरस्तीत्यभ्युपगन्तव्यं सर्वभावानामशक्तानां कार्यारम्भाभावात् । नियोगतश्चात्रातीतानामेव शक्तिरेष्टव्या । कुतः—

क्षणिकत्वेन सर्वत्र नैकस्यापि हि कर्मणः ।
कथञ्चिद्युगपद् वृत्तिः फले किमुत भूयसाम् ।।

यदेव हि कर्म गृहीतं तदेव हि क्षणिकसूक्ष्मावयवत्वात्फलं प्रति युगपद्भवितुमसमर्थं किमुत यान्यनेकात्मकानि दर्शपूर्णमासप्रभृतीनि । यदा हि पूर्णमासो भवति न तदा दर्शो, यदा दर्शस्तदा पूर्णमासश्चिरविनष्टस्तथैकस्मिन्नेव समुदाये यदाग्नेयस्तदाग्नीषोमीयोपांशुयाजौ न स्तः, यदा तयोरेकस्तदेतरौ न विद्येते इति यौगपद्यासम्भवः । तद् यदा दर्शपूर्णमासस्तदवयवो वा काञ्चित् पुरुषे शक्तिमनाधायैव विनश्येत्ततः प्रागवस्थातुल्यत्वादुत्तरकर्मणां पूर्वैः सह रूपतः शक्तितो वा साहित्याभावान्न केवलकरणात् कश्चिद्विशेष इति सहितसाध्यत्वेन श्रुतं फलं साहित्या संपत्त्या नोपपद्येत । न हि केवलो दर्शस्तत्साधनत्वेन श्रूयते तदन्त्यं वा कर्म । नियोगतश्च कर्मानन्तरफलोत्पत्तिवादिनापि सर्वकर्मान्ते साभ्युपगन्तव्या । ततश्च यस्यैवानन्तर्यं तदेवैकं साधनं प्राप्नोति, नेतराणि चिरविनष्टत्वात् । अथ तु सर्वेषामपूर्वाख्याः शक्तयस्तिष्ठन्ति ततः स्वरूपाणामतन्त्रत्वात् तेष्वसत्स्वपि शक्तिगतमेव यौगपद्यं व्यवहाराङ्गत्वाद् व्यापरिष्यते । तथा चाह—

शक्तिभिः सर्वभावानां व्यवहारानुपातिता ।
तेनान्यदेशकालेऽपि रूपे ताभिः स सिध्यति ।।
लौकिकं चापि यत्कर्म फले कालान्तरोद्गतौ ।
तत्रापि शक्तिरेवास्ते न त्वपूर्वमिहेष्यते ।।

**तेनेतरेषामयोग्यत्वादनुत्पादो न वस्त्वभावादिति । भवत्वेवमागमगम्यता तु हीयतेऽत आह—शब्दैकदेशभावाच्चेति । श्रुतस्य शब्दस्यार्थपर्याप्तये वाक्यशेषमुपनयन्ती शब्दैकदेश उच्यते । ततश्च श्रुतानुमितैकदेशस्य[1] स्वार्थे प्रवर्तमानस्यैकदेशभूतार्थापत्तिः स एवागमो भवतीति—नियोगतश्चेति । फलं यदि कालान्तरे यदि कर्मानन्तरमुभयथापीत्यर्थः । न चैष विनष्टस्य शक्तिसद्भावोऽलौकिक इत्याह—लौकिकं चापीति । यद्यपूर्वोत्पत्तिरेव**

---

१. °स्यागमस्य आ० मा० ।

यान्यपि च लौकिकानि कृषिघृतपानाध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेनेष्यन्ते तेषामपि स्वरूपावस्थानासंभवात्संस्कारैरेव तिष्ठद्भिर्व्यवहारसिद्धिः। ते त्ववैदिकत्वात्संस्कारा न पूर्वशब्दाभिधेयत्वेन प्रसिद्धाः। तेन प्रागेवानुष्ठानाच्छास्त्रश्रवणवेलायामेव क्षणिकानेकाङ्गप्रधानप्रयोगसाध्यं फलं विदित्वा शास्त्रप्रत्ययादेषा बुद्धिर्भवति। नूनं केनाप्यात्मना समस्तान्यङ्गप्रधानानि फलकालं यावत्तिष्ठन्तीति। प्रत्यक्षं च स्वरूपभङ्गदर्शनान्न शक्तिव्यतिरिक्तात्मावस्थानोपपत्तिः। यत्तु श्रुतहान्यश्रुतकल्पनाप्रसङ्ग इति। तन्न—

याग‍ादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति।
सूक्ष्मशक्त्यात्मकं वा तत्फलमेवोपजायते॥

यदि ह्यसंबन्धिना केनचित्फलं साध्येत ततो दोषः स्यात्। यागाहितया तु शक्त्या साध्यमानं यागेनैव साधितं भवति। सर्वसाधनानामिष्टफलप्रवृत्तावान्तरालिकव्यापारावश्यंभावित्वात्। अथ वा सर्वमेव कार्यं दध्यादि क्षीरादेरुत्पद्यमानं न सहसैव स्थूलेनैवात्मनोत्पद्यते। किं तर्हि, सूक्ष्माणि तावद्रूपान्तराण्यनुभवति। एवं स्वर्गादयोऽप्यङ्कुरादिस्थानीयां तावदपूर्वावस्थां प्रतिपद्यन्ते तया चोत्पद्यमानया तु एवोत्पन्ना भवन्तीति। एतावानेव चात्र वर्तमानः कालो यदुत कर्मसंकल्पात् प्रभृत्यासर्वान्त्यफलावयवोपभोगात्। आह च—

काष्ठैः पक्तव्यमित्युक्ते निर्दिष्टा ज्वलनक्रिया।
अङ्कुरे जायमाने च वृक्षोऽप्युत्पन्न इष्यते॥

यत्तु संभावनापदमपूर्वं नारूढमिति। तदयुक्तम्। कुतः—

विनाशित्वेन विज्ञातं साधनं लोकवेदयोः।
असंभावितसामर्थ्यस्थायित्वं चोद्यते कथम्॥

नूनं विनष्टस्याप्येतस्य सामर्थ्यं फलनिर्वृत्तिकालावधि यावदास्त इति हि यावन्नावधार्यते तावद्विनाशिनी क्रिया चोदयितुमेवाशक्या। तस्मात्संभावनावधारणा च प्रथममेव सिद्धेति।

**स्वर्गोत्पत्तिस्ततस्तदुत्पादनशक्तिप्रतिपादनोपक्षयाद् यागादिविधानात् भोगभोग्यावस्थासम्पत्तिरपूर्वस्य न सिद्ध्येदित्यत आह—एतावानेव चेति। फलस्याप्यङ्कुरावस्थाकरणव्यापार एव यागेनाभिमतं फलोपभोगं भावयेदिति हि शास्त्रार्थः। तेनासमस्तोपभोगात्साध्यत एव फलं नापूर्वोत्पत्त्यासाधितमिति। सम्भावना वावधारणा वेति। विनाशिनः कालान्तरीये**

न चातिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिः ।
अतिक्रान्तानतिक्रान्तविशेषस्तव नास्ति हि ॥

यदि ह्यनाहितसंस्कारा एव यागा नश्येयुस्ततः प्रागवस्थातुल्यत्वादतिक्रान्तानतिक्रान्तयागयोः को विशेषः स्यात् । आत्मत्वं तावदविशिष्टमुभयोः । यागत्वमपि हि विनष्टाकृतयागयोस्तुल्यम् । न च क्रियारहितस्यावस्थान्तरगतस्य वा कर्तृत्वमवतिष्ठते । कर्तृशक्तिस्तिष्ठतीति चेत्, न । तस्याः प्रागपि यागकरणाद्विद्यमानत्वेनाकरणत्वात् । अपि च यदि पुरुषः फलसाधनं सर्वकर्मणां शुभाशुभानामविशिष्ट इत्येकरूपफलप्रसङ्गः । तथैकेन यागेन बहुभिश्च तदतिक्रमलक्षणलक्षितत्वाविशेषाद् बहुयाजिनः फलविशेषो न स्यात् । एतेनैव बहुप्रयोगानुष्ठायिनः प्रत्युक्ताः । कर्त्रनभिधायिनि वाख्याते कथमयमर्थो विज्ञायते । यस्य त्वपूर्वाणि क्रियन्ते तस्य प्रतिकर्म प्रतिप्रयोगं च तद्भेदादुपपन्ने फलनानात्ववैचित्र्ये । किञ्च,

अङ्गमध्येऽपि कर्तैव भवेच्चेदुपकारकः ।
प्रसङ्गसिद्धेरङ्गानामप्राप्तिर्विकृतौ भवेत् ॥

प्रयाजादीनामपि क्षणिकत्वात्स्वरूपसंनिध्यभावे भवत्पक्षे कर्त्रैव प्रधानोपकारः कर्तव्य इति सोऽपि चापूर्वाभावात् कर्त्रात्मन एवोपकारकस्तत्र येन प्रकृतौ

**फले साधनत्वोपदेशो नानन्वितार्थोऽग्निसेकवत् शक्त्यवस्थानस्य सम्भवादिति हि सम्भावना । तया च वाक्यार्थात्मलाभस्तदा यथानुपपत्त्या सम्भवतः शक्त्यवस्थानस्य निर्णयो न पूर्वं वाक्यार्थप्रतीतिमूलत्वात् । तस्याश्च पदार्थयोग्यतोपायत्वादिति । तदतिक्रमलक्षणेति । अतिक्रान्तयागत्वं फलनिमित्तमित्येतावदभ्युपगमस्य फलविशेषं वारयति । अथवैकयागातिक्रमेण यः पुरुषः फलविशेषाय शास्त्रेण लक्षितो यागान्तरातिक्रमेऽपि स एवायमित्युपलक्ष्याविशेषादुपलक्षणस्य कार्यस्यानुपयोगात् फलविशेषो न स्यात् । अतो यागान्तरानुष्ठानमफलमिति । कर्त्रनभिधायिनि चेति कर्तुरनिधाने हि तस्य प्रत्ययार्थत्वेन प्राधान्यात् तत्संस्कारयागविधिरन्तस्य प्रयोजनवत्तामाक्षिपन् स्वर्गादि तत् साध्यं कुर्यादिति कापि कल्पना स्यादिति । अङ्गमध्य इति । अङ्गगतमुपकाररूपं कर्त्रेत्यर्थः । सोऽपि चापूर्वाभावादिति । प्रधानस्य नाशित्वाद् यत्तत्सम्बन्धिफलायावस्थितं [1]न तस्या-**

१. नेति नास्ति आ० मा० ।

प्रयाजादयः कृतास्तस्य विकृतिषु तद्गतोपकारसद्भावाद्विनापि तन्त्रमध्यविधानेन तत्फलावाप्तेः प्रसङ्गलक्षणमस्तीति न पुनरङ्गान्यनुष्ठातव्यानि। तत्र 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इत्यादीनि नोपपद्येरन्। नन्वत्यन्तकालभेदान्नैतत्प्रसज्यते। वक्ष्यत्यस्योत्तरम् अर्थस्याविकृतत्वात् [ मी० सू० १२।१।४ ] इति। यदेव हि प्रत्यासन्नानि प्रति कर्त्रात्मकं तदुपकाररूपमिष्यते तदेव दूरङ्गैरुपकर्तव्यं कर्त्रा चापूर्वाभ्युपगमात् फलार्थेति। तस्यैवोपकारः प्रसङ्गलक्षणमिति। अन्याङ्गोपहितोपकारस्याङ्गिवदितरत्र सन्निधानाविशेषः प्रसङ्गलक्षणम्। तच्च प्रायेण तन्त्रमध्यविधाने भवतीति तस्याश्रयणम्। अत्राधिकरणं लिख्यते। अग्नीषोमीयपशुमन्त्रमध्यपतितस्याग्नीषोमीयपुरोडाशस्य किमग्नीषोमीयैः प्रयाजादिकृतार्थता स्यात् नवेति सन्देहे न स्यादिति पूर्वः पक्षः। ये ह्येकदेशकालकर्तृकत्वेनैकचोदना चोदितास्तेषामगृह्यमाणविशेषाण्यङ्गानि सर्वोपकाराय स्युः। पशुप्रक्रमे तु प्रक्रान्तत्वादपुरोडाशार्थान्यवगतानि कथं तस्योपकुर्युः। [1]अपि च लिङ्गन्तं पशुं प्रयजन्तीति कालतः पृषदाज्येनानुयाजान् यजतीति गुणतः पशौ विकृतान्यङ्गान्यविकृतानुतापेक्षेण पुरोडाशे कथमुपकुर्युः। एवं प्राप्त उक्तम्—तन्त्रमध्ये विधानात् वा मुख्यतन्त्रेण सिद्धिः स्यात् तन्त्रार्थस्याविशिष्टत्वात्। [मी० सू० १२।१।३] न तादर्थ्यमुपकारेऽङ्गम् अविनियुक्तत्वात्।

पदार्थस्तु विनियुक्तः स यावति देशेऽवस्थितस्योपकारकत्वेनावधृतस्तावति वर्तमानस्याङ्गिवदितरस्यापि किमित्युपकारं नार्पयिष्यति। नहि प्रदीपोऽन्यार्थः समानदेशमन्यन्नावभासयति। यत्तु गुणकालविकाराच्चेत्युक्तं तत्रोच्यते। विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात्। [मी०सू० १२।१।४] अतिदिष्टप्राकृतोपकारसिद्धये प्राप्तानामङ्गानां पशौ विकारश्रुतिर्नोपकारान्यत्वं करोति। तेन विकृतैरपि पाशुकैरङ्गैरुपहितं प्राकृतमेवोपकारमासाद्य पुरोडाशो न स्वस्मै प्रयुङ्क्तेऽङ्गानीति। नन्वत्यन्तकालभेदादिति। प्रतिप्रयोगापवर्गे अपवृक्तत्वात् कर्तृसंस्कारस्य न तत्फलावाप्तिरिति। अर्थस्याविकृतत्वादिति। यदि कर्त्रतिरिक्त उपकारः स्यात्ततोऽपवृज्येत अपूर्वकत्वात्मकत्वेन तस्याभ्युपगमात्। कर्त्रैवोपकारः। स चास्त्येवेति

---

१. इतः पंक्तित्रयम् आ० मा० इत्यत्र नास्ति।

स्थायामपि विकृतावित्यविशेषः । एते कर्मविनाशपक्षेऽपि दोषाः प्रसक्तव्याः । यस्यापि च कर्मविनाशादेव फलं भविष्यतीत्यभिप्रायस्तस्यापि शुभाशुभैकानेककर्मतत्प्रयोगविनाशानां प्रागभावप्रध्वंसाभावानां वावस्तुत्वेनाविशेषात्फलभेदवैचित्र्यानुपपत्तिः । तथा हि—

एको रोगो हृतो यस्य यस्य वापहृता दश ।
अरोगित्वे तयोर्भेदो न कश्चिदपि दृश्यते ॥

यदि तु प्रतिकर्म विनाशानां वैचित्र्यमिष्यते तथा सति वस्तुत्वापत्तेर्वस्त्वन्तराभावाच्चापूर्वं वस्त्वेव विनाशशब्देनाभिधीयते ।

न च कर्मविनाशेभ्यः स्वर्गादि श्रूयते फलम् ।
विपर्ययाच्च नैतेभ्यो जातं यागस्य तद् भवेत् ॥

'यजेत स्वर्गकाम' इति हि श्रूयते न यागाभावं प्रतिपद्येतेति । तत्र भावांशसाध्यसाधनसंबन्धनिष्ठे वाक्ये यस्तत्राभावांशसाध्यसाधनसंबन्धं कल्पयति तेन वेदस्तावदप्रमाणीकृतः । कुतः, कर्मविनाशप्रभवं हि सदेतन्न कथञ्चित् कर्मसम्बन्धीति शक्यं वदितुम् अत्यन्तविपरीतत्वात् । न ह्यग्न्यातपप्रभवो दाहः शैत्यसंबन्धीत्युच्यते । अथ वा यथैव यागाच्छ्रुतं तदभावात्कल्प्यते तथैव स्वर्गे श्रुते तदभावः फलमित्यपि कल्प्येत । अपूर्वपक्षेऽपि तुल्यमिति चेत्, न । तस्य कर्मफलशक्त्यात्मकत्वेनात्यन्ताभेदात् । उक्तं ह्येतत्पुरस्तात्, अपूर्वेण क्रियमाणं यागेनैव क्रियते, अपूर्वे वा कृते फलमेव कृतं भवतीति । न च लोकेऽपि कश्चिदभावः कारणत्वेन दृष्टः । यदि तु क्वचिदुदाह्रियेत, शक्यं तत्र भावान्तरं दर्शयितुं न त्वत्रापूर्वादृते तादृक्किञ्चिदस्ति । यत्त्वापूर्वस्यापि नैव कारणत्वं दृष्टमिति तदयुक्तम् । सर्वत्र शक्तिसामान्योपलम्भात् तद्विशेषमात्रत्वाच्चापूर्वस्य । यत्तु शास्त्रेण कालान्तरफलं नाश्रितं प्रयोगोत्तरकालकल्पना च शास्त्रेऽन्तर्भवति । तस्मादानन्तर्यमेव चोदितमिति तत्र यथाश्रुतक्षणिकानेककर्मानन्तर्यंन संभवतीत्युक्तं प्राक् । स्वर्गनरकौ च निरतिशयसुखदुःखात्मकत्वाद्देशान्तर-

भापवर्गः । तदेतदुक्तं कर्त्रात्मकं तदुपकाररूपमिति । विपर्ययाच्चेति । विपर्ययो हि यागस्य तद्भावो न यागस्यैव रूपान्तरम् । अथवा विपर्ययप्रसङ्गादिति । सोऽयं विवृतः—स्वर्गे श्रुत इति । क्वचिदुदाह्रियेतेति । प्रतिबन्धाभावात् पतनमित्यादि । तत्र हि गुरुत्वादिभावान्तरं प्रतिबन्धरहितं

जन्मान्तरानुभवनीयौ न कर्मानन्तरं संभवत इति षष्ठाद्ये वक्ष्यामः ।

ऐहिकं चापि पुत्रादि कर्मजन्मस्वभावकम् ।
न कर्मानन्तरं कश्चित्फलं लब्धुं व्यवस्यति ॥
न च ग्रामादिसंप्राप्तिः केवला फलमिष्यते ।
उपयोगश्चिरेणैषां न निमित्ताद् विना भवेत् ॥

चिरकालोपभोगफलात्मकत्वात् ग्रामादीनां क्रियानन्तरं तादात्म्यासंभवे सति यत्रैवान्तराले निमित्तं क्षीणं तत्रैवापहारः प्रसज्येतेत्यवश्यं समस्तोपभोगं यावदवस्थितेन केन चिद् भवितव्यम् । ततश्च प्रागेव प्रयोगादित्थमवधारणात्कर्तृ-वैगुण्याशङ्कयार्थापत्तेरनैकान्तिकत्वमित्ययुक्तमेतत् । यत्तु प्रतिषेधेषु न शास्त्र-गम्यमपूर्वमित्युच्यते ।

विधेयेभ्यो यथापूर्वं विधिशास्त्रेषु गम्यते ।
तथैव प्रतिषेध्येभ्यः प्रतिषेधैस्तदुच्यते ॥

यथा हि लौकिकानामेव द्रव्यादीनां फलविध्युत्तरकालं वैदिकत्वाद् वेद गम्यापूर्वसिद्धिः, एवं ब्रह्महत्यादीनामनवगतनरकफलानां प्रतिषेधोत्तरकाल-भाविनां वैदिकत्वेनैव नरकप्राप्तिसमर्थाऽपूर्वकल्पनोपपत्तिः । सत्यपि चास्य-चलनादिक्रियारहितत्वे कर्तृसंबन्धमात्रेण तद्देशान्तरप्रापणादिक्रियासंबन्धा-भ्युपगमान्निष्क्रियतानुपालम्भः ।

[1]आत्मैव चाश्रयस्तस्य क्रियाप्यत्रैव च स्थिता ।
आत्मवादे स्थितं ह्येतत् कर्तृत्वं सर्वकर्मसु ॥

दर्शयितव्यमिति । षष्ठाद्ये वक्ष्याम इति । सुखदुःखवचनत्वमन्वयव्यति-रेकाभ्यां स्वर्गनरकशब्दयोः तयोश्चात्यन्तसंयोगेन [1]सहस्रसंवत्सरादिषूप-योगान्नात्र जन्मनि संनिहितानेकविपरीतोपभोगसाधने सम्भवतीति । आमु-ष्मिकं तद्वक्ष्यत इति । तद्देशान्तरप्रापणादीति । गमनरहितस्याप्यात्मनो देशान्तरोत्पन्नेन शरीरेणान्वयः प्राप्तिः, तद्धेतुता प्रापणम् । आदिशब्देन शरीरोत्पादनमुपभोगविषयोपनयनं चाभिधीयत इति । [2]क्रियाप्यत्रैव च स्थि-तेति । यथैव क्रियाणां कर्तरि स्थितिस्तथैव तत्समवेतापूर्वोत्पत्तौ हेतुत्वम् । तदधीनत्वमात्रेण तत्र स्थितानां तत्समवेतकरणानुग्राहकत्वं तत्समवेतानां

१. कर्तैवेति काशीमुद्रितपाठः ।

१. 'षूपभोगो नात्र आ० मा० ।

२. क्रिया तत्रैव च स्थितेति आ० मा० ।

द्वयवदानप्रक्षेपादीनां हि सर्वेषां संकल्पादिद्वारेणात्मैव कर्तृत्यवधारितम्। अतश्च ते प्रलीयमानास्तत्र स्वर्गाद्युपभोगशक्तिमाधाय प्रलीयन्त इत्यविरोधः। कथं विनष्टस्य कर्मणः शक्तिस्तिष्ठतीति चेत्, अत्राभिधीयते—

यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् ।
तद्विनाशे ततो न स्यात् कर्तृस्था तु न नश्यति ।।

कथमन्यशक्तिरन्यत्र समवैतीति चेत्, न। क्रियात्मनोरत्यन्तभेदाभावात्। अपि च—

शक्तिः कार्यानुमेयत्वाद् यद्गतैवोपयुज्यते ।
तद्गतैवाभ्युपेतव्या स्वाश्रयान्याश्रयापि वा ।।

यदा कर्मविनाशात्तद्गता शक्तिरपि निष्प्रयोजना भवति, अवश्यं चासौ कल्पयितव्या, तदास्याः स्वरूपादेवाश्रयविशेषोऽपि कार्यक्षम एव प्रमातव्यः। तथाङ्गापूर्वाणामप्यात्माश्रितानामेवैकार्थसमवायेन प्रधानैः संबद्धानामप्युपकुर्वतामाश्रयशेषत्वाभावादारादुपकारकत्वप्रसिद्धिः। यत्तु पुरुषार्थत्वं प्रसज्यत इति। नैष दोषः—

तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः।
राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम् ।।

न चामूर्त्तानामाश्रयाश्रयिभावेन न भवितव्यम्। आत्मसुखादिवत्तदुपपत्तेः। यत्तु व्रीह्यादिसमवायिप्रोक्षणादिनिमित्तं तण्डुलादिद्रव्यावस्थासंवरणपरम्परया द्वयवदानं यावद्गतं तत्रापि प्रधानस्यापि केनचिदंशेन समवायासाक्षात्करणत्वमिति। न क्रियात्मनोरपीति। कर्तुरवस्था क्रिया तस्याः शक्तिः कर्तुरेव भवति। अतो नान्यसमवाय इति। शक्तिः कार्यानुमेयत्वादिति। ननु कर्तृसमवायाच्छक्तित्वहानिः। नहि समवायाच्छक्तित्वमकार्योपयोगिनां समवेतानामप्यशक्तित्वात्। किन्तु येन यत्कार्याय स्वस्मै पर्याप्तं स्यात्तस्य सा शक्तिः। सम्बन्धे चैतद्भवतीति। सम्बन्धमात्रमपेक्ष्यते अस्ति चासौ कर्माहितत्वादपूर्वस्येति। आश्रयशेषत्वाभावत्वादिति। क्रत्वर्थत्वमेवात्माश्रितापूर्वकल्पनयोपपादयामो नात्मार्थत्वं तस्य शब्दादप्रतीतेः। या त्वात्माश्रयत्वादेव तादर्थ्याशङ्का तामुपन्यस्य परिहरति—यत्तु पुरुषार्थत्वमिति।

यत्तु व्रीह्यादिसमवायादिति। तच्छब्दोऽत्र द्रष्टव्यस्तत्तण्डुलादिति। प्रकरणं चात्र प्रोक्षणादेरपूर्वार्थताबोधकं प्रमाणं केनचिदंशेनेति। त्यागस्य

तदीयापूर्वनिष्पत्तावेव व्यापृत्य निवर्तते। तेनैव चैषां नारादुपकारकत्वदशेष-प्रधानार्थत्वमभ्युपगम्यते । तथैव चैकार्थसमवायादङ्गप्रधानापूर्वाणां संबन्ध एवमङ्गापूर्वाणामन्योन्यं प्रधानापूर्वाणां च वक्तव्यः। ततश्च युगपत्कार्यारम्भ-सिद्धिः। कथं पुनः क्रमोत्पत्तीनां प्रधानापूर्वाणां क्रमवर्त्तिभिरेवाङ्गापूर्वैः प्रागूर्ध्वं चोत्पद्यमानैर्युगपदुपकर्तुं शक्यम् । केचित्तावदाहुः, अङ्गमध्यवर्तिषु प्रधानेषु पूर्वाङ्गापूर्वैर्निष्पन्नैः रागादिभिश्च प्रक्रमवशात्प्रचलितावस्थैरेकैकं प्रधानं स्वापूर्वं साधयति । आतिथ्याय बर्हिर्वच्च साधारण्यान्नैकप्रधानापूर्वनिष्पत्तौ तान्यपवृज्यन्ते । कथं पुनरनागतानामुपकारकत्वं भवति । एकान्तावधारणाद्-भोजनप्रत्यासत्तौ स्थालीपरिमार्जननिष्पत्तिवदिति द्रष्टव्यम् । ननु च यद्यना-गतावस्थेष्वेतेषु प्रधानापूर्वाणि निष्पद्यन्ते ततो नैवोत्तराङ्गानि कर्तव्यानि । कथं न कर्तव्यानि, यदा तत्करिष्यमाणतासंभावनया तानि निष्पन्नान्यपि तदकरणान्नापवृज्यन्ते । अन्ये पुनराहुः, एकैकमङ्गमितरेतरनिरपेक्षमात्मीय-मात्मीयं तावदपूर्वं करोति, तथा प्रधानमप्याग्नेयादि यथाश्रुतसमस्ताङ्गापूर्वा-लाभात्तन्निरपेक्षं तदानुत्पन्नप्रधानान्तरापेक्षं च प्रथमकृतसामवायिकाङ्गापूर्व-मात्रानुगृहीतं स्वापूर्वमेव तावत्साधयति । एवं यदा दर्शापूर्वाणि तदङ्गा पूर्वाण्यपि समस्तानि निष्पन्नानि तदा तदीयब्राह्मणतर्पणानन्तरमपर्यायविधानाद्-

यागेषु त्यागप्रक्षेपयोर्होमेषु [1]द्रव्येऽन्वय इति। कथं पुनः क्रमोत्पत्तीनामिति। प्रधानेनापूर्वोत्पत्तावङ्गापूर्वाणामुपयोगः । तत्र यदि [2]युगपदपङ्क्तिप्रधानै-रपूर्वं जन्यते ततोऽङ्गापूर्वाणि सर्वेषां युगपदुपकुर्युः । क्रमवतां तु प्रथम-स्यैवोपकृत्य कार्यापवर्गित्वान्निवृत्तानि नोत्तरेषामुपकुर्युः । तथा क्रमेण प्रधानेभ्यः प्रागूर्ध्वं वाङ्गापूर्वाण्युत्पद्यन्ते । तैश्च प्रधानापूर्वोत्पत्तिसमये सामस्त्येनाविद्यमानैः कथं युगपदुपकर्तुं शक्यमिति। प्रक्रमवशादिति । प्रक्रान्ता-शेषामनुष्ठानेनानुष्ठिताङ्गान्युपकुर्वन्ति न स्वनिष्ठानुष्ठानानुष्ठितानि। तदे-तत् व्यक्तीकरिष्यति—एकान्तावधारणादिति । स्वीयेन कर्तव्यतावधारणेन तान्युपकुर्वन्ति न सन्निधिनेति । आतिथ्याय बर्हिर्वच्चेति। यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति वचनेन सर्वार्थत्वान्नैकनिर्वृत्तौ कृतकरता बर्हिष इति। तदकरणान्नापवृज्यन्त इति। प्रमाणमत्र क्रियोपदेश इति।

अन्ये पुनराहुरिति । तेषां मतमङ्गात् विनियुक्तादुपकारकल्पनं

---

१. द्रष्टव्यो° आ० मा० ।

२. यदि षड्भिः प्रधानैः युगपदपूर्वं आ० मा० ।

युगपत् प्रयोगवचनोपसंहारकल्पितमङ्गानि प्रधानानि च प्रतितन्त्रभूतं समस्तान्यङ्गापूर्वाण्यपूर्वात्मिकमेकं युगपन्निरवयवं प्रधानोपकारं कृत्वा निवर्तन्ते। ततश्च तद्वशेन प्रधानापूर्वाण्यप्येकफलोत्पत्तिशक्तिभूतं संहत्य सर्वाण्येकमपूर्वान्तरं जनयित्वापवृज्यन्ते । तत्त्वफललाभादजरं तिष्ठति यदि पुनः प्रतिबन्धकरहितं तदानीं फलमेवोत्पद्यते ततोऽपि किं कल्पनीयमेवापूर्वम् । बाढम्, न हि तस्मादृते समस्तफलोपभोगसिद्धिरित्युक्तम् । अथ कस्मात् प्रात्यात्मिकान्येवाङ्गापूर्वाणि प्रधानोपकारकत्वं भिन्नानि च प्रधानापूर्वाणि फलबीजत्वं न प्रतिपद्यन्ते । सत्यं, न हि कश्चिदत्र दोषः । किन्तु—

अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते ।
ततस्तत्सिद्धये भूयः स्यादपूर्वान्तरप्रमा ॥

प्रधानानां फलं प्रत्यङ्गानां च प्रधानानि प्रति युगपदुपादानादपेक्षावशेनैकापूर्वकल्पनया च तत्संबन्धोपपत्तेर्नेतरकल्पना प्रमाणमस्तीत्येकमेव तावदवधार्यते, ततः पुनः क्रमवर्तिभिः कर्मभिस्तदशक्यं युगपत् कर्तुमिति तत्सिद्धयर्थं प्रात्यात्मिकापूर्वान्तरकल्पना भवति । सर्वत्र च—

प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि ।
अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणकः ॥

केचित्त्वत्र चोदयन्ति, यदि पौर्णमास्यां कृतान्यङ्गापूर्वाण्यमावास्यां यावत् तिष्ठेयुस्ततस्तैरेव कृतार्थत्वान्नैवाङ्गानि पुनः प्रसज्येरन् । एवं च सति 'त्रयोदशामावस्यायाम्' इत्याहुतिसंख्या बाध्येत । अन्ये तु परिहरन्ति, साङ्गयोः पौर्णमास्यमावास्ययोः कालान्तरसंबन्धात्सर्वैरङ्गैर्द्विः प्रयुक्तैः समुदायद्वयस्योपकर्तव्यमित्यवधारणात् पुनः प्रयोगः सेत्स्यतीति । अथ वा, एवं वक्तव्यं साङ्गा पौर्णमास्यमावास्यासहिता स्वार्थं करोतीति करणविभक्तिश्रुतेरवगमात्-

नाविनियुक्तात् तदनुष्ठानप्रत्ययादिति । प्रतितन्त्रभूतमिति । साधारणं तन्त्रमुच्यते । तत्राङ्गानां यत्साध्यं तत्साधारणं प्रधानानामनुग्रह इति । प्रधानोपकारकत्वमिति । अत्रोपकार एवोपकारक इत्यर्थो यदि ककारः पठ्यते इति । अन्ये तु परिहरन्तीति । पौर्णमास्यां पौर्णमास्यया यजेतेत्यत्र पौर्णमास्येतिकरणत्वेनाङ्गसंयोगः प्रतीयते । विवक्षितश्चासावुपादेयत्वात् कालमनुपादेयं प्रति कर्मणः । एवममावास्ययेत्यत्रापि । ततश्च द्विरनुष्ठेय-

पूर्वोक्तेनैव न्यायेन प्रधानापूर्वत्रयं स्वाङ्गापूर्वानुगृहीतमेकमपूर्वं कृत्वापवृज्यते। तत् पुनरेवं निष्पन्नेनैवामावास्यापूर्वेण सहापरमपूर्वमारभेत। ततश्च निवृत्तेष्वङ्गापूर्वेष्वमावास्यायां क्रियमाणान्यङ्गानि न निराकरिष्यन्त इत्यदोषः। एतयैव च दिशोत्पत्तिविरोधः परिहर्तव्यः। आह च—

आवृत्तिभिर्यथाध्याये संस्कारो भवति क्रमात्।
वाक्यावयवरूपेण तथापूर्वं भविष्यति ॥

न चामूर्तस्यावश्यमवयवैर्न भवितव्यम्। अनयैव ह्यर्थापत्त्या शक्यते वक्तुं सूक्ष्मावयवरूपेण तत्प्रतीयत इति। यदाप्यत्यन्तासतामनुत्पत्तेः प्रागवधृतास्तित्वमभिव्यज्यते तदापि प्रतिपुरुषं कर्मभिः स्वीकरणात् फलाभिमुखकरणं शब्दादिविलक्षणास्याभिव्यक्तिर्भविष्यति। तथा हि—

नैकरूपैव भावानामभिव्यक्तिः प्रतीयते।
आत्मस्थोन्मीलनं तेन व्यक्तिरस्य भविष्यति ॥
सर्वाविाप्तिसमर्थो वा प्रकृत्यात्मा सदेष्यते।
कश्चित्तु प्रतिबन्धोऽस्य कर्मभिः सोऽपनीयते ॥

तस्मादस्त्यपूर्वम्। सूत्रस्यापि च न प्रकृतौपयिकमन्यमर्थं पश्यामः। तेनारम्भचोदनैवापूर्वस्यापि चोदनेत्ययमेवार्थः। यदि पुनः फलवचनसामर्थ्यात् तदेव न विनष्टमिति[1] अपूर्वकल्पनानिष्प्रमाणकत्वं मन्वानो वरमेतदित्याह। न हि कर्मणां रूपमुपलभामह इत्युक्तं, 'रूपशब्दाविभागाच्च [ मी० सू०

त्वेन विहितान्यङ्गानि भवन्तीति। पूर्वोक्तेनैव न्यायेनेति। फलापूर्वमेकं सांगात्समुदायद्वयादसहभाविन उपपादयितुमपूर्वद्वयं कल्प्यते। ततस्तत्सिद्धये त्रीणि त्रीणीति। एतयैव च दिशेति पूर्वकर्मावयवोपहितोपकार उत्तरोऽवयवोऽपूर्ववन्निवर्तयतीति। आत्मस्थोन्मीलनमिति। आत्मस्थयोन्मीलनं फलाभिमुख्यं तच्चात्मस्थित्यैव, सा च कर्मभिः क्रियत इति।

सर्वावाप्तिसमर्थो वेति। अत्राप्यात्मशक्तिरेव कर्म निरपनीतं प्रतिबन्धा कर्मशक्तिराश्रयितव्येति। आरम्भचोदनैवेति। आरम्भोऽपूर्वस्य चोदनेति सूत्रान्वयोऽभिमतः। प्रमाणबलेन चारम्भस्य चोदनात्वमारम्भचोदनाशब्देन [1]विवक्षितमिति। रूपशब्दाविभागादिति। व्रीह्यपचारे नीवारेषु प्रतिनिहितेषु आश्रयभेदात् कर्मभेदमाशङ्क्योक्तम् अपि वा व्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यादिति [ मी० सू० ६।३।१२। ] द्रव्यातिरिक्तं

---

१. तदेव तदपि नष्टमिति काशीमुद्रितपुस्तकपाठः।

१. विवृतमिति आ० भा०।

६।३।१२।] इत्यत्र प्रत्यक्षोपलब्ध्यभिधानात् । यागप्रस्तावे च सति तस्याचलनात्मकत्वात्, यदाश्रयं देशान्तरं प्रापयतीत्यसंबद्धम् । अत्रोच्यते—

कालान्तरक्षमं रूपं कर्मणो नोपलभ्यते ।
भङ्गिरूपोपलब्धिस्तु न फलायोपयुज्यते ॥

यद्यपि कर्मस्वरूपमुपलभ्यते तथापि कालान्तरावस्थानाभावान्न तदुपयुज्यत इति नोपलभामह इत्युच्यते ।

यागेऽपि प्रस्तुते चात्र चलनं यदुदाहृतम् ।
तत्प्रक्षेपांशरूपेण यागेऽप्यस्तीति निश्चयात् ॥

न हि संकल्पमात्रेण फलनिष्पत्तिः । समस्तात् समस्तेतिकर्तव्यताकाच्च कर्मणः फलश्रवणात्तत्र द्व्यवदानप्रक्षेपादीनां ग्रहणासादनादीनां च संयोगविभागफलत्वात् स्थायित्वे तदाश्रयेणावश्यं भवितव्यम् । न चासावस्ति । न चाभिव्यक्तं रूपमुपलभ्यते । संकल्पादीनामपि संकल्पान्तरादि तिरोधानान्नात्र स्वरूपावस्थानोपपत्तिः । अवस्थानं चात्मसमवेतस्य वा स्यात्प्रदेयद्रव्यसमवेतस्य वा ? न तावदात्मनि चलनं समवैति, सर्वव्यापिनः संयुज्यमानवियुज्य मानदेशासंभवे चलितुमसामर्थ्यात् । कथं सर्वव्यापित्वमस्येति चेत्सर्वत्रोपलभ्यमानकार्यत्वात् । अहंप्रत्ययेन हि चैतन्यस्वभावस्यात्मनोऽस्तित्वमात्रमवगम्यते न तु देशतः कालतो वा विशेष्यते । ततश्च—

**यत् कर्मनिरूपितं तत्स्वरूपमव्यतिरिक्तं प्रत्यभिज्ञायते । न च तदवच्छेदकं किञ्चिद्रूपं भिन्नमुपलभ्यते, शब्दश्च दर्शादिस्तद्विषयीकरोति । तस्मात् तदेव यथाचोदितमाश्रयान्तरेऽपि कर्मेति । संयोगविभागफलत्वादिति । तच्छब्देन फलस्य परामर्शः । तदाश्रयेणेति । अथ वा न चासावस्तीत्यत्रायं हेतुरवस्थायित्वादेतदाश्रयेण भवितव्यम् । असौ च संयोगविभागफलत्वान्नास्तीति न चाभिव्यक्तं रूपमिति । पूर्वमनुष्ठानकाल एवावस्थानक्षमे रूपेऽनुपलम्भसत्ता व्याख्याता । अधुनानुष्ठानादुत्तरकाले सेति व्याख्यायते । ननु करणात् कर्तृव्यापारनियुक्तात् फलं किं व्यापारावस्थायित्वेन । तदुच्यते--धात्वर्थः करणं, स च येषां व्यापारात्मकस्तेषां तद् विषयमेवैतत् अव्यापारात्मकत्वेऽपि व्यापारावच्छेदात्मनोस्तदन्तर्निवेशिनोः संयोगविभागयोः धातुभिर्विषयीकरणान्न व्यापारोपरमेऽवस्थानसम्भवः । तेन व्यापारा-**

अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुतेष्यते ॥

सर्वत्र कार्योपलम्भ इति—अहंप्रत्ययमेवाविशेषितं वदति । सुखदुःखाद्युपलब्धिर्वा । न हि क्वचिद्गतैस्ते नोपलभ्यन्ते । न चैते शरीरधर्मा इति स्थितआत्मवादे, तत्र यद्यसर्वगत आत्मा भवेत्ततो यदेव तद्वता देशेन शरीरं युज्यते तदैव सुखाद्युपलब्धिः स्यान्नान्यत्र । शरीरमात्रान्तर्गतात्मवादी त्वाह—ननु तदैव देशान्तरादागमनस्य लिङ्गम् । अतश्च विरुद्धहेतुत्वमस्येति । कुतः—

युगपद्यदि सर्वत्र कार्यमात्मगतं भवेत् ।
ततः सर्वगतत्वं स्यात्पर्याये तु शरीरवत् ॥

यदि हि शरीराद् बहिरपि किञ्चिदात्मकार्यमुपलभेमहि शरीरान्तरे सुखदुःखादीन्वा ततः सर्वगतत्वमध्यवस्येम । यतस्तु स्वशरीरान्तर्वर्त्येव कार्यं यत्र यत्र च तद्गतिस्तत्र तत्र पर्यायेणोपलभ्यते तच्छरीरकार्यवदेव तत्सहितगतस्योपपत्स्यते । अन्यथा हि शरीरमपि सर्वगतं स्यात् । तस्माच्छरीरवदेवास्य तत्र तत्र गमनापत्तेः सुतरां सक्रियत्वप्रसङ्गः । सन्देहो वास्तु साधारणानैकान्तिकत्वात् । आह च—

आत्मा शरीरसंमिश्रस्तेनैव सह संगमात् ।
तत्र तत्र सुखादीनि कार्याणि प्रतिपद्यते ॥

तत्रोत्तरं न ह्यसत्यागमने किञ्चिद्विरुद्धमिति । येषां तु न तु तदेवेति पाठः तेषां सिद्धान्तवाद्येव पर्यायेण सर्वत्रात्मकार्योपलम्भनमागमनलिङ्गत्वेऽप्यविशिष्टमाशङ्क्योत्तरं वदतीति ग्रन्थयोजना ।कथं पुनरिदमुत्तरं न ह्यसत्यागमन

**वस्थायित्वमुपपद्यत[1] इति । अथैतावता न परितोषस्तदेवं वक्तव्यं प्रयोजकव्यापारेण नियुज्यमानं करणं यस्मिन् व्यापारे कर्तृत्वमनुभवति तद्व्यापारजुषस्तस्मात् फलमिति करणशब्दार्थः । न यथा निपततः कुठाराद् गच्छतः इषोः प्रणयनव्यापृताद् गोदोहनादुत्पद्यमानात् ज्ञानात् प्रतिस्वं फलानि । धात्वर्थस्य च ज्ञानवदुत्पत्तिर्व्यापारः । तत्सन्ततिश्च व्यापारसन्तानात् । अतस्तदुपयोग इति । तेनैव सह सङ्गमादिति । सम्मिश्रशब्देन विदितस्वरूपः संयोगः । संगमादिति हेतुत्वेनोक्तः । अथ वा तेन सह गमनादिति वक्तव्ये साहित्यवचनोऽनुवादभूतः सङ्गशब्दः प्रयुक्त इति ।**

1. °मुपयुज्यत इति आ० मा० ।

इति । तथा हि—

नैवाविरोधमात्रेण स्वपक्षः सिद्धयति क्वचित् ।
परस्याप्यविरोधित्वमविशिष्टं हि दृश्यते ।।

परेणापि हि शक्यं वदितुं न हि सति गमने किञ्चिद्विरुद्धमिति । अत्राभिधीयते ।

उभयत्राविरोधित्वं प्राप्तं न ह्यसतीति यत् ।
पुनर्ब्रवीति तन्नूनं विरोध्यागमनं मतम् ।।

परिसंख्यारूपेणासत्येवागमने न किञ्चिद्विरुद्धं सति तु बहु विरुद्धमित्याह । तदुपवर्ण्यते—

स्वतस्तावदमूर्तत्वान्न भूतैर्मिश्रतात्मनः ।
ततश्च तैरसंश्लिष्टो न नेतुं शक्यते क्वचित् ।।

यदामूर्तानामपि सूक्ष्माणां चन्द्रादित्यप्रकाशादीनां न मृत्पिण्डादिभिः सह मिश्रत्वमुपपद्यते' तन्नयनेन वा नयनं तदात्मनः स्वभावेनात्यन्तामूर्तस्य ज्ञानसन्तानस्य वा भूतैर्मिश्रत्वं भवेदिति । कुत एतत्, योऽपि स्याद्वादी बद्धात्मनां शरीरादत्यन्तव्यतिरेकालाभादस्त्येव मूर्तत्वं जीवस्येति ब्रूयात्तस्यापीतरेतराश्रयप्रसक्तिर्मिश्रत्वान्मूर्तत्वं मूर्तत्वाच्च मिश्रभाव इति । तस्मान्मुक्तावस्थानिदर्शनेन लक्षणतोऽस्यामूर्तत्वान्न शरीरसंपर्कनिमित्तमूर्तत्वसिद्धिः । ततश्च शरीरा-

**उभयत्राविरोधित्वमिति । उभयत्र प्राप्तमेकदेशे यत् पुनर्ब्रवीत्यनेनैकदेशविषयिणा शब्देन तन्नूनमेकदेशान्तरे परिसंचष्टे । नन्वात्मकार्यमात्मनस्तत्र सत्त्वमपेक्षते । तच्च गमनरहितस्यापि तत्र नित्यं सत [1]उत्पद्यते । तेनाप्रमाणकं गमनमिति हि *भाष्यार्थः* सम्भवत्येव । सत्यमनेनैव तु *भाष्येणा*सर्वगतत्वपक्षे दोषान् वक्तुमेवं व्याख्यातमिति ।**

**स्वतस्तावदिति । चन्द्रादित्यप्रभावादस्य नेतरोपाधिकमं मूर्तत्वं किन्तु स्वत एव । अथ वा शरीरसम्बन्धोपाधिक मूर्तत्वव्यपदेशे सत्यपि स्वतस्तावदमूर्तत्वम् । मिश्रत्वमवयवव्यति[2]रेकादवयवावयविनोः परस्परप्रतिबन्ध इति ।**

**योऽपि स्याद्वादीति । नित्यमन्वयो व्यतिरेकाभावस्तेन शरीरमूर्तिरेवात्मनो मूर्तत्वव्यवहारं करोति । अथ काठिन्यमिव तत्संस्पृष्टे वस्त्राविवेति**

१. उपपद्यते आ० मा० ।
२. व्यतिरेकाद° आ० मा० ।

दन्यस्तेनासंपृक्तश्च । अस्पर्शत्वाच्चानाकृष्यमाणः शरीरे गच्छति तद्गताकाशप्रदेशवदात्मा पश्चान्निःसृतस्तत्रैव तिष्ठेत् । न हि तस्य वायुना पृथिव्यादिभिर्वा प्रेरणं येन स्वतन्त्रः परप्रेरितो वा गच्छेत् । ज्वालाप्रभृतीनां तु स्पर्शवत्त्वाद् वायुना प्रेर्यमाणानामुल्मुकादिना वा नीयमानानां युक्तं गमनम् । तेन केवलं शरीरं गच्छदचेतनं स्यात् । सर्वगतत्वे तु यत्र यत्र गम्यते तत्र तत्रात्मानुस्यूतिरस्तीति युक्ता चैतन्यानुवृत्तिः' यथापूर्वाकाशप्रदेशत्यागे सर्वगतत्वादेव परेणावकाशादानसिद्धिः । किञ्च—

असर्वगतपक्षे स्याज्जीवो देहादनिर्गतः ।
अणुः शरीरमात्रो वा सर्वथापि न युज्यते ॥

ज्ञानसन्ततिपक्षस्तावन्निराकृतः । तत्र नित्यः सन्नात्मा शरीराभ्यन्तरवर्ती ।

यद्यणुः कल्प्यते तत्र देहं न व्याप्नुयादसौ ।
ततश्च सर्वगात्रस्थसुखपुष्ट्याद्यसंभवः ॥

यदा ह्यणुमात्र आत्मा भवति तदा यावानेव प्रदेशविशेषस्तेनाधिष्ठितस्तन्मात्रगतानामेव सुखदुःखादीनामुपलब्धिः प्राप्नोति, ततश्चैकस्मिन् क्षणे शिरःपादवेदनानुभवो न स्यात् । अथ लघुसंचारित्वात्तत्र तत्रोपलभ्यत इत्युच्यते, न तत्र प्रमाणमस्ति । न च कालभेदो लक्ष्यते, अनवस्थितस्योपलब्धिकालासंभवान्नैकत्राप्युपलभ्येत । तस्मादकल्पनेयम् । शरीरावयवानां चापरिशोषणं

तेनासंपृक्त इति । अनेनामिश्रत्वं दर्शयति । अमिश्रत्वेऽपि जतुकाष्ठवदनाकर्षणमस्पर्शत्वेनेति । येन स्वतन्त्र इति । नन्विच्छापूर्वकात् प्रयत्नात् स्वतन्त्रो गमिष्यति नादर्शनात् । नहि प्रयत्नः स्वाश्रये क्रियाहेतुरुपलब्धः । यदि हीच्छया आत्मा शरीरात् निर्गच्छेत् तदैवं स्यात् । शरीरे तु गच्छत्यसिद्धमात्मनो गमनं कथं प्रयत्नकारणत्वेन दृष्टमिति । अतश्चैकस्मिन् क्षण इति । आत्मसमवेता हि वेदना, तेन नैतद्वक्तव्यं दूरस्थामेवेन्द्रियप्राप्तामुपलप्स्यत इति । ननु भवतोऽप्यणुमनःसंयोगजः कथमेकस्मिन् क्षणे शिरःपादयोः स्यात् । उच्यते—प्रयत्नवदिति । न ह्यसमवायिकारणं स्वदेश एवं [1]कार्यं करोति । तेन यथा शरीरागमने मनःसंयोगजः प्रयत्नः शरीरमात्मप्रदेशं व्याप्नोत्येवं वेदनापीति । अनवस्थितस्येति । यश्च कालभेदान्वयलक्षणसमर्थो लघु सञ्चारो नासौ वेदनानुभवयोरुत्पत्तिकालमेकत्र प्रतीक्षत

1. कार्यमारभते आ० सा० ।

पुष्ट्यादि चात्माधिष्ठितानां भवति मृतावस्थायां विपर्ययदर्शनात् । तत्र य एवावयवस्तेनोत्सृष्टः स एव मृतवच्छुष्येत। अथ शरीरपरिमिति आर्हतपक्षेणाभ्युपगम्यते तत्रापि बह्वदृष्टं कल्पनीयम् ।

सद्भावावयवानां च तथा तेषामनन्तता ।
संश्लेषश्च विनान्येन तद्भावेऽपि च नित्यता ।।
अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः ।
अन्तराभवसंचारस्तद्भावाज्ञानकारणे ।।

सर्वे ह्यवयवसद्भावादयः प्रत्याक्षाद्यविषयाः सन्त उत्प्रेक्षामात्रेण कल्प्यन्ते ते शब्दवच्चेहापि प्रत्याख्येयाः शरीरमात्रावधिकानां चैषामुत्प्रेक्षितुमप्यानन्त्यादशक्यं, न चैषां द्रवत्वादिना विना कश्चित्संश्लेषहेतुर्विद्यते । न चासां श्लिष्टानामेकजीवारम्भसामर्थ्यम् । सर्वयोगानां च वियोगाविनाभूतत्वाद् घटादितुल्यः कदाचिज्जीवस्य प्रध्वंसो भवेत् । गात्रच्छेदे च तद्वर्तिनां जीवावयवानां ततो निःसृत्यावशिष्टे शरीरभागे पुनः प्रवेश इत्येतदप्रमाणकम् । यत्तु वियोजितमात्राणां हस्तादीनां स्फुरणं दृष्टं, तदभिघातप्रेरितवायुनिमित्तमिति न तावता जीवावयवानुगतिर्विज्ञायते । तथा सति संकोचविकासावेतेषां भवत इत्यत्र न किञ्चित् प्रमाणं पश्यामः । दीपप्रभाप्रभृतीनां तु कथञ्चित्प्रत्यक्षत्वादुपपद्येते । न च प्रदीपप्रभायाः संकोचो भवति शरावादिच्छादने शेषप्रभाविनाशादनावृता हि ज्वालात्मसमीपे प्रभामण्डलमारब्धुं समर्था नाच्छादिता । एतेनैव च विकासोऽपि प्रत्युक्तः । अन्य एव ह्यवयवास्तत्र प्रचीयमाना विस्तारं जनयन्ति न तावतामेव विकासः । स्पर्शवतां च परस्परदेशप्रतिबन्धाद्देशान्तरव्याप्त्या विकासो घटते, जीवावयवानां त्वमूर्तत्वात्सर्वेषां समानदेशत्वाविघातान्नित्य-

इति । मृतवदिति । पर्यायेणाणुमात्रानवयवानुत्सर्पतोऽनन्तपरमाण्वारब्धे शरीरे अनन्त एवासम्बद्धोऽणुः सम्बन्धः कालः तेन शोषणमेव स्यादिति । उत्प्रेक्षितुमप्यानन्त्यादिति । बाहुल्यमात्रेऽ[1]नन्तशब्दस्तदानन्त्यशरीरमात्मारम्भकाणामणुरूपाणां परार्धादव्यतिरेकादुत्प्रेक्षितुमशक्यम् । अथ वात्मनः पुत्तिकादिष्वपचितस्य हस्त्यादिषूपचयतारतम्यमवयवेयत्तायामनुपपन्नमुपपादयितुमनवयवत्वं [2]परैरङ्गीकृतम् । तत्रेदमुच्यते, न नियतपरिमाणस्यावयवानन्त्यमुत्प्रेक्षितुं शक्यं, आनन्त्ये हि तेषामवयविनः सर्वव्यापित्वं

१. तत्तु शरीरमात्रारम्भकाणामणूनां आ० मा० ।
२. °तैरङ्गी° आ० मा० ।

मणुमात्रत्वप्रसङ्गः स्यात् । कथं चैकस्य जीवस्य पुत्तिकाहस्तिशरीरपरिमितौ संकोचविकासौ युज्येते । मरणकाले चान्तराभवशरीरसंचरणं तच्चास्ति, केनचित् प्रतिबन्धेन सदपि न गृह्यते, तेन च शरीरान्तरे जीवनिक्षेप इत्यादि निष्प्रमाणकम् । तस्मात्सर्वगतत्वम् । यत्तु श्यामाकतण्डुलमात्रादिप्रदर्शनमुपनिषत्सु तद्वाक्यान्तरप्रदर्शितविभुत्वस्यैव सतः सूक्ष्मग्रहणगोचरत्वात् । यदपि द्वैपायनेनोक्तम्—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यम" इति [महाभारतम्] तदपि काव्यशोभार्थं विस्पष्टमृत्युव्यवहारप्रशंसनार्थं च पतिव्रताप्रशंसापरे वाक्ये प्रजापतिवपोत्खेदनादिवद् द्रष्टव्यम् । तथा हि तेनैव गीतादिष्वनेकप्रकारं सर्वगतत्वं वर्णितम् । ननु च सर्वगतत्वे व्योमवत्सर्वशरीरेष्वेक एवात्मा प्राप्नोति । नैष दोषः । शरीरभूयस्त्वात् प्रतिशरीरं च सुखदुःखोपलब्धिव्यवस्थादर्शनात् । अन्यथा ह्येकशरीरेणैव चरितार्थत्वादनेकशरीरवैषम्यं[1] स्यात् । जन्मान्तरशरीरवददोष इति चेत् । न, तत्र कर्मान्तरवशेनोपभोगान्तरार्थं पुनः पुनरारम्भात्सर्वशरीरगतसुखाद्युपलब्धिश्च प्रतिशरीरं स्यात् । अन्यदीयैश्चेन्द्रियैः शरीरान्तरगतस्यात्मीयत्वादुपलब्धेरन्धबधिरादीनामभावः स्यात् । वर्णविशेषव्यवस्थया च कर्मचोदनाभेदो न स्यात् । एकस्यैवात्मनस्तेन तेन शरीरेण संबध्यमानस्य सर्ववर्णोपपत्तेः । आत्मनानात्वे त्वदोषः । सर्वेषामपि च सर्वगतत्वे मूर्तिरहितत्वात्समानदेशवृत्त्यविरोधः । तदपेक्षयैव च चैतन्यात्मकत्वाद्यविभागाच्चोपनिषत्स्वैकात्म्यव्यवहारः । कथं पुनर्नानात्वेऽपि सर्वेषां सर्वशरीरैः संबन्धाद-

स्यादिति । शरीरभूयस्त्वादिति । हेतुं विवृणोति—[1]अन्यथा हीति । यावल्लब्धवृत्ति कर्म तावत् [2]संस्तूय सकलफलोपभोगायैकं शरीरमारभते । तेनैव शरीरेणानेककर्मफलोपभोगदर्शनान्न द्वितीयेन शरीरेणार्थः । तदुपभोगस्य तेनैव सिद्धेः । लब्धवृत्तौ तु कर्मणि फलोपभोगेन क्षयिते, पतिते च तन्निमित्तेशरीरे परेण जन्मान्तरशरीरमिति वैषम्यमिति । द्वितीयं हेतुं सुखदुःखयोः शब्दादुपलब्धेश्च व्यवस्थां विवृणोति—सर्वशरीरगतेति । वर्णविशेषेति । सर्वाणि शरीराण्यहमिति च मन्वानो नाना वर्णः स्यान्नैकवर्ण इति । कथं पुनर्नानात्वेऽपीति । केयमाशङ्का, स्वसमवेतस्य सुखादेरुपलब्धेः । तदुच्यते, सुखादिसत्ताकारणे शरीरसमवायिनि सुखादिशब्दः । तथा च हेतुः—सर्वशरीरैः सम्बन्धादिति । अथ वा सादृश्यात्तच्छब्दोऽन्यदीयाना-

१. वैयर्थ्य मिति मुद्रितपुस्तकपाठः ।

१. इतरथा हीति मुद्रितपुस्तकपाठः ।

२. संभूय आ० मा० ।

न्यदीयसुखदुःखाद्यनुपलब्धिः । केचित्तावदाहुः—

यथा शरीरमात्रेऽपि मातृगर्भात्मवर्तिनाम् ।
सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति ॥

शरीरपरिमाणात्मवादिनोऽपि किलायं तुल्यो दोषस्तस्यापि गर्भात्मसमानदेशत्वान्मातृक्षेत्रज्ञस्तद्गतानि सुखादीन्युपलभेत । तत्र यस्तस्य परिहारः स सर्वात्मनां सर्वशरीरेषु भविष्यतीत्यविशेषः[1] । यद्यत्रोपपत्तिरुच्येत न तु परपक्षसाम्यापत्तिरेवोपपत्तिस्तस्य च तव चोभयोरप्यन्येन पर्यनुयोगात् । अपि च तस्य त्वगिन्द्रियपरिमाणत्वादन्तः शरीराकाशे बाह्यवदेवात्मनोऽनभ्युपगमान्नैव गर्भशरीरेण मातृक्षेत्रज्ञस्य प्राप्तिरस्ति येन तुल्यदोषता स्यात् । तस्मादेवं परिहर्तव्यम् ।

देशप्राप्त्या यदीष्येत सुखादेरुपभोग्यता ।
ततो दोषः प्रसज्येत योग्यभोगे त्वदुष्टता ॥

यदि ह्यात्मनः सुखादीनां च समानदेशलक्षण एव संबन्ध उपभोगकारणमिष्येत ततोऽयं दोषः स्यात् । इह तु चक्षुरादीनामिव क्षेत्रज्ञयोग्यतालक्षणः संबन्धः । तत्र यथैव त्वगिन्द्रियेण स्पर्शसमानदेशानामपि रूपादीनामग्रहणम्, एवमन्येनात्मनान्यदीयधर्माधर्मोपात्तसुखदुःखाद्यग्रहणम् । तस्मादात्मवादोक्तस्वस्वामिभावव्यवस्थानाददोषः । एवं सर्वगतत्वात्सिद्धमात्मनो निश्चलत्वम् । अथ द्व्यवदानसमवेतमासीत्तत आह—तद्विनष्टमिति । न च तस्याविनाशः । तद्विपरीतद्रव्यान्तरोपलम्भात् । न चास्य ग्रहणप्रतिबन्धहेतुः कश्चिदस्ति येन न गृह्येत । अथार्थापत्त्या ग्रहणप्रतिबन्धादि कल्प्येत तथापि सत्यपूर्वाद्बहुतरमदृष्टं दृष्टविपरीतं च कल्पयितव्यं, तावदविनष्टमास्ते, तथा न दृश्यते, तथा प्रतिबन्धहेतुः, तस्याप्यदर्शननिमित्तं चेत्येवं तस्य तस्यान्यदित्यव्यवस्था, तथा क्षणिकस्य कर्मणः स्थानमनुपलब्धिकारणं च कल्प्यमित्यतिगौरवम् ।

एवमनाश्रितकर्मावस्थानकल्पनायाम्, अथात्माश्रितमेव संयोगविभागावकुर्वदासीत्, तत्रापि दृष्टविपर्ययादृष्टकल्पने स्याताम् । तस्माद्वरमपूर्वकल्पनमिति[1] । सुखादीनामुपलब्धिः कारणसामान्यात् कस्मान्न भवति । समानदेशलक्षण एवेति । सुखादिकारणसमानदेशत्वमेवोपलम्भकारणं प्रतिषिध्यत इति ।

१. °त्यदोष इति काशीमुद्रितपाठः ।

१. °दीयानामेव आ० मा० ।

मेवेति सिद्धं मूलाधिकरणप्रयोजनम् । द्रव्यादीनां फलसंबन्धे तेषामदृष्टार्थत्वा- त्कर्मणामिव प्रतिनिध्यभावः । कर्मफलसंबन्धे तु द्रव्यादेः कर्मोत्पत्त्या दृष्टार्थत्वात् समानकार्यत्वज्ञानादस्ति प्रतिनिधिः । कथं तर्हि पूर्वपक्षवादिनः प्रक्रान्तापरि- समाप्तिदोषाभावः । समापनीयमेव कर्म येन केनचिद् द्रव्येण । सदृशोपादाने तु न यतितव्यं सदृशादपि फलाप्राप्तेः, कर्मणश्चाविहितसाधनविशेषस्यानपेक्षित- सदृशत्वाद्येन केनचित्सिद्धेः । न च तत्पूर्वद्रव्यस्य प्रतिनिधिरित्युच्यते । अन्यार्थ- त्वादसादृश्याच्च । पूर्वद्रव्यं हि फलाद्यप्रवृत्तमासीदिदानीमानीयमानं तु प्रत्य- वायपरिहाराय नैमित्तिकफलाय वा प्रवृत्तस्य कर्मणः सिद्ध्यर्थमिति । नामधेय- सिद्धिरपि प्रयोजनमेव । सा तु पूर्वोक्तत्वान्न प्रदर्शिता ॥५॥

## [ तानि द्वैधाधिकरणम् ]

एवमाख्यातभेदानुसारेणापूर्वभेदानुगमे सर्वत्र प्राप्ते तदपवादार्थं गुण- प्रधानविवेकारम्भः । तत्र तावत्—

आख्यातत्वाविशेषेण भूतैर्भव्यार्थजन्मनः ।
सिद्धे च साध्यताशक्तेः सर्वाख्यातप्रधानता ॥

यावद्धि प्रयोजनकल्पनं तत्सर्वं धात्वर्थान्न्याय्यं प्रयोजनवच्च प्रधानमपूर्व साधनं च । तेन यज्यादिवदेवावहन्त्यादीनामपि व्रीह्यादिभिर्निष्पाद्योऽर्थः । अतश्च तेऽप्यपूर्वसाधनमिति । अत्रोच्यते—

[1]द्रव्याख्यातार्थसंबन्धे यदक्लृप्तप्रयोजनम् ।
तस्य दृष्टार्थता युक्ता नेतरस्याप्रमाणिका ॥

**मूलाधिकरणेति । पूर्वाक्षेपादिदमधिकरणमारब्धम् । अतोऽनेन भावा- र्थेभ्योऽपूर्वप्रतिपादनमेव [1]प्रतिष्ठितं भवति । अतस्तस्यैव प्रतिष्ठापितस्य प्रयोजनमुच्यत इति । प्रत्यवायपरिहारायेति । क्रियाया नियमोऽक्रियायां दण्ड उपपद्यते । तेनाक्रियायाः प्रत्यवायः क्रियायाश्च नियतायाः फलेन भवितव्यं तन्नैयमिकमित्युक्तमिति ॥५॥**

**तानि द्वैधं गुणप्रधानभूतानीति । [मी० सू० २।१।६] आख्यातत्वाविशेषे- णेति । अनेन भावनाभिधायिविभक्तिप्रत्ययासत्तिकृतं धात्वर्थस्य भाव्यप्रयो- जनान्वयित्वमुक्तम्—यावद्धीति । अवश्यं वाक्यसाफल्यायादृष्टं प्रयोजनं कल्पयितव्यम् । तच्च द्रव्यकर्मणोर्वाक्योपात्तयोर्द्रव्यस्य कर्मनिर्वृत्त्या क्लृप्त- प्रयोजनत्वाद[2]क्लृप्तप्रयोजनात्कर्मणोऽन्याय्यमिति । द्रव्याख्यातेति । यद्यु-**

---

१. मूले नामाख्यातेति पाठोऽत्र, व्याख्यापरिगृहीतप्रतीकमनुसृत्य स पाठः परिवर्तितः ।

१. प्रतितिष्ठति आ० मा० । २. °दयक्लृप्तप्रयोजनादिति नास्ति आ० मा० ।

सर्वत्रैव द्रव्यकर्मसंबन्धे कर्मणां द्रव्येण विनानुत्पत्तेः प्रथमं तावद् द्रव्यं कर्मोत्पादयत् दृष्टोपकारित्वात्तदर्थमाभासते। तत्र क्वचिद्भूयः कर्म परावृत्य द्रव्यस्योपकरोति क्वचिदात्मलाभमात्रमनुभवति। तद्यदात्मलाभमात्रं तस्य दृश्यते तदा साकाङ्क्षत्वाददृष्टं कल्पयितुं शक्यते। यदा तु कार्यान्तरौपयिकेन दृष्टेनैव तण्डुलनिर्वृत्यादिना द्रव्योपकारेण निराकाङ्क्षीभवति तदानीमदृष्ट-कल्पनावसराभावादन्यथैव विधानार्थवत्त्वोपपत्तेर्नादृष्टसाधनत्वं प्रतीयते ॥६॥

यैः कर्मभिर्द्रव्यं स्वरूपतो धर्मतो वा न कर्तुमिष्यते यथा प्रयाजादिभि-स्तानि स्वसाधनानि प्रति प्रधानभूतत्वाददृष्टार्थानि भवन्ति ॥७॥

यैः पुनर्द्रव्यमुत्पाद्यते यथाधानेनाग्न्योऽवाप्यन्ते क्रियन्ते वा यथा वरणे-र्नित्विजः संस्क्रियन्ते, यथावहन्तिना व्रीहयः, पेषणेन तण्डुलास्तानि गुणभूतानि प्रयोजनवद् द्रव्यसंस्कृतेरीप्सितत्वात्। यदा दृष्टार्थमदृष्टार्थं चोभयथापि तुल्यवदनुष्ठीयेत तदा किं प्रयोजनं चिन्तायाः।

तदुच्यते, प्रैयङ्गवेऽपि चरावतिदेशप्राप्तो व्रीहिसाधनक एवावहन्तिः कर्तव्यः पूर्वपक्षे। कुतः—

प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम्।
प्रयाजेज्याज्यवत्तेन हन्ता स्याद् व्रीह्यबाधनम्॥

सिद्धान्ते तु बाध्यन्ते। कुतः—

प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते।
तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः प्रियङ्गवः॥

ननु च पूर्वपक्षेऽपि प्रधानाप्रयुक्तव्रीह्याश्रयत्वेन प्रकृतावप्रयोजकत्वात् प्रैयङ्गवे चरौ प्रधानेनागृह्यमाणान् व्रीहीनवघातो न लभते। नैतदेवम्—

**भयमपि विधीयते, तदा भवेद्यथोक्तं यदा वाक्यान्तरप्रतिपादितप्रयोजनं द्रव्यमुपात्तं तदा तदपेक्षितदृष्टोपकारनिर्वृत्त्या [1]कर्मापि क्लृप्तप्रयोजन-मिति। अदृष्टकल्पनानवसरः। वाक्यं च कृत्वपूर्वोपयोगितया द्रव्यवद् दृष्टा-र्थमपि कर्म नियच्छफलमिति ॥६॥**

**यथाधानेनेति। आहवनीयरूपं कर्माङ्गं नाग्निरूपं, तच्चाधानाद् भवतीत्युत्पत्तावुदाहरणता। क्रियन्ते संस्क्रियन्ते वेति *भाष्यकार* उत्पत्तिं वक्ष्यति। *वार्तिककारः* संस्क्रियां तृतीयेऽध्याय इति। तुल्यो हि व्रीहिसम्बन्ध**

---

१. अत्र °कर्मापीष्यतः °वुदाहरणतेति यावत् पंक्तिः आ० मा० इत्यत्र नास्ति।

तुल्यो हि व्रीहिसंबन्धः शास्त्राद् यागावघातयोः ।
वाजिनेज्यादि तुल्यं च नाप्रयोजकलक्षणम् ॥

'व्रीहिभिर्यजेत्' 'व्रीहीनवहन्ति' इति तुल्ये चोदने, तत्रेयं प्रयोजिकेयं नेति नास्ति विशेषहेतुः । न च वाजिनादिवदवहन्तेरनुनिष्पादित्वम् । न च पदकर्मवत्परप्रयुक्तप्रकृतैकहायन्यधीननिराकाङ्क्षत्वम् । न चैकदेशद्रव्यत्वमुत्तराधर्ादिवत् । नापि 'पुरोडाशकपालेन' इतिवदर्थाभिधानकर्मत्वम् । तस्मादवहन्तिरपि प्रयोजकः । न चास्मिन्पक्षे नियोगतो यागार्था एव व्रीहयोऽवहन्तव्याः । लौकिकैरपि कर्मसिद्धचविशेषात् । न चात्र प्रकृतग्रहणे प्रमाणं, प्रकरणस्याविशेषकत्वात् । न चाधिकाराद् विशेषः 'तुल्येषु नाधिकारः स्यात्' [मी० सू० ६।१।१६] इति न्यायात् । संस्कारपक्षे तु लौकिकानामानर्थक्ये नासंस्कार्यत्वादपूर्वसाधनविशेषणत्वेन कथञ्चित्प्रकृतग्रहणं क्लेशेन भविष्यति । न चारादुपकारकत्वेऽवहन्तेर्यागस्येव लौकिकैः साध्यमानस्य किञ्चिदानर्थक्यमिति श्रौतत्वाद् व्रीहिमात्र-

इति । लोकसिद्धव्रीहिग्राहित्वेन परस्परानपेक्षतया तुल्यत्वं तदेवाप्रयोजकहेतुस्तुल्यताप्रकारान् निरस्यन् स्फुटीकरोति । वाजिनेज्यादि तुल्यमिति । चातुर्मास्येषु वैश्वदेवे पर्वणि श्रूयते—तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । तत्र दध्यानयस्य किमामिक्षेज्या वाजिनेज्या च प्रयोजिके उत्पत्तिकैवामिक्षेज्येति सन्देहे पूर्वः पक्षः । एकनिष्पत्तेः सर्वं समं स्यात् [मी० सू० ४।१।२२] उभयोर्निष्पद्यमानयोः दध्यानयनमेका निष्पत्तिः । अतस्तदन्तरेणासिध्यतस्तत्प्रयोजकत्वं सममिति । सिद्धान्तस्तु संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् [मी० सू० ४।१।२३] । आमिक्षा तावत् पय एव विकृतं दधिसंसृष्टं पयोरसस्य [1]तस्मादुपलब्धेः । वाक्यं चामिक्षारूपापन्नं पयस्तच्छब्देन परामृश्य देवतया सम्बन्धयति । सा वैश्वदेव्यामिक्षेति । एवं च पूर्ववाक्ये सप्तमीनिर्देशेऽपि प्रयोजनवत्त्वात् पयसस्तत्संस्कारार्थं दध्यानयनं तत्कार्येणामिक्षायागेन प्रयुज्यते । वाजिनं तु न पयो न दधि द्रव्यान्तरमेवानुनिष्पन्नं वाक्याद्देवतया संयुज्यत इति । ज्योतिष्टोमे श्रूयते—अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति षट्पदान्यनुनिष्क्रामति सप्तमं पदं गृह्णाति । यर्हि हविर्धाने प्रवर्तयेर्त्तर्हि तेना-

1. तस्यामुपलब्धेः आ० मा० ।

क्षमञ्ज्यादिति । तत्रैकहायनीनयनं क्रयेण पदपांसुकर्मणाक्षाञ्जनेन च प्रयुज्यते । अथ वा क्रयेणैवेति सन्देहे एकनिष्पत्तेः सर्वं समं स्यादि [मी० सू० ४।१।२२] त्युभयोः प्रयोजकत्वमिति प्राप्ते [1]विधीयते, न पदकर्म प्रयोजकम् । नहि श्रूयते एकहायन्याः सप्तमं पदमिति, येन तुल्यः सम्बन्धः स्यात् । अपि तु सप्तमं पदमिति । तत्र प्रकरणात् सम्बन्धिलाभः । प्रकरणाच्च क्रयप्रयुक्तामेव [2]नयनाशक्तामेकहायनीं पदकर्म लभत इति प्रयोजकत्वाद्धीयते । सूत्रं च पदकर्माप्रयोजकं नयनस्य परार्थत्वात् [मी० सू० ३।१।२५ ।] यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति शेषात् स्विष्टकृतेऽवद्यतीति श्रुतयोः कर्मणोः पुरोडाशाधीननिष्पत्तित्वादुभयोः पुरोडाशप्रयोजकत्वमिति प्राप्तेऽभिधीयते । एकदेशद्रव्यश्चोत्पत्तौ [1]विद्यमानद्रव्यसंयुक्तो न तस्य संयोगात् [मी०सू० ४।१।२८ ।] परप्रयुक्तस्योपयुक्तैकदेशस्य द्रव्यस्य विद्यमानेनैकदेशान्तरेण शेषशब्दोपात्तेन संयुक्तः स्विष्टकृद्यागः । स उत्पत्तौ [3]विद्यमानद्रव्यसंयुक्तो [4]सत्तां प्रयुङ्क्ते । अस्ति चासावाग्नेयस्य पुरोडाशस्य [5]तद् द्व्यवदानमात्रैकदेशस्य शिष्ट एकदेश इत्यप्रयोजकः स्विष्टकृद्याग इति । पुरोडासकपालेन तुषानुपवपतीति श्रुतम् । तत्र तुषोपवापस्यापि पुरोडाशकपालप्रयोजकत्वं तत्साध्यत्वादिति प्राप्तेऽभिधीयते । अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात् [मी० सू० ४।१।२६] पुरोडाशस्य भावित्वात् तत्प्रयोजकत्वं कपालस्य, तेन सम्बन्धः । अतोऽर्थेन प्रयोजनेन पुरोडाशेनोपलक्षितं तत्प्रयुक्तं कपालं तुषोपवापे विनियुज्यते । तच्चेत्प्रयुक्तं न भूयः प्रयोगमर्हति । न चेत् प्रयुक्तमप्रयोज्यमेवानङ्गत्वादित्यप्रयोजकस्तुषोपवाप इति । तुल्येषु नाधिकारः स्यात् [मी० सू० ६।१।१६] इति श्रुत्या प्रकरणगम्यामपूर्वार्थतां बाधित्वा व्रीहिस्वरूपार्थतामवघातस्य पूर्वपक्षे प्राप्तां निराकुर्वता लौकिकेष्वपि व्रीहिषु प्रसङ्गादानर्थक्ये आपादितेऽधिकाराद्विशेषलाभोऽनेन निराक्रियते । विशेषे हि प्रकृते सामान्यशब्देऽधिकरणेन तत्रावस्थाप्यते । तत्र तु द्वयोः सामान्यशब्दयोस्तुल्यत्वात् लोकसिद्धा बहुव्रीहि ग्राहिणो नैकेनापरस्यापेक्षितविशेषसमर्पणमिति ।

---

१. प्राप्तेऽभिधीयते आ० मा० ।    २. नयनाङ्गमेक आ० मा० ।
३. विद्यमानसंयोगात् पु० मा० आ० मा० ।
४. न तस्य सत्तां पु० मा० आ० मा० ।
५. °शस्य हुतद्व्यवदान० आ० मा० ।

ग्रहणमेव युक्तम् । धर्ममात्रं च तदावहन्तिः सर्वौषधावहन्तिवत्सकृदेव च कर्तव्यो नातण्डुलानिर्वृत्तेः । प्रधानव्रीहीणां च दलनादिभिरपि तण्डुलीभावः स्यात् । सान्नाय्योपांशुयाजाङ्गत्वमपि चास्य प्रकरणाविशेषात्तथा भवतीति तद्विकारेष्वपि प्रयोक्तव्य इत्यादीनि प्रयोजनानि ।।८।।

## [ सम्मार्गाधिकरणम् ]

स्रुक्परिध्यग्निपुरोडाशसंमार्गाणामुत्तरोत्तरप्रधानप्रत्यासत्तिभेदेनोदाहरण-पृथक्त्वम् । एतदुक्तं भवति—

दूरेणापि प्रधानानां यद् द्रव्यमुपकारकम् ।
तेनापि कर्मसंवन्धान्न प्राधान्यं प्रपद्यते ।।

तत्र पूर्वपक्षवादी पूर्वोक्तेनैव 'यैर्द्रव्यं न चिकीर्ष्यते' [मी० सू० २।१।७] इत्यनेन प्रधानकर्मलक्षणेनाह—द्रव्येण निष्पादितं कर्म न किञ्चित्तस्य प्रत्युपकुर्वद् दृश्यते । तस्मात् प्रधानकर्म संमार्गप्रोक्षणादीति ।।९।।

नैव ह्येतद् गुणकर्मलक्षणं यद् द्रव्यचिकीर्षा नाम उपकारलक्षणशेषत्व-प्रतिषेधात् । तादर्थ्यलक्षणं हि श्रुत्यादिप्रमाणकं तत्, न प्रत्यक्षाद्युपकारनिमित्त-

सर्वौषधावहन्तिवदिति । सर्वौषधमवहन्तीति श्रुतं । व्रीह्यवघाता-दिष्वावृत्तेराश्रयणावृत्तिरपि शब्दार्थानुप्रवेशिनी कर्तव्यान्नेत्याशङ्क्य शब्दा-र्थाननुप्रविष्टाया अपि दृष्टप्रयोजनवशेनान्यत्राश्रयणादिह च तदभावात् सकृदनुष्ठानमिति स्थापयिष्यत इति ।।८।।

स्रुक्परिध्यग्निभूम्ना पुरोडाशसम्मार्गाणामिति । सम्मार्गसम्मार्ग-समुदाये सम्मार्गशब्दः पुरोडाशे कर्मसमवेतः, त्यज्यमानत्वात् । अग्निस्त्वा-धारत्वात् कर्मसम्बन्धोऽपि तत्रासमवायात् कर्मणः पुरोडाशाद्विप्रकृष्यते । तत्परिधानार्थः परिधिस्ततो विप्रकृष्यते । स्रुङ्मध्ये तु जुह्वा त्यज्यमान-हविः सम्बन्धान्नातिविप्रकर्षः । स्रुवादेस्तूपस्तरणाद्यु[1]पयोगिनोऽत्यन्तविप्र-कर्षादस्ति विप्रकर्षोदाहरणत्वम् । स च प्रतिपाद्यः येनाह—दूरेणापीति ।

द्रव्यचिकीर्षया शेषत्वमभिधाय तुल्यश्रुतित्वादिति विरुद्धमिव वदतोऽभिप्रायमाह—नैव ह्येतदिति । कथमभिहितस्यापह्नव इति चेत्तत्राह—उपकारलक्षणेति । इदं हि स्वस्थाने वक्ष्यामः । अतस्तदनुसारेणैतदभिधानं

१. °द्युपयोगेनोत्पत्ति विप्र° आ० मा० ।

मिति वाक्ष्यामः । किमर्थं तर्हि द्रव्यचिकीर्षोपन्यस्ता । तदुच्यते—

अन्यतः सिद्धशेषाणां येषां दृष्टोपकारिता ।
तेषां नापूर्वमस्तीति हन्त्यादीनामुदाहृतिः ॥

यत्र द्रव्यचिकीर्षया गुणभावस्तत्र नापूर्वभेदः प्रतिपत्तव्य इति यावत् । पूर्वपक्षवादी त्वेतदेव गुणकर्मलक्षणं मत्वा संमार्गादिषु तदपश्यन् प्रत्यवस्थितवान् । सिद्धान्ताभिप्रायस्तु सर्वत्र श्रुत्यादिभिरवधृते तादर्थ्ये पश्चादुपकारदर्शनं तदभावेऽदृष्टकल्पनं वा । तत्रेप्सिततमत्ववाचिन्या द्वितीयया द्रव्यप्राधान्यद्वारेण क्रियाशेषत्वे प्रतिपादिते हन्त्यादीनां दृष्टार्थत्वान्नैराकाङ्क्ष्यं जातं न तु संमार्गादीनामित्यदृष्टार्थता, न च तावता पूर्वावगतशेषत्वहानिः ॥१०॥

परस्त्वाह—

अन्वयव्यतिरेकाभ्यामुपकारानुसारिता
शेषत्वस्य द्वितीया तु प्राधान्यव्यभिचारिणी ॥

तन्नाम प्रमाणं युक्तं यदैकान्तिकी च प्राधान्ये द्वितीया, गुणभूतद्रव्योपदेशेऽपि दृष्टत्वात् । 'सक्तून् जुहोति' इति । तथा 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यन्तरेणापि द्वितीयामाज्यप्राधान्यं दृष्टम् । अतो 'व्रीहीनवहन्ति' इत्यत्रोभयसंभवेऽप्युपकारदर्शनकृतमेव द्रव्यप्राधान्यं न द्वितीयाकृतम् । न च तत्संमार्गप्रोक्षणादिष्वस्तीति सहापि द्वितीयया द्रव्यमेवोपदिश्यतामिति ॥११॥

प्रत्येतव्यमिति । कथं तर्हीति पृष्ट्वोत्तरं ददाति—अन्यतः सिद्धशेषाणामिति । अपूर्वापवादाय गुणकर्मण्युपक्षिप्ते कीदृशं तद् गुणकर्म यत्रापूर्वं नास्तीत्यपेक्षायामपूर्वाभावोपयोग्ये एव तस्य रूपं वक्तव्यमिति भवति । न च तदनपेक्ष्य गुणत्वमात्रोपयोगि तस्य तृतीये वक्ष्यमाणस्या[1]त्रानुपयोगात् । तदेतद्विवृतं—यत्र हि द्रव्यचिकीर्षयेति । यद्येवं कथमत्र पूर्वपक्षोपस्थापनमत आह—पूर्वपक्षवादीति । अस्याभिप्रायः—तण्डुलान् पचेत्यादौ गुणभूतद्रव्योपदेशेऽपि द्वितीयादर्शनाच्छेषत्वस्यैव द्रव्यचिकीर्षाकारणं न द्वितीया श्रुतिरिति । सिद्धान्ताभिप्रायस्त्वत्रैतद्विपरीतमीदृशमित्याह—सर्वत्रेति । सहापि द्वितीययेति द्वितीयया सहभावेऽपीत्यर्थः । *भाष्यकारीयस्य* प्रयोगानुपन्यासेन स्मरणो-

१. स्यानपेक्षितत्वात् आ० भा० ।

तिष्ठतु तावत् प्रयोगः । किं कारणम् ।

आचारत्वात्प्रयोगो हि स्मृत्या सर्वत्र बाध्यते ।
विवक्षानेकधा चात्र स्मरणे त्वेकरूपता ॥

यदि ह्याचारस्यैकरूप्यं भवेन्नैव स्मृतयः प्रयत्नेन धार्येरन् । स एव तु संकीर्णत्वादस्फुटस्मरणेन प्रतिपाल्यते । स्मर्यंते च द्वितीयायाः प्राधान्यमर्थः । 'कर्मणि द्वितीया' [पा० सू० २।३।२]' 'कर्तुरीप्सिततमं कर्मेति' [ पा० सू० १।४।४९ ] । तथा च लोकवेदयोः प्रयुज्यते घटं करोति 'व्रीहीनवहन्ति' इति । यानि च लोके व्यभिचाराशङ्कास्थानानि तान्युदाहरति तण्डुलानोदनं पच बल्वजान् शिखण्डकान् कुरु तण्डुलानद्य जुहुधीति । तण्डुलैर्बल्वजैरिति च प्रयोक्तव्ये या द्वितीया प्रयुज्यते तन्नूनं तृतीयासमानार्था सेति गम्यते । तत्रोच्यते —

सर्वे पाकादिसंबन्धे द्व्याकारास्तण्डुलादयः ।
प्राधान्यांशमुपादाय द्वितीया तत्र वर्त्स्यति ॥

यदा पदार्थान्तरभूतौदनशिखण्डकसाधनत्वेन तण्डुलबल्वजा विवक्ष्यन्ते तदा तृतीयान्तपदभाजो भवन्ति । यदा तु भोजनयोग्यौदनावस्थापरिणतिरूपेण तण्डुला, मार्दवोत्पत्त्यर्थं च शिखण्डकाकारेण बल्वजा दृश्यन्ते ।

तथा वेदवाक्यावगतगुणभावाश्च ते द्रव्यसाधनकेऽग्निहोत्रे सुखण्डितास्तिष्ठन्तो रमणीयत्वात् कस्याश्चिद् ब्राह्मण्याः स्वकर्मशोभादर्शनार्थं तण्डुला होम-

**पन्यासस्य सङ्गतिमाह—तिष्ठतु तावत् प्रयोग इति । न स्मृतौ सत्यां प्रयोगादरः कर्तव्य इत्यर्थः । अत्र प्रश्नपूर्वं कारणमाह—आचारत्वादिति । दर्शितमाचारस्य स्मृत्या बाध्यत्वं** शास्त्रस्था वा तन्निमित्तत्वादिति [मी० सू० १।३।९] । **किञ्चानिश्चायकत्वादप्याचारस्य यथास्मृत्येव निर्णयो न्याय्य इत्याह**—विवक्षानेकधा चात्रेति । **गुणभूतेष्वपि बल्वजादिषु कथञ्चित् विद्यमानप्राधान्यांशविवक्षाया द्वितीयाप्रयोगो न शक्यते विवेक्तुमप्राधान्य एवासाविति । अथ वा गौणलाक्षणिकविवक्षासम्भवात् प्रयोगस्यानिश्चायकत्वमिति । उत्तरार्द्धं व्याचष्टे—यदि हीति । स्मरणमप्याचारमूलत्वात् स्वानुरूपाचाराभावे न प्रमाणं स्यात् । तेनाह**—तथा च लोकवेदयोरिति । **यदुपपादितं** सर्वे पाकादिसम्बन्ध इति । **तत्रानुभाष्य** ***भाष्यं*** **व्याचष्टे**

संबन्धित्वेनाभिप्रेताः। सैवं प्रेष्यति गुणकामा वा यजमान तण्डुलानद्य जुहुधीति, तदा द्वितीयार्थभाक्त्वं भवति। भवति हि लोके बहुप्रकारा विवक्षेति। गुणभूतेऽप्यर्थे केनचित्कारणेन कश्चित्प्राधान्यांशो विवक्ष्यते तथा प्रधानभूतेषु गुणांशः। कदाचिदुभौ कदाचिन्नोभौ।

न च यद्विवक्ष्यते तच्छब्देनाभिधातव्यमित्यस्ति प्रमाणं, विवक्षासंपत्त्यर्थं तु लक्षणाद्युपायान्तराश्रयणं न स्वार्थत्यागः। तस्मात् प्राधान्यमेव द्वितीयार्थः। कथं तु सक्त्वादिषु गुणत्वमिति। तदुच्यते —

प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः।
विरोधात्तेन संबन्धो गुणभावस्तु लक्ष्यते ॥

द्वितीया तावत्कर्मत्वं प्रधानरूपमात्मशक्त्या वदति, तत्त्विह बलवता कारणान्तरेण विरुध्यमानत्वान्नाश्रीयते। तेन तु कारकविशेषात्मकत्वाद् यत् कारकसामान्यमविनाभूतं लक्ष्यते तदविरुद्धत्वाद् विवक्ष्यते। तत्रैतावानर्थो विज्ञायते होमस्य कारकं सक्तव इति। न च सामान्यं निर्विशेषं व्यवहारक्षममिति विशेषापेक्षायां करणत्वं भविष्यति। 'द्रव्याणां कर्मसंयोगे [मी० सू० ६।१।१]। इति भूतभव्यसमुच्चारणन्यायात्। कथं पुनः सक्तुप्राधान्यविवक्षा विरुध्यते। तत्राह —

भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥

यस्य हि द्रव्यस्य क्वचिदुपयोगो निर्वृत्तो भविष्यतीति वावधार्यते तत्संस्कारार्हत्वात् कर्म प्रति प्राधान्यं प्रतिपद्यते। यत्पुनर्नोपयुक्तं नोपयोक्ष्यते वा तस्य संस्कारो निष्प्रयोजन इति तद्विधानवाक्यानर्थक्यप्रसङ्गः। ते चामी सक्तवो न होमात्प्रागुपयुज्यन्ते नोर्ध्वं, भस्मसाद् भावाद् भस्मविनियोगवचनाभावाच्च। तत्र समस्तं वाक्यमनर्थकं भवतु द्वितीया वा लक्षणावृत्तेति, स्थितत्वाद् वेदप्रामाण्यस्य लक्षणा ग्रहीतव्या। मुख्यार्थप्रयोगो ह्यौत्सर्गिकत्वाददर्शनेन

गुणभूतेऽप्यर्थ इति। किञ्च यदि न स्यादपि बल्वजादिषु प्राधान्यांशस्तथापि विद्यमानगुणत्वप्रतिपादनं लक्षणादिनाश्रयणीयम्। नाभिधानशक्तेरित्याह— न च यद्विवक्ष्यत इति। अथ वात्रैवैकग्रन्थेन यथाभाष्यं व्याख्या। गुणादि भूतेष्वपि शब्दार्थेषु [1]वस्त्ववगताः प्राधान्यादयो विवक्ष्यन्ते। तत्सिद्धये

१. वस्तुगता आ० मा०।

भ्रान्तित्वं प्रतिपद्यते। सर्वत्रैव लक्षणाश्रयणमानर्थक्यप्रसङ्गनिमित्तम्। अन्यथा मुख्यार्थोपपत्तेः।

तेन विरोधात् सक्तुसाधनकहोमविधानं प्रकरणसंबन्धि गृह्यते। ननु सक्तूनामपीति। होमवन्तः सक्तवोऽपि ज्योतिष्टोमस्योपकृत्यार्थवन्तो भविष्यन्तीत्याह। सिद्धान्तवादी तु च्छलेन होमसाधनीभूतानामेवार्थवत्त्वमभ्युपगच्छति को वा ब्रूते नेति। सर्वत्रैव च—

द्रव्याणां वाक्यसंयुक्तक्रियानिर्वर्तनाद्विना।
न प्रयोजनमस्त्यन्यत् कथंभावाद्यसंगतेः॥

यथा होमः क्रियात्मकत्वात् किमित्यपेक्षमाणः प्रधानकथंभावेनेत्थमनुग्राहकत्वेन गृह्यते नैवं द्रव्यम्। न च तस्माददृष्टकल्पना, क्रियानिर्वर्त्यत्वादपूर्वाणाम्।

यत्रापि तावद्द्रव्यं साक्षात्फलाय चोद्यते यथा गोदोहनेन पशुकाम इति, तत्राप्यन्यप्रयोजनक्रियाद्वारमन्तरेण नापूर्वं भविष्यति। किमुत यदा न कस्यचिदङ्गत्वेन सक्तवः श्रूयन्ते। न च किञ्चित् कल्पनाप्रमाणमस्ति। द्वितीयेति चेत्, न हीत्युत्तरम्। द्वितीया हि सक्तूनां प्राधान्यं वदन्ती होमं तदर्थं कुर्यान्न सक्तुभ्योऽपूर्वमिति प्रतिपत्तिम्। तेन द्वितीयाप्रसादाद् भवेद्धोमः सक्त्वर्थः। कथं नाम

**च लक्षणाद्याश्रयणीया न शक्तिकल्पनेति। अन्यथा मुख्यार्थोपपत्तेरिति। यतः आनर्थक्यप्रसङ्गाभावेऽपि मुख्यार्थग्रहणमुपपत्तिमत् अतस्तन्निमित्तमेव लोकलक्षणाद्याश्रयणशब्दस्य। अत इहापि तदेव शब्दवृत्तमुचितमिति। ननु सक्तूनामपि प्रकरणपाठात् प्रयोजनवत्तेति *भाष्य*मनुभाष्य व्याचक्षाणो निर्व्यापारेभ्योऽपूर्वनिर्वृत्तिमपश्यन् वाक्यसमर्पितया हूयमानावस्थयोपेतेभ्योऽपूर्व[1]निर्वृत्तिमाह—**होमवन्त इति।

क्रियानिर्वर्त्यत्वादिति। **पूर्वापरकालयोर्व्यभिचारिणो द्रव्यरूपान्नान्तरापूर्वमुत्पत्तुमर्हति। यद्यप्यर्हति, तथापि कथं भावाद्यसम्बन्धाद् द्रव्यस्य नास्त्यत्र [2]प्रकरणमिति *भाष्यं*, तस्यार्थमाह** न च किञ्चिदिति। **ननु द्वितीया विभक्तिरिति प्रमाणशङ्का*भाष्यं* तस्यार्थमाह—** द्वितीयेति चेदिति।

**अत्रोत्तर*भाष्यं*, नहि द्वितीयाविभक्तिरित्यादि तद्विभज्य व्याचष्टे नहीति। द्वितीयाप्रसादाद्धोमस्य सक्त्वर्थतया रूपं सक्तुप्रयोजनात् प्राक्पर्यवसानाय दर्शयति—**कथं नामेति। **इति शब्दो विज्ञाननिर्देशे। कथं**

---

१. निष्पत्ति० आ० मा०। २. प्रमाणमिति आ० मा०।

होमव्याप्ताः सक्तवः स्युरिति । नान्यस्मै प्रयोजनायाश्रवणात् । ते चामी भवन्ति होमे कृते सक्तवो होमसंबद्धा इति प्रागेव प्रयोजनलाभात् पर्यवसिता द्वितीया निष्प्रयोजनेष्वपि, होमं प्रति प्राधान्यमात्रेण कर्मत्वसिद्धेः । तत्र सिद्धे वाक्यार्थे पश्चान्न पुरुषस्य क्रतोर्वोपयुज्यन्त इति ज्ञात्वा तद्वचनाद्वादृष्टं कल्प्येत । प्राधान्य ज्ञानं वा भ्रान्तिरिति । तत्राह—न च तद्वचनाच्छक्यमन्यत् कल्पयितुमिति ।

प्राधान्याविवक्षैव न्याय्या । ततश्च तृतीयार्थसिद्धिरिति मत्वा महाभाष्य कारेणोक्तं तृतीयायाः स्थाने द्वितीयेति । तेन वैषम्यं होमसंमार्गयोः, सक्तूनां निष्प्रयोजनत्वेन तदर्थत्वात् पुरोडाशादेश्चान्यशेषभावेन पर्यग्निकरणादिसंस्कारा-र्हत्वात् । दृढे च शास्त्रार्थेऽवस्थिते दृष्टोपकाराभावेऽप्यदृष्टकल्पना भविष्यति । लोकेऽप्यदृष्टार्थाः संस्कारा आचाराद् गम्यन्ते । यथा ग्रामान्तरादागतानां शान्त्यर्थ मग्निलवणदध्यक्षतप्रभृतेः शिरस उपरि भ्रामणं शुचिदेशप्रतिष्ठापनं च ।

न चास्यानुपपत्तिराचारप्रामाण्यात् । तेनादृष्टार्थानामपि तुल्यश्रुतित्वात् सिद्धो गुणभावः । नन्वेवं सति सर्वत्र प्रयोजनवत्ता कृतमेव द्रव्यप्राधान्यमिति न वक्तव्यं तुल्यश्रुतित्वात् इति दर्शयितव्ये वा यत्र प्रयोजनवत्ता निरपेक्षं द्वितीया-कृतमेव प्राधान्यं केवलतृतीयाकृतो वा गुणभाव इति । तदुच्यते, प्राधान्यं तावत् 'ऐन्द्रया गार्हपत्यमुपतिष्ठत' इत्यत्र लिङ्गादिन्द्रार्थत्वावगतेर्गार्हपत्यैकवाक्य-त्वाच्च तत्साधनकेन्द्रोपस्थानप्रसङ्गे केवलद्वितीयाकृतमेव गार्हपत्यप्राधान्यम् ।

तथा सूक्तवाकेन प्रस्तरमित्युभयोः प्रयोजनवत्त्वाविशेषे केवलतृतीया-कृतमेव सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वम् । तेन विभक्तिभिरेवाङ्गाङ्गिभावे-

नाम होमव्याप्ताः सक्तवः स्युरित्युद्देशाद्धोमानुष्ठाने होमः सक्त्वर्थः स्यादिति । नान्यस्मै प्रयोजनायेति । द्वितीयाप्रसादान्नान्यस्मै प्रयोजनाय सक्तवो भवेयुरस्यार्थस्य द्वितीयातोऽश्रवणादिति । तत्र सक्त्वर्थंतवामुमर्थ-मन्तर्भावयतीत्याह— ते चामी इति । तत्राह—न च तद्वचनादिति । होमविधिस्तस्य प्रयोजनमाकांक्षति । सक्त्वर्थतया प्रयोजनमनासादयन् परि-हृत्य सक्त्वर्थतां प्रयोजनान्तरं होमादेव मृगयते । यथाकांक्षे च कल्पनातो होमादेवेति । आचारप्रामाण्यादिति । यादृशेन शब्देनादृष्टार्थसंस्कारप्रतिपादनं शक्यं स एव तत्र कल्पनीय इत्यभिप्रायः ।

ऽभिधीयमाने निष्प्रयोजनत्वमपवादो न तु प्रयोजनसदसद्भावेनाङ्गाङ्गित्वमिति विवेकः । प्रयोजनं त्वधिकरणस्य न सम्यगनुमन्यन्ते । तथा हि—

स्रुङ्मात्राद्यनुवादेन शमीमय्यादिचोदितम् ।
ज्ञायतेऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः ॥

प्रियङ्गवो ह्युत्पत्तिवाक्यात् केवलप्रधानार्थत्वेन ज्ञायमाना युक्तं यदङ्गेषु न भवन्तीति । शमीमयत्वादि तु स्रुगादिमात्रानुवादेन विधीयमानं **'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्'** [मी० सू० ३।७।२] इत्यनेन वाक्यसंयोगबलीयस्त्वात्-प्रकरणगम्यप्रधानार्थत्वबाधेनाङ्गप्रधानार्थं विज्ञायते ।

न चात्र विशेषणं किञ्चिदुपात्तं येन प्रधानगतस्रुगादिमात्रप्रतीतिः स्यात् । सदपि वोद्दिश्यमानविशेषणत्वान्न विवक्ष्येत ।

**स्रुङ्मात्राद्यनुवादेनेति । नन्वतिदेशोपनीतस्रुक्शब्दलक्षिततत्कार्यानुवादेन जातिर्विधीयते । न च प्रकृतौ स्रुक्कार्यमात्रंकिञ्चिदङ्गप्रधानसाधारणमवगतं यदनूद्येत, किन्तु प्रधानेऽङ्गे च वाक्यद्वयेन कार्यद्वयं चोदितम् । यथाप्रतीति चानुवादो भवति । अतो न साधारणः । तत्रैकस्य भवन् प्रकरणात् प्रधानवर्तिन इत्यङ्गेषु जातिविधानासम्बन्धः । बर्हिधर्मास्तु बर्हिषि हवींष्यासादयतीति । एकवाक्यबोधिताङ्गप्रधानहविरन्वये बर्हिषि विधीयमाना यथाप्रतीतकार्यान्वयिनो युक्तं यत्साधारणा इति । तदेतदयुक्तम् । यतो हविषामेव भिन्नवाक्यबोधिताङ्गप्रधानसम्बन्धानां कथं साधारणोऽनुवादः तत्र बर्हिषामेवाङ्गेष्वव्याप्तेः[1] कुतस्तद्धर्माणां प्राप्तिः । अथ विकृतावयं न्याय इत्यभिप्रायः । न, तत्रापि विशेषं पश्यामः । प्रकृतावपि हि पूर्वप्राप्तेषु क्लृप्तप्रयोजनेषु बर्हिरादिषु स्वरूपमतिक्रम्य कार्यसिद्धौ धर्मविधिरङ्गीक्रियते । न च भिन्नवाक्यबोधितकार्यभेदा[2]नामेकोऽनुवादः सम्भवति । अनुवादोऽपि हि स्वाभिधानेन यदनुवदितुं शक्नोति तदनुवादान् कार्यमपि तदन्वयि एकमनेकं वोपस्थापयति । नहि तस्य प्रापकेण विषयोऽपनयः क्रियते । येनानुवाद्यभेदः स्यात्, किन्तु स्वशक्त्योपेतस्य तस्य नाप्राप्तस्यानुवाद इति स्वरूपप्राप्तये प्रापकापेक्षा । नानाप्रापितमपि शक्नोत्येकीकृत्य यत् स्रुक्कार्यमित्येवमनुवादितुम् । दर्शितो हि भिन्नशब्दोपात्तानां भिन्नकार्याणां च हविषामेकोऽनुवादः । तस्मादुपपन्नः स्रुक्मात्रा-**

---

१. °ङ्गेष्वप्राप्तेः आ० मा० । २. नां नैकोऽनुवादः आ० मा० ।

तस्मात् पूर्वपक्षेऽपि यानि च प्रधानसंबन्धीनि स्रुगादीनि यानि चारादुपकारकसंमार्गादिसंबन्धीनि तानि सर्वाणि शमीमयीत्वादियुक्तानीत्ययुक्तो नानावृक्षस्रुवसंमार्गः । स्यादेतत् 'मुख्यार्थो वाङ्गस्याचोदितत्वात् [मी० सू० ३।८।३५]' इति वैकृतविशेषाणां केवलप्रधानार्थत्वान्नेहाङ्गप्रधानार्थता भविष्यतीति तदयुक्तम् ।

वाक्योपात्तप्रधानार्थसंबन्धो यत्र गम्यते ।
तत्रैतद्वक्ष्यते नात्र तादृशश्च प्रतीयते ॥

'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या' इति हि प्रधानैरेव काम्यशब्दोपात्तैरुपांशुत्वं संबध्यमानमङ्गस्याचोदितमिति वक्ष्यते । न चात्र तादृशः प्रधानसंयोग इति वैषम्यम् । ननु चातिदेशिकत्वादप्राप्तावस्थेष्वङ्गेषु शमीमयीत्वाद्युपदिश्यमानं प्रधानमात्रार्थं भवेत् । नार्हत्येवं भवितुम् । एवं हि स्थास्यति,

क्लृप्तोपकारसाकङ्क्षाः प्रथमं प्राकृतैः सह ।
संबध्यन्ते समीपस्थं विकाराः प्रोज्झ्य चोदितम् ॥

अवश्यं चानेकार्थविध्यनुपपत्तेः स्रुगादीन्यनुवदितव्यानि । तेन प्रत्यक्षोऽपि सन्नुपदेशोऽतिदेशं तावत् प्रतीक्षते । तत्र यावता कालेन प्रधानस्रुगादीनि प्राप्नुवन्ति तावतैवाङ्गस्रुगादीन्यपीत्यविशेषः । किञ्च—

यदि प्रधानमात्रेण शमीमय्यादिसंगतिः ।
प्राकृत्यस्तु प्रसज्यन्ते प्रयाजादिस्रुचस्ततः ॥

य एव हि संमार्गस्रुचां वर्जनोपायस्तेनैव प्रयाजादिस्रुग्वर्जनमपि प्राप्नोति, न चैतदिष्टं युक्त्यभावात् । यद्यपि च किञ्चित् प्रधानमात्रसंबन्धकारणं भवेत्तथापि सौमिकवेदिदक्षिणान्यायेन प्रसङ्गसिद्धेनं प्राकृतजात्युपसंग्रहो

ह्यनुवाद इति । स्यादेतन्मुख्यार्थो वेति । विकृतावङ्गस्यातिदेशिकत्वेन साक्षादचोदितत्वादिति । सूत्रार्थप्रतिपद्यमानस्य प्रत्यवस्थानमुपपत्तिं चास्य वक्ष्यति । ननु चातिदेशिकत्वादिति । एवं हि [1]स्थास्यतीति गृहमेधीये प्रत्यक्षवचनं सन्निधापितप्रकृतिक्लृप्तोपकाराज्यभागनिराकांक्षीकृतेनातिदेश इत्युक्तेऽपूर्वस्याङ्गस्य प्रत्यक्षविधानसन्निधापितस्यापि नातिदेशोच्छेदहेतुत्वमिति प्रतिपादयन् *भाष्यकार* एतमेव श्लोकार्थं वक्ष्यतीति । सौमिकवेदिदक्षिणान्यायेनेति । ऐष्टिकेषु सोमाङ्गेषु किं सौमिकी वेदिः प्रसज्यते

१. स्थापयति आ० मा० ।

युज्यते। किञ्च—

परिध्यादेश्च कार्येण स्वरूपमुपलक्षितम्।
अतत्कार्यस्य संमार्गः परिधेर्न कृतो भवेत् ॥

परिधिरित्यग्निपरिधानार्थं द्रव्यमुच्यते। तथा होमाद्यर्था जुह्वादयस्तत्र संमार्गस्य 'अर्थाभिधानकर्म च [मी० सू० ४।१।२६]' इत्यप्रयोजकत्वमपि शक्यं वक्तुम्। ततश्च बाणवत्परिधिश्रवणे यदि तावदपरिहितानेव पलाशादीनां मार्ष्टि, अपरिधय एव संमृष्टा भवेयुः। अथ तानपि परिदधीत, ततः कृते परिधाने प्राकृतार्थता न स्यात्। न च तुल्यार्थानां समुच्चयो दृष्टः। तस्मान्न परिध्यन्तर-मुत्पादनीयम्। अवभृथस्य त्वपूर्वत्वाद् यावदुक्तमात्रपर्यवसायिनः साङ्गस्य चाप्सु चोदितस्य केन संमार्गेऽग्निर्वा प्राप्नोति येनोत्पाद्येत। तस्मादप्रयोजनान्येतानि।

न वेति [1]संशये प्राकृतवेदिवैधर्म्यात् सौमिक्या न ततोऽपेक्षितोपकारनिर्वृत्तिः। अतो न प्रसज्येत इति प्राप्तम्। तत्रोच्यते। वेद्यपेक्षाणि तानि सदनोपकार-निर्वृत्तये हविषः। तां च सोमार्थमपि कृतां प्राप्य न स्वीयां प्रयुञ्जते वेदिधर्मास्तु तत्रापेक्षिता न लभ्यन्ते। न च तैर्वेद्युपादानं [2]प्रवर्तते। अतः प्रसज्यतेऽङ्गेषु सौमिको वेदिरिति। ऐष्टिकेषु सोमाङ्गेषु प्राकृती दक्षिणा स्यात् न सौमिक्या दक्षिणायाः, दक्षिणा सोमस्येति वचनेन केवलप्राधाना-र्थत्वादिति प्राप्तेऽभिधीयते। प्रवृत्तिप्रयोजनात्यर्थं दक्षिणा। तया सोमा-र्थमप्यानामितास्तयैवानत्याङ्गेष्वपि प्रवर्तन्त एव साङ्गस्य प्रधानस्य प्रयोज्यत्वात्। सिद्धे च दक्षिणार्थेन गुणानुरोधेन प्राकृतदक्षिणोपादानम्। एवमत्रापि सम्मार्गस्य स्रुचोऽङ्गम्। ताश्च प्रधानप्रयुक्ता एव लभ्यन्ते जाति-सम्पत्तिश्च न स्रुवः प्रयुङ्क्त इति। तथा होमाद्यर्था इति। जुह्वादिवचनस्य स्रुक्शब्दस्यार्थाभिधानकर्मता फलत इति। अथ वा आदिशब्देन स्रुक्शब्दस्य परिग्रहात् स्वतोऽपि तस्य द्रव्यश्रुतिप्रयोजनवचनोपात्तेति। न प्राकृतकर्म्यर्थं-तेति। प्रकृतौ हि निरूपितं परिधिशब्दप्रवृत्तिनिमित्तकं कार्यम्। तस्मिंश्च प्रथमेन निर्वर्तितेऽपरस्यातत्कार्यस्य पुनरप्यपरिधित्वमिति। अवभृथस्य त्वपूर्वत्वादिति। गृहमेधीयवद्वा स्यादिति [मी०सू० १०।१।५० ।] सूत्रमस्यापूर्वतां प्रतिपादयिष्यति। अत्रापि हि प्रकृतिक्लृप्तोपकारावाज्यभागौ प्रत्यक्ष-

१. सन्देहे आ० मा०। २. प्रयुज्यते आ० मा०।

तस्योदाहरणं त्वेकं सत्यम् । तत्र हि 'मांसं तु सवनीयानाम् [मी० सू० ३।८।४२]' इति सिद्धान्तात् पुरोडाशमात्रेणासंबन्ध्यमानं तत्समयत्वमसवनीयत्वान्न पर्यग्निकरणपुरोडाशेन संबध्यते । न हि सवनीयाङ्गे सवनीयशब्दप्रयोगः । सवनसंबन्धिविषयत्वात् । सवनीयाङ्गस्य चासवनार्थत्वात्तत्रापि तु व्रीहिमयत्वं दुर्लभम् । 'व्रीहिभिर्यजेत' इति प्रधानपुरोडाशमात्रेण तेषां संबन्धात् । एवं तर्ह्यनियतद्रव्यकता पर्यग्निकरणपुरोडाशस्येति प्रयोजनम् । तदप्ययुक्तम् । तथा सति कांस्यभोजिन्यायेन तत्समयपर्यग्निकरणेनैव शास्त्रार्थोपपत्तेः सिद्धान्तार्थसदृशकर्मप्रसङ्गः । तस्मात् कथञ्चित् प्रकृतौ व्रीहिमयपुरोडाशग्रहणात् तत् साधनत्वं शास्त्रकृतत्वात् प्राप्नोतीति वक्तव्यम् ।

तत्रापि त्वेकहायनीन्यायेनाप्रयोजकत्वात् तदभावे लोपप्रसङ्गः । तेनैतदेव प्रयोजनमित्याश्रयणीयम् । अनियतद्रव्यकत्वं वा । न चात्र कांस्यभोजिन्यायः संभवति, मांसेन पुरोडाशत्वानभिव्यक्तेः । सवनीयपुरोडाशे कथमिति चेत् । नैवं, तत्र पुरोडाशत्वमिष्टं वचनादपुरोडाशात्मकमेव मांसं पुरोडाशस्य स्थाने विधीयते यथा धानादीनाम् । न हि कथञ्चिदपि मांसेन धानादयो भवन्ति । अतश्च प्रैयङ्गवन्यायेन प्रधानमात्रे मांसेन पुरोडाशो निर्वर्तितः पर्यग्निकरणं तु पुरोडाशसाधनकमेव । सत्त्वनियतद्रव्यको वा कथञ्चिद्वा प्रकृतिदर्शनेन व्रीहियवद्रव्यक इति स्थितम् । एतानि च प्रयोजनानि स्रुक्संमार्गस्य प्रकृतौ बहुसाधनत्वात् कपिञ्जलन्यायेन त्रित्वस्य शास्त्रीयत्वात् पात्राविवृद्धावपि पशुचातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे । सिद्धान्ते तु सर्वाः, संस्कारस्य प्रतिप्रधानावर्तित्वात् ।

वचनोपनीतौ अप्सुमन्तावाज्यभागौ यजतीति । न च गुणविधानार्थमिदं अप्स्वग्ने अप्सु मे सोमे इत्यनयोर्मन्त्रयोर्लिङ्गक्रमाभ्यां प्राप्तत्वादिति । साङ्गस्य चाप्सु चोदितस्येति । अप्स्ववभृथेन चरन्तीति साङ्गस्यैवेयमप्संबन्धचोदना देशं प्रत्युपादीयमानस्यावभृथेनेति करणविभक्त्युपात्तस्याङ्गसाहित्यस्य विवक्षितत्वात् । चरन्तीत्यस्य च प्रयोगवचनत्वात् साङ्गस्य च प्रयोज्यत्वादिति । यदि तुल्यो हि व्रीहिसम्बन्धः शास्त्राद्यागावधातयोरित्यनेन निराकृतमपि प्रधानप्रयुक्तप्रकृतव्रीहिनैराकांक्ष्यमङ्गीक्रियते तदा पदकर्मवदप्रयोजकत्वं स्यादित्याह—तत्रापि त्वैकहायनी न्यायेनेति ।

तथा पशुन्यायेन विवक्षितैकसंख्यत्वादेक एव संमार्ष्टव्यपरिधिः पूर्वपक्षे। सिद्धान्ते तु सर्वे। यत्र च परिधिविवृद्धिस्तत्र विशेषः। एवमेकपुरोडाशे पर्यग्निकरणं सर्वपुरोडाशे च वक्तव्यम्। तथापि **'विशये लौकिकः स्यात्'** [मी० सू० ७।३।३०] इत्येवम् 'अग्निमुपनिधाय स्तुवते' इतिवल्लौकिकाग्निसम्मार्गकरणं पूर्वपक्षे, सिद्धान्ते तु तस्याप्रयोजनत्वेनासंस्कार्यत्वात्सर्वेषामाहवनीयादीनामिति विशेषः ।।१२।।

[ स्तुतशस्त्राधिकरणम् ]

**'यैस्तु द्रव्यं चिकीर्ष्यते** [मी० सू० २।१।८]' इत्यस्यापवादत्वेन स्तोत्रशस्त्रोपन्यासः स्तुतिरेव स्तोत्रं, शस्त्रमपि सैवाप्रगीतमन्त्रसाध्या, गुणगुणिसंबन्धकीर्तनं च स्तुतिः शिष्यते, सा च प्रथमं गुणगुणिभ्यां निर्वर्त्यते। तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात्। तत्र गुणानां तावदकर्माङ्गतया निष्प्रयोजनत्वादेकान्तेन स्तुत्यर्थता, तन्निर्वर्तिता तु स्तुतिः किं स्तुत्यस्य स्मारकत्वेन शेषीभवत्युत स्वप्राधान्येनादृष्टार्था भवतीति। किं प्राप्तम्?

दृष्टेन क्रतुसिद्ध्यर्थाः साधयन्ति यतः स्मृतिम्।
स्तोत्रशस्त्राणि तेन स्युः संस्कारा देवताः प्रति ।।१३।।

प्रमाणान्तरविरोधेन दूषणं तावदुच्यते। तथा हि—

यद्यत्राविद्यमानार्थो मन्त्रः स्तोतुं प्रयुज्यते।

तत्र विशेष इति। तत्र महान् विशेष इत्यर्थः। तथा विशये लौकिकः स्यात् [मी० सू० ७।३।१०] इत्येवमिति अग्निमुपनिधाय स्तुवत इति श्रुते लौकिकवैदिकाग्निसन्देहे वैदिकस्य प्रयोजनाकाङ्क्षिणस्तत्सम्बन्धो न्याय्य इत्याशङ्कयाभिहितम्—विशये लौकिकं स्यात्सर्वार्थत्वात् [मी०सू० ७।३।३०] यत्र यत्राग्निरूपेण प्रत्यक्षसिद्धेन प्रयोजनं तत्र तत्र लौकिकं सम्बन्धयोग्यम्। वैदिकमपि सम्बध्यतामिति चेदुच्यते—न वैदिकधर्मनिर्देशात् [मी० सू० ७।३।३१]। वैदिकमाहवनीयादिस्वरूपमदृष्टमाहवनीये जुहोतीत्यादि वाक्यबोधितादृष्टप्रयोजननिराकाङ्क्षम्। नाग्निमात्रसाध्यं प्रयोजनं गृह्णाति। अथ धिष्ण्यादयः[1] कथं[2] न गृह्णन्त इत्यत आह—[3]अथोत्पत्तिरितरेषां समवायादिति [मी० सू० ७।३।३२]। इतरेषां [4]धिष्ण्यानामुपपत्तिस्स्तवनं सर्वार्थानिर्दिष्टप्रयोजनाहवनीयादिभिः समत्वात्। प्रागासीनो धिष्ण्यानाधारयतीति। यद्यत्राविद्यमानार्थं इति। किमत्र स्तोत्रस्य ग्रहयागादपकर्षो

१. धिष्ण्याग्नयः आ० मा०। २. कस्मात् आ० मा०।
३. तथोत्पत्तिरितरेषां समत्वादिति आ० मा०।
४. धिष्ण्यादीनामुत्पत्तिस्तथैव न आ० मा०।

तस्यार्थेनापकृष्टत्वात् प्राप्तबाधः प्रसज्यते ॥

या यद्देवतानामसंयुक्ता स्तुतिचोदना भावनेति यावत्, चोद्यमानत्वात्, सा तदर्थपरत्वात्तस्मिन्नसति न स्वार्थं करोतीति तद्वशेनैन्द्रीस्तुतिर्माहेन्द्रग्रहयजि संनिधिमुल्लङ्घ्य यत्रेन्द्रस्तत्र गच्छेत् । ततश्च क्रमसंनिधिबाधः । क्रमश्चात्र यथा संख्येनोत्तरासु पाठः । संनिधिस्तु रथन्तरचोदनयोपस्थानं प्रकरणपरामर्शो वा ॥ ७४॥

नायं दोषः । किं कारणम्—

तत्र मन्त्रोऽपकृष्येत यत्र सोऽर्थान्तरं व्रजेत् ।
अभिवत्योऽर्थवत्यस्तु साम्यादिन्द्रमहेन्द्रयोः ॥

य एव हि अभिवतीभिरिन्द्रः स्तूयते स एव माहेन्द्रग्रहेणेज्यते । तत्र सत्येवार्थे किमित्यपकर्षः स्यात् । न च यावत्कर्माङ्गभूतेऽर्थे विद्यते तत्सर्वं मन्त्रेणाभिधातव्यं, न्यूनमधिकं वासौ यदभिधातुं समर्थस्तदभिधत्ते । तेन निर्गुणेन्द्र-प्रकाशनं गुणस्यातन्त्रत्वात् प्रकरणलभ्यत्वाद्वा निर्गुणद्रव्यप्रकाशनवदेव । न च

**मन्त्रस्य वा स्तोत्रादिति चिन्त्यते । तत्रैन्द्री स्तुतिर्माहेन्द्रग्रहयजिसंनिधिमुल्ल-ङ्घ्येति स्तोत्रस्यापकर्षमाह—सिद्धान्ते तु । प्रकृतिस्तोत्रशेषत्वं श्रुत्या संनिधि क्लृप्तयेति स्तोत्रान्मन्त्रस्योत्कर्षं वारयन् तन्मात्रस्योत्कर्षं पूर्वपक्षे सूचयति । तत्रैवं प्रतिभाति । स्तवनेन यच्छक्यते तत् कुर्यादिति । एतावतो नाश्रित-मन्त्रविशेषस्य [1]स्तुतिविशेषस्य । तेन मन्त्रविशेषसाधनोऽ-सामान्यविधेर्न किञ्चिददृष्टमर्थं पश्यामः । येन तद्विनियोगोत्तरकालं तदनुत्कर्षेण सन्नि-ध्युपनीतमन्त्रमात्रोत्कर्षमध्यवस्येम । किन्तु गृहीतमन्त्रविशेषस्यावधृत-स्तोतव्यविशेषस्य स्तुतिविशेषस्य । तेन मन्त्रविशेषसाधनो व्यापारभेदो-ऽवधृतप्रयोजनस्तद्वशात् सह मन्त्रेणोत्कृष्यत इति युक्तम् । मन्त्राधीनत्वात् च विशेषलाभस्य मन्त्रोत्कर्षाभिधानम् । तस्यार्थेनापकृष्टत्वादिति । अथ वा स्तोत्रमेव तच्छब्देन परामृष्टमिति । क्रमश्चात्रेति ग्रहेज्यानां स्तोत्राणां च क्रमेण ज्योतिष्टोमप्रकरणे उत्तराख्या ऋचः पठ्यन्ते । माहेन्द्रग्रहे-ज्याङ्गस्य च पृष्ठसंज्ञस्य स्तोत्रस्य रथन्तरसामसाधनत्वेन चोदितम् । तत्स्वयोनिमैन्द्री बृहतीछन्दस्कामुपस्थापयति । सोपस्थिता ग्रहेज्यया प्रकरणेन गृह्यते । एकं साम तृचे क्रियते स्तोत्रीयमिति । यद् योन्यां**

१. स्तुतिरित्यारभ्य विशेषसाधनो इति यावत् पङ्क्तिः, आद्यारपूनामातृकयो र्नास्ति ।

शब्दमात्रं देवतेति नवमदशमयोरभिधास्यते । ततश्च य एव महेन्द्रशब्देनार्थश्चोदितः स एवेन्द्रशब्देनोच्यत इत्यर्थान्तरत्वकल्पनाप्रमाणाभावात् । तस्मादुत्कर्षोपलम्भाभावात्संस्कारकर्मत्वमेव युक्तमिति ॥१५॥

नैतदस्ति निर्गुणेन्द्राभिधानादनुत्कर्ष इति प्रसज्यत एवोत्कर्षः । कुतः—

यद्यभेदः प्रमाणेन भवेदिन्द्रमहेन्द्रयोः ।
ततोऽयं नापनीयेत भेदस्त्वत्र प्रतीयते ॥

यद्यवयवव्युत्पत्त्या महांश्चासाविन्द्रश्चेत्येवं महेन्द्रशब्दमन्वाचक्षाणैस्तद्धितानुगमः क्रियेत, तत इन्द्र एव गुणमात्रविशिष्टोऽस्य ग्रहस्य देवतेति गम्येत । न त्वेवमस्ति । समुदायप्रसिद्धिबलीयस्त्वेनेन्द्रव्यतिरिक्तरूढिशब्दाभिधेयमहेन्द्रप्रतीतेः । तथा हि—

व्युत्पाद्यते महेन्द्रश्चेद्वाक्यभेदादि दुष्यति ।
अव्युत्पत्तौ महेन्द्रार्थः स्फुटं वस्त्वन्तरं भवेत् ॥

न चास्य महत्त्वमपेक्षमाणस्येति, अवयवव्युत्पत्तिं निराकरोति । कथम्—

वृत्तिद्वयेऽपि सामर्थ्यं स्मर्यते हि विशेषणम् ।
व्युत्पत्त्याश्रयणे चैतदुभयत्रापि दुर्लभम् ॥

नवुत्तरयोर्गायतीति वचनद्वयादुत्तरापेक्षिता । सैका क्रमपाठेन पङ्क्तिच्छन्दस्कोपनीता तयोरुत्कर्षात्क्रमसन्निधिबोधो[1] विधीयते । अत्र च तयोः पूर्वाद् वृहती ककुभावुत्तरे इत्येवं वचनवशेन द्वे ऋचौ वृहतीपङ्क्तिश्चावृत्तेन पाठेन तिस्रः क्रियन्ते । यथा वृहतीककुभौ च सम्पद्यन्ते । तस्यावृत्तिगुणस्य प्रगाथ इति संज्ञा । तेन वक्ष्यति—प्रगाथापनयो भवेदिति । नवमदशमयोरिति । न च भोजनमिवातिथेर्यागो देवताप्रीत्यर्थः । प्रीतिभ्यश्च[2] फलमिति पूर्वपक्षं निराकुर्वता गुणभेदेन[3] देवताश्रुतिरिति यागगुणत्वमात्रप्रतिपादनादङ्गीकृतं शब्दातिरिक्तत्वम् । दशमे विधिशब्दस्य मन्त्रत्वे भावः स्यात् [मी० सू० १०।४।२३] इति सूत्रे का पुनरियं देवतेति प्रश्नपूर्वकं निरूपितम् । यां मन्त्रः प्राधान्येन प्रकाशयति । हविश्च यदर्थं सा देवतेति । वाक्यभेदादि दुष्यतीति । अत्र सतो वाक्यभेदादेर्दोषत्वविधिस्तेषां सद्भावं बोधयतीति । तद्धितेन

---

१. °बोधोऽभिधीयते आ० मा० ।
२. प्रीतायाश्च देवताया इति आ० मा० । ३. गुणत्वे आ० मा० ।

'समर्थः पदविधिः [पा० सू० २।१।१]' 'समर्थानां प्रथमाद्वा [पा० सू० ४।१।८२]' इति च समासतद्धितवृत्त्योर्विशेषणम् । अतस्तदभावे नैकयापि भवितव्यम् । यदि युगपत्समासतद्धितावन्वाख्यायेते ततो नैकत्रापि सामर्थ्यं लभ्यते । कुतः—

तद्धितेन ह्यसंबन्धो महत्त्वेऽपेक्षिते भवेत् ।
तस्मिन्ननपेक्ष्यमाणे च न महत्त्वेन संगतिः ॥

एकार्थीभावलक्षणं व्यपेक्षालक्षणं वा सामर्थ्यमुभयथापि सापेक्षस्य नावकल्पते । कथम्—

अन्यवस्त्वनपेक्षत्वे ह्यन्येनैकार्थतेष्यते ।
सापेक्षस्त्वन्यविक्षिप्तो नैकार्थ्यं प्रतिपद्यते ॥

अविक्षिप्यमाणौ हि द्वावर्थावेकत्र लोलीभावं प्रतिपद्येयाताम् । न च विक्षिप्यमाणौ, नानात्वे बुद्धिकालुष्यात् । यो ह्यवयवाभ्यामेकत्रोपसंहृताभ्यामुभयविशिष्ट एकोऽर्थः प्रतिपाद्यते सोऽपि निरपेक्षाभ्यामेव, सापेक्षत्वे संशयरूपेणैकत्रानुपसंहारात् । एवं तावदैकार्थ्यलक्षणसामर्थ्यलक्षणसामर्थ्याभावः ।

व्यपेक्षा पुनराहत्य विगतापेक्षतोच्यते ।
सापेक्षत्वे च दूरेऽसावित्येवमसमर्थता ॥

न हि सापेक्षो विगतापेक्षशब्देन शक्यो वक्तुमित्युभयसामर्थ्याभावादुभयप्रवृत्त्यभावप्रसङ्गः । एवं तावद्युगपदन्वाख्याने दोषः ।

ह्यसम्बन्ध इति । नैकार्थता स्यादित्यर्थः । तदेतद्दूषणसामर्थ्यं द्वेधा विकल्प्योभयविधस्य चाभावं प्रतिज्ञाय एकार्थीभावलक्षणं व्याकरोति—अन्यवस्त्वनपेक्षत्वे हीति । एकत्र लोलीभाव एकत्र प्रचलितत्वम् । एकप्रतिपादनपरत्वमित्यर्थः । नानात्वे बुद्धिकालुष्यादिति । सेयं तात्पर्यस्य नानात्वस्पर्शनी संशयात्मिका बुद्धिः तल्लक्षणमेव कालुष्यं पदार्थस्येति । ननूभयत्वमेव[1] कस्मान्न भवति येन संशयः स्यादित्याशङ्क्य शब्दतात्पर्यज्ञानोपायं लोकप्रसिद्धिमुदाहरति—यो ह्यवयवार्थाभ्यामिति । लोके ह्येवं दृष्टम् । तत्र हि समासतद्धितान्तानामुच्चारणं स्वार्थप्रतीत्युपायविशिष्टार्थप्रतिपत्तिपरम् । तदेकप्रतीतिक्षीणं नान्यार्थमपि भवति । एवमेकपरत्वे सत्यनेकाक्षिप्तस्य संशयान्नैकेनाप्यैकार्थ्यं व्यवसीयते । अन्यनैरपेक्ष्ये तु एकत्रोपसंहाराव

१. ननूभयपरत्वमेव आ० मा० ।

क्रमेणाख्यायमाने तु वाक्यभेदोऽसकृच्छ्रुतेः ।
कृत्वा समासमुच्चार्यं पुनः शब्दद्वयं भवेत् ॥

एतदेवाभिप्रेत्याह न च तद्धितार्थे वृत्तस्येत्यादि ।

तद्धितार्थे च वृत्तस्य वृद्धिः स्यादुत्तरे पदे ।
महत्त्वं द्रव्यसंबन्धि नोपसर्जनसंगति ॥

महेन्द्र इति हि स्यान्न चेन्द्रविशेषणं महत्त्वम् । न ह्युपसर्जनमभिभूतस्वार्थवृत्ति विशेषणान्तरैः संयुज्यते । न च समासार्थे वृत्तस्येति वाक्यभेदमात्रेणैवोच्यते । तेन क्रमवृत्तिरपि नास्तीति प्रतिपाद्य पुनर्युगपद्वृत्तिमेव दोषान्तराभिधित्सयोपन्यस्यति । ऐकशब्द्ये परार्थवत् [मी० सू० १।४।८] इत्यनेन न्यायेनेन्द्रशब्दस्य महत्त्वतद्धितार्थौ प्रति वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । विध्यनेकव्यापारात्मकश्चापरो वाक्यभेदः । तथा हि—

महत्त्वस्येन्द्रसंबन्धं तस्य च द्रव्यसंगतिम् ।
विदधत्प्रत्ययो वाक्यं भिन्द्यात्पुनरपि श्रुतेः ॥

तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः । किं तर्ह्यवयवसंबन्धनिरपेक्षाद्रूढिशब्दात्तद्धितोत्पत्तिः । अतश्च सिद्धं देवतान्तरत्वम् । न च वृत्रवधोत्तरकालं महत्त्वाभिधानेनेन्द्रस्यैव महेन्द्रत्वं भवेत् । वेदस्यादिमत्त्वप्रसङ्गात् । अतो नित्यरूढस्यैव स्तुतिमात्रार्थमेतत् ॥१६॥

व्यपदेशभेदाच्च भेदः । एवं च मन्त्रयोर्व्यवस्था भविष्यति । इतरथा विकल्पे पक्षे बाधः स्यात् । असति चार्थभेदे मन्त्रभेदस्यादृष्टार्थता प्रसज्येत ।

तस्माद्यथैव सूर्यादेरिन्द्रादत्यन्तभिन्नता ।
महेन्द्रस्य तथैवेति प्रगाथापनयो भवेत् ॥

धारणाद् भवति विशिष्टैकार्थप्रतिपादनमिति । न चायमिन्द्रशब्द इत्यादि *भाष्यं* तद्व्याचष्टे—पुनर्युगपद्वृत्तिमेवेति । विस्पष्टश्चायमन्योऽर्थ इत्यादि *भाष्यस्यार्थमाह*—विध्यनेकव्यापारात्मकश्चेति । विकल्पे पक्षे बाधः स्यादित्युक्तम् । यदि तु न विकल्पोऽङ्गीक्रियते, तदेवं स्यादित्याह—असति चार्थभेद इति ।

एवं व्याख्यायमाने तु रूढित्वे तद्धिते सति ।
अग्नीषोमादयः सर्वे रूढित्वान्न द्विदेवताः ।।

यथैव हीन्द्रशब्दस्य महत्त्वतद्धितावपेक्षमाणस्य युगपत्क्रमेण वा वृत्तिर्न संभवत्येवमेव सोमस्याग्निमपेक्षमाणस्य न तद्धितसंबन्धस्तदपेक्षस्य वा नाग्निना सह समासः । तथा क्रमवृत्तौ पुनरुच्चारणे वाक्यभेदान्नान्यतरत्र वृत्तस्यान्यतरेण वृत्तिः । सोमपदस्य वैरूप्यं, प्रत्ययस्यानेकार्थवृत्तिरिति दोषाणां साम्येनारूढित्वप्रसङ्गात्समस्तद्विदेवत्यत्वव्यवहारोच्छेदः स्यात् ।

न चैषां रूढित्वं शक्यं वदितुं, सर्वत्र शास्त्रे द्विदेवत्यत्वाभ्युपगमात् । तद्यथा चतुर्धाकरणेन्द्रपीतपूषप्रपिष्टभागविचारेषु सापेक्षाग्निदेवत्यादीनामैन्द्राग्नीषोमीयादीनामाग्नेयादिशब्दैः केवलाग्न्यादिदेवताकैरसामर्थ्यादग्रहणमिति वक्ष्यति । रूढित्वे हि कस्य क्वापेक्षा भवेत् ।

अग्नीषोमादयः सर्वे इति । यदि समासपदं तद्धिते सति रूढिव्याख्यायते तदा अग्नीषोमादयः शब्दा रूढित्वात् न द्विदेवताविषयाः स्युः । अस्ति ह्येभ्यस्तद्धितोऽग्नीषोमीय इति । सोमपदवैरूप्यमिति । अग्निना तुल्यकक्ष्यार्थः समासवृत्तौ तद्धितवृत्तौ हविर्विशेषभूतोऽर्थ इति । न चैषां रूढित्वं शक्यमिति द्विदेवत्यव्यवहारापह्नवेन शक्यमित्यर्थः । तथा मेधपतिभ्यां मेधमिति । अग्नीषोमीयेऽध्रिगुमन्त्रे उपनयत मेध्यादुरआशासाना मेधपतिभ्यां मेधमिति द्विवचनान्तो मेधपतिशब्दः श्रुतः । केषाञ्चैकवचनान्तः । तयोरन्यायनिगदत्वात्प्रकृतौ द्विपश्वादिषु विकारेष्वनूह इत्येकः पक्षः । अन्यायनिगदत्वं च स्वामी, देवते च त्रयो मेधपतय इति । द्वितीयस्तु द्वावपि नान्यायनिगदौ द्विवचनान्ते देवते वक्ष्यति, एकवचनान्तस्तु स्वामिनम् । तस्माद् द्वावपि विकृतौ यथाविषयमूहितव्याविति । तृतीयस्तु नैवमपि सम्भवति स्वामिवचनत्वे मेधपतेर्योमेधस्तमुपनयतीति सम्बन्धो देवतावचनत्वे मेधपतय उपनयतेति । न चैतदेकस्मिन् वाक्ये उपपद्यते । तस्मात् स्वामिवचनत्वमेवास्तु । तथा हि द्विवचनान्तोऽपि पत्न्यभिप्रायेण भविष्यति देवतावचनत्वे त्वेकवचनान्तस्योत्कर्षः स्यादिति । सिद्धान्तस्तु—देवता वा तदाशीष्ट्वात्सम्प्राप्तत्वात्स्वामिन्यनर्थिका स्यात् [ मी०सू० ६।३।३५ ] । आशासाना इति श्रुतं तन्मेधपतिभ्यामित्यनेन सम्बध्यते । स्वामिने त्वसाशासानीयोऽसौ

तथा द्विदेवतात्वसामान्येनैन्द्रापौष्णादीनामग्नीषोमीयैन्द्राग्नप्रकृतिकत्व वक्ष्यते । तथा 'मेधपतिभ्यां मेध' इत्यत्र 'देवता तु तदाशीष्ट्वात्' [मी० सू० ६।३।३५] इत्यर्थद्वयमाश्रयिष्यते । तथा मनोताधिकरणे वक्ष्यति सत्यमग्नी-षोमौ देवताप्रकृतौ तावग्निश्च सोमश्च तत्राग्निरदेवता न त्वसमवेत इति। तथा देवताद्वन्द्वाश्रयाणि अग्नेरीत्वषत्वादीनि स्मर्यमाणानि न शक्यानि बाधितुम् ।

अथ[1] व्याकरणमेवमादावप्रमाणं तर्हि देवतातद्धितस्मरणाप्रामाण्यादग्नी षोमादीनां देवतात्वमपि न स्यात् । अथ तत्प्रतीतिरभ्युपगम्येत सा तुल्यार्थद्वय प्रतीतावपीति रूढित्वाभावः । एतेनाश्वकर्णादिवदर्थरहितसमासान्वाख्यानेन स्वरसंस्कारप्रसिद्ध्यर्थमग्नीषोमीयादिद्वन्द्वस्मरणप्रामाण्यकल्पनं प्रत्युक्तम् । तथा हि

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते ।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः ॥

यतस्तस्यैवासौ । देवताभ्यां तु भवति यागसिद्धये । किञ्च देवताभ्यां संकल्पितत्वात् परकीयो रक्ष्यते । काले देवतया सम्भन्त्स्यते । तेनानैश्वर्या-त्पतित्वमपि स्वामिनो भाक्तं स्यात् । तस्मात् देवतावचनत्वं चैकवचना-न्तस्योत्कर्षो गुणाभिप्रायत्वादिति । तथा मनोताधिकरण इति । अस्त्या-ग्निषोमीय प्रकृतिर्वायव्यः पशुः तत्र त्वं ह्यग्ने प्रथमो मनोतेत्यादिरतिदेश प्राप्तो मन्त्रः सोऽर्थान्तरे वायावूहितव्य इति पूर्वपक्षः । ननु प्रकृतावसमवे-ताग्न्याभिधायित्वात् नास्योहप्राप्तिः । अत्रोच्यते—यौ तावग्नीषोमौ तावग्निश्च सोमश्च तत्राग्निरदेवता नत्वसमवेतः ततश्च स प्रतीतः साहचर्यात्-सोममुपस्थापयन् देवताप्रत्ययं करोतीति । तद्वद्वायुर्देवता प्रत्ययं कुर्वन्नग्नि कार्ये वर्तते । तस्मात्तत्र मन्त्रस्योहत्वमिति प्राप्ते विधीयते। मनोतायां वचनादविकारः स्यात् [मी०सू० १०।४।४२] । वचनं यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्येति विकृत्यर्थं चेदमेवकारात् । प्रकृतौ हि नाग्या-दृशी मनोता सम्भवति । यैवकारेण निवर्त्येत । तस्मादनूह इति । अथ व्याकरणमिति । शब्दसाधुत्वं च तद् विषयो न तदर्थ इति । एतेनाश्व-कर्णादिवदिति । यदुच्यते भवत्यन्यत्रार्थनिरूपणेऽपि व्याकरणं प्रमाणं यथात्वश्व कर्णादौ स्वरसंस्कारमात्रार्थम् । एवमत्राप्यर्थाङ्गीकरणे पूर्वोक्त वाक्यभेदादि दोषादिति । तदप्यनेनार्थागमेनायुक्तं स्वरसम्बद्ध एव संस्कारः ।

1. यदि चेति मुद्रितपुस्तकपाठः, अथेति प्रकृतव्याख्यानुगामी ।

महदिन्द्रशब्दयोस्तावदवश्यं पृथगर्थाभिधानशक्तिः कल्पयितव्या । तयोश्च गुणगुण्यभिधायित्वाद्विशेषणविशेष्यात्मकत्वमवधारितम् । तत्र यावदेव संहतावुच्चारितौ तावदेव पूर्वानुभूतार्थसंबन्धितया विशिष्टार्थप्रत्ययो जायते । न चास्य निवर्तकं किञ्चिदस्ति, न च समुदायस्यापूर्वशक्त्यन्तरकल्पनाप्रमाणं विद्यते । लब्धात्मिका च समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते । न चावयवार्थरहितार्थान्तरप्रयोगं विस्पष्टमन्तरेण तदात्मलाभः । किञ्च—

एकस्तावदतिक्लेशैरिन्द्रोऽस्तीत्यवगम्यते ।
महेन्द्रस्त्वपरः कल्प्यः पुनः क्लेशान्तरैर्भवेत् ।।

प्रत्यक्षेऽपि तावदर्थेऽनकेशब्दशक्तेः कल्पना निष्प्रमाणिका, किमुत यत्रार्थसद्भावोऽपि कल्पनीयः । तदिहेन्द्रशब्दप्रयोगान्यथानुपपत्त्येन्द्रस्तावददृष्टोऽपि कल्प्यते, तत्र यदि पुनर्महेन्द्रशब्दप्रयोगान्यथानुपपत्तिर्भवेत्ततोऽर्थान्तरं महेन्द्रो नाम कल्प्येत । यदा तु पूर्वकल्पिताभ्यामेव महदिन्द्रपदशक्तिभ्यां प्रयोगः सिध्यति, स एव चार्थः किञ्चिद्विशिष्टः प्रत्यभिज्ञायते, कस्तदार्थान्तरं कल्पयितुं शक्ष्यति । तस्मादिन्द्र एव महत्त्वविशिष्टो महेन्द्रो नान्य इति सिद्धम् । न च समासं कृत्वा तद्धिते क्रियमाणे कस्यचिदसामर्थ्यं समासवेलायां तद्धितवेलायां चापेक्षणीयार्थान्तरानुपादानात् । न च द्विरुच्चारणनिमित्तवाक्यभेदप्रसक्तिः । सकृदुच्चारितैकपदोपात्तानेकार्थकथनात् । वृत्तिद्वयात्मकं हि माहेन्द्रपदम् । एकैका च वृत्तिर्वाक्यार्थे वर्तते । तत्र ययोर्वाक्ययोरर्थौ माहेन्द्रपदेनोपात्तौ तौ ताभ्यां निर्भिद्य कथ्येते । यच्चात्रासकृदुच्चारणं दृश्यते न तद्वेदवचनस्यैव । न हि

**अथ वा स्वरः संस्काराश्च प्रकृत्यादिविभागेन व्याकरणम् । अस्ति हि मतं व्याकरणेन संस्कृतानां शब्दानां साधुत्वमिति । अर्थाविसम्वादमेवोपपादयति—महदिन्द्रशब्दयोरिति । सकृदुच्चारितैकपदोपात्तेति । सकृदुच्चारितेनैवैकेन पदेन बहवोऽर्था उपात्ताः, न तत्र द्विरुच्चारणमस्ति । यत्त्विदं महांश्चासाविन्द्रश्चेत्यादि ततः पदाद्भिन्नं तस्यार्थकथनाय नात्रत्येन द्विरुच्चारणेन तत्पदं द्विरुच्चारितं भवतीत्यर्थः । तत्रानेकार्थविवरणं—वृत्तिद्वयात्मकं हीति । ततश्च द्वाभ्यां वाक्याभ्यां विवरणमुपपन्नमित्याह—तत्र ययोर्वाक्ययोरिति । एवं च यदत्र विवरणवाक्येऽसकृदुच्चारणं न तद् वेदवचनगतं भवति तयोर्भेदादित्याह—यच्चात्रेति । ननु वैदिकमेव पदमर्थस्फुटीकरणाय**

कदाचिदप्येवंरूपो वेदोऽस्ति महांश्चासाविन्द्रश्च महेन्द्रो देवता अस्येति माहेन्द्रः । न चैतदेवं वैदिकं पदमेवं विभज्यते । विभागस्य पौरुषेयत्वेनावैदिकत्वापत्तेः । किन्तु—

वेदे स्वरूपतः शब्दो माहेन्द्रादिरवस्थितः ।
तस्यार्थः सकलो वाक्यैः पौरुषेयैर्निरूप्यते ॥

विचित्रशक्तीनि हि पदानि एकानेकपदार्थप्रतीतेः तथैषामर्थकथनं कदाचित् पदेनैवान्येन क्रियते कदाचिद्वाक्येन, तेनाप्येकेनानेकेन वा द्विपदेन बहुपदेन वेति वैचित्र्यम् । तद्यथा कः पिकः कोकिलः, क औपगव उपगोरपत्यम्, उपगुना वा स्वकान्तायामुत्पादितः । तथा पचतीत्युक्ते पाकं परगामिफलमेकः कर्ता पूर्वापरीभूतं वर्तमानकाले निर्वर्तयतीति कथ्यते । नचैवं कथयतां वाक्यभेदः प्रसज्यते । न वाशब्दार्थत्वमध्यवसीयते । एवमेव यदि माहेन्द्रपदोपात्तोऽर्थस्तदस्पृशद्भिरेव शब्दशक्तिविद्भिः पुरुषैः स्ववाक्येनैकेनानेकेन वा कथ्यते कस्तव वाक्यभेदः, शतकृत्वोऽपि हि स्ववाक्यमुच्चार्यमाणं न वेदं दूषयति । न च तदीयोऽर्थः कथ्यमानः पौरुषेयत्वं भजते, अवश्यं चानेकोऽर्थः पुरुषैः कथ्यमानः क्रमेण कथयितव्यः, सोऽपि च प्रकृतिप्रत्ययपौर्वापर्येणेत्येवं कथ्यते महांश्चासाविन्द्रश्चेत्यादि । न चैवं सापेक्षत्वम् । 'अथ वा भवति च प्रधानस्य सापेक्षस्यापि समासः' इति । यद्यपीन्द्रशब्दस्तद्धितापेक्षस्तथापि महत्त्वं प्रति प्राधान्याल्लभते समासम् । अतश्च युगपदपेक्षायामविरोधस्तथापि तु वृत्तिः क्रमेणैव । कुतः—

**विभज्य प्रदर्श्यमानं वाक्यतां गतम् । तेनात्रार्थस्यैवासकृदुच्चारणस्यापि व्यक्तिर्भवतीति तत्सम्बन्धिन्येव स्यादित्याशङ्क्याह—न चैतदेवमिति । स्वाध्यायानुगतेनैवोच्चारणेनान्वितं वैदिकम् । अतोऽवयवविभागेन पृथक्स्फुटीकरणात्मकेन पौरुषेयेण नावैदिकत्वापत्तिरिति । सम्भवति चानेकत्रार्थे पदस्य शक्तिः । ततश्चानेकैः शब्दैस्तदर्थकथनं दृष्टत्वादित्याह—विचित्रशक्तीनिहीति । न चैवं कथयतामिति । अनेन प्रकारेण कथयतां यदि कथनगतो वाक्यभेदो भवति नासौ कथ्यमानार्थे पदे प्रसज्यत इति । सम्प्रत्यङ्गीकृते कथनक्रमे उपपत्तिमाह—अवश्यं चेति । न चैवं सापेक्षत्वमिति । यथान्वाख्यानं शब्दानां साधुत्वम् । अतोऽन्वाख्यानसापेक्षत्वे दूषिते तदनुगतस्य**

सापेक्षोऽपि महत्त्वेन प्रधानत्वात्समस्यते ।
तदपेक्षो गुणत्वात्तु तद्धितेनैव वर्तते ॥

तेन यत्रैव प्रधानं सापेक्षं तत्रैतयैव तावत् वृत्त्या भवितव्यमिति समास एव प्रथमं भवति । यदि वा कृत्वा समासं तन्त्रेण वृत्तिरिष्येत, ततः शुद्ध इन्द्रस्तद्धितसंबन्धी शुद्धश्च समासभागिति निर्गुणस्यैवेन्द्रस्य देवतात्वापत्तेर्गुणानर्थक्यप्रसङ्गः ।

न चेन्द्रमहत्त्वयोर्युगपत्तद्धितार्थे निपतितयोररुणैकहायन्यादिवत् परस्परनियमो लभ्यते । न ह्यक्रियायां युगपत्संनिपातो नापि विशेषणवशीकारसामर्थ्यम् । सत्यपि च द्वन्द्वदेवतापत्ति. । अकृतसमासयोश्च महदिन्द्रशब्दयोरनेकत्वाद् विक्षितैकसंख्यप्रातिपदिकनिमित्ततद्धितसंबन्धाभावप्रसङ्गः । किञ्च—

सुबन्तौ यदि चैतौ ते न प्रातिपदिकं ततः ।
असुबन्तत्वक्लृप्तौ वा समासांशो न लभ्यते ॥

तस्मान्न युगपद् वृत्तिरिति क्रमवृत्त्या समासार्थस्यैव देवतात्वम् । अतश्चेन्द्र एव गुणसंयुक्तो महेन्द्रो नार्थान्तरमिति पूर्वपक्ष एव शोभन इत्यन्यदुत्तरं वाच्यम् । तदुच्यते—

श्रुत्या हि देवता यागे समवैति न रूपतः ।
तस्मान्माहेन्द्रशब्दोक्त्या महेन्द्रो देवतेष्यते ॥

यद्यप्यभिन्नोऽर्थस्तथापि "विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना

**साधुत्वं न स्यात् । तेनान्वाख्याने सापेक्षतादूषणं परिहरन्तीति । न ह्यक्रियायामिति । क्रिया ह्यनेककारकसाध्यात्मिकैव सैकग्रहणेनापर्यवस्यन्ति अनेकैर्युगपद् निर्वर्तनीयावगता तानि संहन्यात् । अक्रिया तु तद्धितार्थो देवतात्वमेकेनैवेन्द्रेण महत्वेन वा[1] निराकाङ्क्षं न युगपदुभयेन सम्बध्यते । प्रत्येकसमाप्त्या वा सम्बध्येत । तत्र च न विशेषणयोर्नियम इत्याह—**नापि विशेषणवशीकारसामर्थ्यमिति । **अग्नीषोमीयादौ तु [2]समासार्थ एव तद्धितार्थेन सम्बध्यते । न च तदत्र सम्भवति । अभ्युपगमे त्वनिष्टापत्तिरित्याह—**सत्यपि चेति । विधिशब्दस्य मन्त्रत्व इति । **देवता विधिस्तदुद्देशेऽमुकायेति शब्दोच्चारणे पुरुषं नियुङ्क्ते । तत्रोपात्तशब्दातिक्रमेण नार्थेन शब्दान्तरलक्षणायां कारणमस्ति । अतो विधिगतस्यैव शब्दस्य मन्त्रकार्येऽर्थप्रकाशने भावः स्यात् । प्रपञ्चितं चैतत् साधुशब्दाधिकरण इति ।**

---

१. वेत्यारभ्य प्रत्येकमिति यावत् पदानि आ० मा० नास्ति ।

२. समाहार एव आ० मा० ।

[मी० सू० १०।४।२३।] इति महेन्द्रशब्देनैवोच्यमानस्यास्मिन् ग्रहयागे देवतात्वं नान्यथा। तत्र तत्र सकलपर्यायेणापि बृहदिन्द्रादिशब्देनोच्यमानस्य देवतात्वं न भवति किमुत न्यूनेनैवेन्द्रशब्देन। तथा हि—

अर्थोऽपि यादृशो यत्र देवतात्वेन चोदितः।
मनागपि ततोऽन्यत्वे देवतेति न गम्यते॥

देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वाच्चोदनैवैकं प्रमाणं, सा च यं यादृशं यत्र यादृशे चार्थे विदधाति, स यदि तथैवानुष्ठानेऽपि संपाद्येत, ततस्तत्प्रमितोऽयमित्यवसीयते।

किञ्चिदपि चेदिहान्यथा जातं निवृत्तव्यापारायां चोदनायां प्रमाणान्तरं मृग्यम्, न च तदस्तीत्यप्रमाणता यथा वक्ष्यति, स एवाग्निरष्टाकपालस्य देवता नाज्यस्य इति। तेन व्यवस्थावशाद् यथैवेन्द्रे चोदितेऽग्नेर्देवतात्वं न भवति, सोमस्य च चोदिते न पुरोडाशस्य, अभिषुतस्य च न लतायाः, शुद्धे च न सगुणस्य, तथैव गुणवति चोदिते न निर्गुणस्य। कुतः—

देवता हि विधेयत्वाद्विवक्षितगुणेष्यते।
लक्षणत्वे तु तस्याः स्यादविवक्षा गुणादिषु॥

यदि हि तद्धितसंबन्धे देवतोद्दिश्यमाना स्यात्ततोऽस्या गुणाविवक्षा भवेत्। इयं पुनरविधीयमाना देवतात्वमेव न प्रतिपद्यत इत्यवश्योपादातव्या। ततश्च विवक्षितगुणत्वात्तदपाये न कथञ्चिद्देवतेति गम्यते। यथा 'शुक्लवासा भोजयितव्यो' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'दण्डी प्रैषानन्वाह' इति विशेषणरहितानामकर्माङ्गत्वम्। यदा तेऽप्युद्दिश्यन्ते योऽयं शुक्लवासास्तमानयेत्यादौ

**न्यूनत्वे कोऽतिशय इत्यपेक्षायामाह—अर्थोऽपि यादृशो यत्रेति। यद्यपि शब्दाभिधानविषयतां नीतोऽत्रार्थोऽपि व्याप्रियते न[1] शब्दमात्रं, तथापि शब्दैकसमधिगम्यत्वात्तद्व्यापारस्य न यथाचोदितादन्यादृशेन सिद्धिरवसीयत इति। किमिति सगुणेऽपि चोदिते विगुणस्योपयोगित्वं न स्यात्। यथा स्वर्गकामस्य लिङ्गरहितस्येति प्रश्नः—कुत इति। अविधीयमानेति। यागाङ्गता देवतात्वम्। न चाविधीयमानस्याङ्गतास्तीति। एव-**

१. न शब्दमात्रमिति नास्ति आ० मा०।

तदा विनापि विशेषणेनानीयन्ते । तदिह यद्यपि तावद्देवतारूपेणोपकुर्यात्-तथापि न गुणरहिताश्रीयेत, किमुत यदाभिधानोपकारिणी विधिगतव्यतिरिक्ताभिधानाभिहिता नैव प्रत्यभिज्ञायते सैवेयं देवतेति ।

समासेन च विधीयमानायां नानेकार्थविधिदोषप्रसक्तिः । तत्र माहेन्द्रग्रहगता न कथञ्चिदिन्द्रशब्देनोच्यते ।

या तु तेनोच्यते सा तत्र नैव देवतेत्यनर्थकमेवास्याः प्रकाशनम् । अतश्च 'न श्रुतिसमवायित्वात्' [मी० सू० ।२।१।१६] इत्ययमपि सूत्रार्थो भवति, श्रुतिसमवेतं देवतात्वं भविष्यति तदधीनज्ञानमित्यर्थः । तच्च तद्धितसंवादे सति ज्ञायते । तस्मादस्ति देवताभेद इति । कथं त्वस्मिन् पक्षे भाष्यगमनिका तदभिधीयते ।

पूर्वपक्षवादी तावदनुत्कर्षं प्रगाथस्य वदति, यश्च माहेन्द्राद् ग्रहादिन्द्राभिधानसमर्थमन्त्रानुत्कर्षं वदति । तेनाकर्माङ्गभूतार्थप्रकाशनवैयर्थ्यादिन्द्र एवात्र शुद्धो देवताभूतः प्रकाश्यत इत्यभ्युपगतं भवति ।

तस्य च देवतात्वं नाभ्युपगममात्रेण सिध्यति । नापि प्रमाणान्तरेणेति । य एतद्ग्रहोत्पत्तिवाक्ये देवताभिधानशक्तिस्तद्धितः श्रूयते 'माहेन्द्रं गृह्णाति' इति तत्संयोगाद् विज्ञायते । स च यदि समासान्निष्कृष्य केवलादिन्द्रशब्दादुत्पाद्यते, ततो मन्त्राभिधेयसदृशं देवतात्वमुक्तं भवति ।

सिद्धवच्चैतमर्थं पूर्वपक्षवादिनोऽभिप्रेतं मन्वानो निष्कृष्य ब्रवीति इन्द्रोऽस्य देवता इति तद्धितसंयोगेन ज्ञायते । न चास्य महत्त्वमपेक्षमाणस्याकृते समासे शुद्धस्योपसर्जनीभूतस्य तद्धितसंयोगः, तद्धितसंयोगापेक्षस्य वेति सत्यपि सापेक्षप्रधानसमासे प्रातिपदिकावस्थायां तद्धितापेक्षा । न च तदानीमसुबन्तत्वात्समासोपपत्तिः । तेन यत्रैव पृथग्भूतं सुबन्तं संबन्धार्हमेव पदान्तरमपेक्षते यथा राजपुरुषः शोभन इति, तद्विषयमेवैतत् । भवति वै प्रधानस्य 'सापेक्षस्यापि समास' इति द्रष्टव्यम् ।

**मर्थरूपेणाप्युपकुर्वंस्त्यां यदा न विशेषत्यागस्तदा सुतरां शब्देनेत्याह— तदिह यद्यपीति । समासेनेत्यादिनार्थरूपोपकार एवोच्यते । सूत्रमत्रापि योजयति—अतश्चेति ।**

अकृते च समासे तद्धितापेक्षायां वाक्यात्तद्धितोत्पत्तिरित्यभ्युपेतं स्यात्। शुद्धस्य वा तद्धितसंस्पर्शाद्विशेषणानन्तर्गतिप्रसङ्गः। क्रमवृत्तिः पुनर्भवतो नाभिप्रेतैव, पूर्वं तद्धितसंबन्धे पूर्वोक्तावेव द्रव्यविशेषणोत्तरपदवृद्धिप्रसङ्गदोषौ।

न च समासार्थे वृत्तस्य शुद्धस्य तद्धितसंबन्धः। तेनैकस्मिन्नेव प्रयोगे तन्त्रसंबन्धोऽभ्युपगन्तव्यः। ततश्च 'ऐकशब्द्ये परार्थवत्' [मी० सू० १।४।-] इति तथैव वैरूप्यदोषः।

विस्पष्टश्चायमन्योऽर्थ इति प्राक्समासादनेकार्थविधेः समासपदलभ्यत्वाद् वाक्यभेदमाह। कृते तु समासे नैष दोषः। तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः शुद्धः किं तर्हि विशिष्ट एव।

अथ वा नेन्द्रो देवता केवलपदोपात्तः शुद्ध इत्यभिप्रायः। कथं तर्हि महत्त्वविशिष्टः, समासप्रातिपदिकात्तद्धितोत्पत्तेः।

न त्ववयवसंबन्धेनेति—नावयवप्रसिद्धिनिराकरणपरं, किं तर्हि, नावयवसंबन्धेन तद्धितोत्पत्तिर्निष्क्रष्टुमशक्यत्वादित्यभिप्रायः।

तस्माद् देवतान्तरमिति। सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणाद् देवतान्तरत्वम्। आह च—

आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि दृश्यते।
अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया॥

यदप्युच्यत इन्द्रस्य वृत्रवधोत्तरकालमिति। पूर्वं सर्वत्र शुद्धात्मनः प्रतिपन्नदेवतात्वस्य पश्चात्तनोऽयं गुणः स्तुतिमात्रोपयोगी न देवतात्वेऽन्तर्भवतीति मन्यते। अस्य तूत्तरं गतार्थम्।

वाक्यात्तद्धितोत्पत्तिरिति। सा च न युज्यते। प्रातिपदिकाद्धि सैकस्मादिष्यत इति। शुद्धस्येति। ननु संमतैव तस्यानन्तर्गतिः। तदुच्यते। न देवतात्वेऽनन्तर्गतिदूषणं, किन्तु तद्धितप्रकृतौ। प्रातिपदिकेन तु तदा पूर्वपदवृद्धिर्लभ्यत इति। प्राक्समासादिति। समासलभ्यत्वादनेकार्थविधेः प्राक्समासात्तदङ्गीकरणे वाक्यभेदमाहेति। आचार्यो मातुलश्चेति। शिष्येणैकक्रियान्वयिनमर्थमाचार्यशब्दोऽवलम्बते, तेनाचार्यशब्दार्थसम्पत्तौ येन सहैका क्रिया सोऽनुभूतः स्वीयामपेक्षां प्रसूते। तेनापेक्षणीय एवापेक्षाहेतुः। एवं मातुलशब्दो मातुर्भ्रातरमभिदधाति। यस्य मात्रा सोऽनुभूत इति।

स्थिते च देवतान्तरत्वे, शुद्धस्य देवतायाः प्रकाशनं, शुद्धेन वा विशिष्टस्य-विशिष्टचोदनायामपि वा शुद्धस्य देवतात्वं, शुद्धशब्दोच्चारणेऽपि वा विशिष्टे देवतात्वं प्रतिपद्यत इत्यादि सर्वमन्धकारनिरीक्षितं साहसमात्रेणाभ्युपगम्येत, न चैतद्युक्तम्। अतो यत्र विधिमन्त्रयोर्देवतासंवादस्तत्र प्रगाथो नीयेत। अस्मत्पक्षे पुनः—

यां काञ्चिदप्युपादाय देवतां साधिता स्तुतिः।
अदृष्टं यागमात्रार्थं करोत्यारादवस्थितम् ॥१७॥

यदि चादिमाननादिर्वा गुणः केवलमिन्द्रस्तुत्यर्थमेवोपादीयते न देवतात्वेऽन्तर्भवति, ततोऽस्योपादानमेवानर्थकं स्यात्। सर्वा हि देवतैवमर्थमभिधीयते विधीयते वा कथं नाम तदुद्देशेन कर्म क्रियेतेति।

यदि चाविहिते विहिते च गुणे केवलेनेन्द्रेण व्यवह्रियते ततो नार्थो गुणाभिधानेन। किञ्च—

गुणोऽनन्तर्गतश्चात्र पश्चादभिहितो भवेत्।
लक्षणत्वेन वोक्तः सन्न चाप्राप्तेस्तुदस्ति ते ॥

न हि ग्रहसबन्ध इन्द्रस्य प्राप्तो येन तद्गतेन्द्रानुवादेन महत्त्वं केवलमेव स्तुत्यर्थमुच्येत। न च महानिन्द्रः प्राप्तो यतो गुणेनोपलक्ष्य विधीयेत्। तस्मादप्राप्तविधेर्देवतान्तरता ॥१८॥

पूर्ववन्मन्त्रव्यपदेशभेदव्यवस्था ॥१९॥

वशादिद्रव्याणामर्थरूपोपकारित्वात् प्रत्यक्षलभ्ये विशेषे सामान्येनापि सिद्धेर्न विधिशब्दादरः ॥२०॥

बलवत्प्रमाणविरोधे संस्कारपक्षस्त्यज्येत, न च सोऽस्ति, लिङ्गबलीयस्त्वादुत्कर्षसिद्धेरित्यपर्युदासः संस्कारपक्षस्य।

अथ वार्थैकदेशोऽयं समासार्थप्रकाशनम्।
करिष्यत्यविरोधाय मनोतास्थाग्निशब्दवत् ॥

शुद्धस्य देवताया इति। शुद्धस्य यत् प्रकाशनं तदेव देवताया इति। नार्थो-गुणाभिधानेनेति। नहि विध्युद्देशान्तरगतस्योद्भिदधिकरणोक्तेन न्यायेनार्थ-

अनुत्कृष्यमाण एव वा प्रगाथः सन्निधिवशादवयवद्वारेण महेन्द्रमविरोधाय दृष्टार्थत्वाय च प्रकाशयिष्यति, यथाग्नीषोमीये मनोतायामग्निशब्दः प्रकरणात् समासस्थः प्रतीयमानः साहचर्यात्सोममपि प्रतिपादयन् समुदायार्थो विज्ञायते। अतश्चानुत्कर्षेऽप्यदोष इति ॥२१॥

आम्नातेष्वपि मन्त्रेषु नोत्कृष्टेष्वर्थदर्शनम्।
सर्वेषु भवतीत्येवं नोत्कृष्टत्वं तु दुष्यति ॥

न हि यमादीनां ग्रहान्तरेष्वपि देवतात्वं येनेन्द्रवदुत्कृष्टैर्मन्त्रैः प्रकाश्येरन्। अतस्तेषां तावद् विध्यानर्थक्यप्रसङ्गादवश्यमदृष्टार्थत्वेन भवितव्यम्। ततश्च तत्सामान्यादितरेषु तथात्वं, तस्मान्न संस्कारकर्मत्वमिति ॥२२॥

यमादयो न विद्यन्ते यद्यपि ग्रहदेवताः।
अन्यकर्मोपयोगित्वात्प्रकाश्याः स्युस्तथापि नः ॥

मण्डूकसूक्तस्याग्नौ प्रयोगः, तत्र मण्डूकेनाग्निविकर्षणाम्नानात् अक्षसूक्तस्य राजसूये, तत्र 'अक्षैर्दीव्यतीति' विधानात्।

मूषिकासूक्तस्यैकादशिन्याम्, 'आखुस्ते पशुः' इत्युपशयसंबन्धसंकीर्तने सति तद्द्वारेणोपशयस्यैव स्तुतिः कुसुम्भकसूक्तादीनां तु यदि क्वचिद्विशेषरूपेणार्थो नास्ति ततः सामान्यविधानेनार्थवत्ता भविष्यति।

वाचः स्तोमे सर्वमन्त्रोपदेशात्। तथाश्विने सूर्योदयावधि समाप्त्यसंभवे सर्वासामृचामुपदेशात्।

तत्र वचनेनैवासमवेतार्थमन्त्रविधानसामर्थ्यादगतेरदृष्टार्थाश्रयणं, न च क्वचिददृष्टार्थत्वेन सर्वत्रैव दृश्यमानमप्यर्थं प्रोज्झ्यादृष्टार्थत्वकल्पना युज्यते।

**वादतयोपयोग इत्याभिप्रायः। समासस्थ इति। अग्नीषोमीयप्रक्रमे अग्निशब्दश्रुतिरग्निषोमसमासस्थमग्निशब्दं बुद्धिस्थयतीति। आम्नातेष्वपीति। सन्तु तावदप्रकरणसमाम्नाताः कथञ्चिदवगतसम्बन्धा भूयांसो मन्त्राः इत्यपि शब्दार्थः। उपशयसम्बन्धेति। तत्रोपशयो यूपो भवतीत्याम्नातम्। यद्यपि चात्राखोरुपशयशब्दसम्बन्धः कीर्त्यते तथाप्यसमवेतप्रकाशनवैयर्थ्यात् परावृत्या परमार्थतस्तत्राखोरभावात्समवेतस्योपशयस्यैवाखुसम्बन्धेन स्तुतिरिति। ननु सर्वासामृचां वाचस्तोमाश्विनयोर्दृष्टार्थत्वासम्भवात् कथं वाचः स्तोमे पारिप्लवं शंसतीत्यादेर्दृष्टार्थत्वमित्याशङ्क्यादृष्टार्थतामेव तत्राप्युपगच्छति—तत्र वचनेनैवेति।**

तथा हि—

न जपादावदृष्टार्थे वैष्णव्यादिनिदर्शनात् ।
याज्यादावपि दृष्टार्थे स्याददृष्टार्थकल्पना ॥२३॥

यदुक्तं मनोतायामिवाग्निशब्दः इन्द्रशब्दः समासार्थं लक्षयिष्यतीति । तदयुक्तम् । कुतः, एतस्मादेव दोषात् । न हीन्द्रशब्दस्य स्वार्थमभिदधतः कश्चि-द्विरोधो येन श्रुतिवृत्तिं जह्यात् ।

सर्वादृष्टार्थानां च यथाकथंचिल्लक्षणया दृष्टार्थत्वापादनसंभवादयुक्त-मेतत् । यत्तूक्तमुत्कृष्यतामेवेति, तदयुक्तम् । कुतः—

प्रकृतस्तोत्रशेषत्वं श्रुत्या सन्निधिक्लृप्तया ।
विना सामान्यसंबन्धाल्लिङ्गं चाविनियोजकम् ॥

यदि ह्येकान्तेन प्रथमं दृष्टार्थत्वमवधारितं स्यात् ततः क्रमसन्निधिकल्प्या श्रुतिर्बाध्येत । यतस्तु विनियोगोत्तरकाला प्रयोजनकल्पना न तद्वशेनैव विनियोग स्तेन क्रमसन्निधिभ्यां विनियुक्ते दृष्टमदृष्टं वा प्रयोजनं कल्प्यमानं न विरुध्यते । न चोत्कृष्टस्य प्रगाथस्यान्यत्र विनियोगहेतुरस्ति ।

न जपादाविति । जपादौ कर्मण्यदृष्टार्थे सति न तत् साधनवैष्ण-व्यादि मन्त्रनिदर्शनादिति । एतस्मादेव दोषादिति । सूत्रस्येयं व्याख्या प्रकरणे देवताप्रकाशनविधौ लक्षणया मन्त्रः संयुज्यते । प्रकाशनक्रियोत्पत्तिविधौ तु श्रुत्या संयुज्येतेति । प्रकृतस्तोत्रशेषत्वमिति । प्रकृतग्रहेज्याशेषभूता स्तुतिरनेन मन्त्रेण कर्तव्येति सन्निधिक्लृप्तश्रुतिसंयोगादवसीयते । तत्र यदि मन्त्रेण देवताप्रकाशनं स्तुतिशब्दार्थस्ततो मन्त्रस्य प्रकाशनो-पकारेण देवतार्थत्वम् । न चेन्द्रस्य महेन्द्रार्थत्वं सम्भवतीति सव्यापारस्य मन्त्रस्य महेन्द्रादपगमात् श्रुतिसंयोगो बाध्येत । प्रधानकर्मत्वे तु [1]स्तुतेः सैव प्रकरणेन माहेन्द्रग्रहाङ्गं तदङ्गत्वं मन्त्रस्य क्रमनिमित्तमित्यबाधः श्रुति-संयोगस्य । तेन सन्निधिक्लृप्तया श्रुत्या प्रकृतग्रहस्य स्तोत्रमनेन कुर्यादिति । विनियुक्तस्य मन्त्रस्य प्रयोजनाकाङ्क्षा न विनियोगविरोधिदेवताप्रकाशनं प्रयोजनत्वेन गृह्णातीत्यदृष्टार्थप्रधानकर्मस्तुतिशेषत्वं मन्त्रस्य । यश्चाभि-प्रायः सन्निधिबाधेन लिङ्गादप्रकृतग्रहदेवताप्रकाशनार्थत्वं मन्त्रस्य भविष्यतीति । असावप्यनुपपन्न इत्याह— विना सामान्यसम्बन्धादिति ।

---

१. स्तुतस्यैव प्रकरणेन आ० भा० ।

लिङ्गं हि देवतां प्रकाशयितुं सामर्थ्येन तन्मन्त्रं स्वरूपे विनियुञ्जीत, तथा चास्यानर्थक्यप्रसङ्गः। कर्मसंबन्धे तु न कश्चिदस्य व्यापारः। तदेतल्लिङ्गं यदि सामान्यतः केनचित् कर्मसंबन्धः क्रियते, ततः कथं तस्योपकरिष्यतीत्यपेक्षिते यथा शक्नोतीत्येवमाश्रयणाद्देवताप्रकाशनद्वारेणेति विनियुङ्क्ते।

न चात्र सामान्यसंबन्धकारणं पश्यामः। तस्मादुत्कृष्टानामानर्थक्यमेव स्यादित्यदृष्टार्थतैव न्याय्या। किञ्च—

एवं च सप्तमी षष्ठी द्वितीया स्तौतिशंसती।
श्रुतिवृत्ता भविष्यन्ति त्वत्पक्षेऽन्यार्थवृत्तयः॥

गुणगुण्यभिधानक्रियाणामक्षरारूढत्वात्सप्तमीश्रुतिसंयोगो घटते। प्रकाशने हेतुकरणत्वात्तृतीयायुक्ताः कवत्यादयः श्रूयेरन्। ननु स्तुतावपि कवतीनां करणत्वात्तृतीयैव प्राप्नोति। नैष दोषः।

आधारत्वमपि ह्यासां करणत्वं च विद्यते।
तत्रैतयोर्यथाभीष्टं निर्देश उपपद्यते॥

प्रकाशनं पुनः परमार्थतस्तावदात्माधारम्। कर्मत्वप्रतिपत्त्युत्तरकालं च व्याप्यत्वाद्देवताधारम्। तत्र कवतीनामैकान्तिकमेव करणत्वमिति वैषम्यम्।

अपि च स्तौति शंसतीति स्तुतिभावना पूर्वापरीभूता श्रूयते। तस्यां च धात्वर्थः करणभूतः शेषाणि च कारकाणि नित्यं धात्वर्थं निष्पादयन्ति संबध्यन्ते। तत्र यदि मन्त्राः स्तोत्रनिर्वृत्त्यर्था भवन्ति ततोऽपेक्षितार्थकरणा-

तन्मन्त्रं तत्स्वरूप इति। मन्त्रेणैव प्रकाशयेदिति न विनियुञ्जीतेति। तथा चास्येति। [1]अविनियुक्तस्य। तथा च स्वरूपेऽविनियुक्तस्यापि कर्मसम्बन्धाभावात् क्वचिन्न मन्त्रमिति नकारोऽपि पठ्यत इति। अदृष्टार्थतैवेति। मन्त्रव्यापारस्य स्तुतेः मन्त्रस्य तु तन्निर्वृत्ति दृष्टमेव प्रयोजनं वक्ष्यतीति। द्वितीयाया[2] अप्राधान्यस्यानुवादत्वात्तया सूचितमाख्यातार्थं व्युत्पादयन् द्वितीयासंयोगमेव श्लोकस्थं व्याकरोति—अपि च स्तौतिशंसतीति। भावनाकरणं हि निर्वर्त्य कर्ता कृती भवति। [3]तन्निर्वृत्तये चापराण्यपेक्षते। सेयं कारकनिर्वर्त्यता प्रउगं द्वितीयानूदिता। तेन मन्त्रस्य धात्वर्थशेषत्वे द्वितीयानुगृह्यते। दृष्टार्थता चैवं मन्त्राणामित्याह—तत्र यदीति। शास्त्र

१. अथ वा अविनियुक्तस्य स्थाने पठति आ० भा०।
२. द्वितीयानुवादकत्वात् आ० भा०।
३. तन्निवृत्तये इत्यतः निर्वर्त्यता इति यावत् आ० भा० न पठति।

च्छास्त्रदृष्टमर्थं कुर्वन्तो दृष्टार्था भवन्ति । प्रकाशनं तु कुर्वन्तोऽचोदितकरणाद-दृष्टार्था भवेयुः । ततश्च वरं स्तुतीनामेवादृष्टार्थत्वम् । किञ्च—

श्रुत्यैव षष्ठी पारार्थ्यं देवतानां ब्रवीति नः ।
न प्रधानं गुणाश्चेष्टाः स्तुतेस्तेन प्रधानता ।।

देवताप्राधान्ये हि प्रातिपदिकार्थपरत्वादव्यतिरिक्तार्थविषया 'अग्निर्मूर्धा' इतिवत् प्रथमैव श्रूयेत ।

यदपि किञ्चित् प्रथमान्तं तदपि योग्यतापूर्वकैकवाक्यत्ववशेन गुण-संबन्धार्थमेव । यथा, इन्द्रो यातो जङ्गमस्य, अवसितस्य स्थावरस्य च राजेति ।

न च गुणानामुपयोगोऽस्तीति तत्प्राधान्यानाश्रयणे स्तुत्यर्थतैव युक्ता । सत्यमपि ग्रन्थच्छेदः । तत्रार्थवादन्यायेन शेषपदानर्थक्यप्रसङ्गात् सत्यपि पूर्वत्र प्राधान्यपर्यवसानसंभवे स्तुत्यर्थेनैवैकवाक्यता युक्ता ।

न चैवं स्तौतिशंसत्योः प्रकाशनलक्षणार्थता भविष्यतीति स्तुतेरेव प्राधान्यम् ।।२४।।

पृथक्त्वनिवेशिनी द्विद्वादशसंख्या न प्रकाशनाभेदे सति शब्देनोच्यते । सामान्याविवक्षायां वा प्रत्यृचं प्रतिपदं च तन्निर्वृत्तेर्न द्वादशत्वेऽवतिष्ठते । ननु च स्तुतावपि तुल्यमेतत् । तथा हि—

सामान्यस्तुतिरेकैव भेदोऽपि प्रत्यृचं स्थितः ।
न चान्यथा विवक्षास्ति यतो द्वादशता भवेत् ।।

दृष्टमिति शास्त्रेण यत्तेषां प्रयोजनं दृष्टं तददृष्टेनैव कुर्वन्त इति । अदृष्टार्था भवेयुरिति । शास्त्रेण यत्तेषां न दृष्टं प्रयोजनं तदर्था भवेयुः । ततश्चेति । ततो दृष्टेनापि व्यापारेण [1]शास्त्राङ्गीकृतार्थत्वाद् वरं श्रेष्ठं मन्त्राणां दृष्टार्थमङ्गीकृत्य स्तुतीनामेव शास्त्राङ्गीकृता दृष्टार्थत्वमिति ।

[2]ये च प्रथमान्तत्वादिन्द्रस्य नुन्नीर्याणीतिमन्त्रे प्रधानतयावगम्येत । ते गुणाः कर्मानङ्गत्वान्न प्रधानमिष्टा इत्याह—न प्रधानं गुणाश्चेष्टा इति । यदपि किञ्चित् प्रथमान्तमित्यस्य अथ यत्प्रथमान्तमित्यादि यद्व्याख्येयं यद् भाष्यं तदेव विस्तरत्वात् व्याख्यानमिति । न चैवं स्तौतिशंसत्योरिति । [3]स्तुतिभावनाप्रयत्नमिति यावत् तस्या विषयः स्तवनं व्यापारविषयेण धातूपात्तेन व्यापारो निरूप्यते । तत्र यदि गुणगुणिसम्बन्धाभिधानपर्यन्ता

१. शास्त्रनङ्गी आ० मा० ।
२. ये चेत्यारभ्य इत्याहेति यावत् आ० मा० इत्यत्र नास्ति ।
३. स्तुतिभावेनेत्यारभ्य स्तवनं यावत् आ० मा० न पठति ।

अथ स्तोमवशादृक्समुदायसाध्याः स्तुतयो गण्यन्ते तथा प्रकाशनान्यपी त्यविशेषः। उच्यते—

क्रियाः फलापवर्गिण्यस्तत्संख्यागणनाः सदा।[१]
अपूर्वद्वादशत्वाच्च द्वादशत्वं निरूप्यते॥

प्रकाशनार्थत्वे हि प्रत्यृचं प्रतिपदं च तन्निर्वृत्तिदर्शनात् क्रियासमाप्तेर्न किञ्चित् कारणमस्ति, येन द्वादशत्वं परिच्छिद्येत। अपूर्वार्थत्वे तु तेषां शास्त्रगम्यत्वाद्यथोक्तस्तोमसंपदः प्राङ् निर्वृत्तिप्रमाणाभावादृक्समुदायेनापूर्वनिर्वृत्तेस्तद्द्वारेण क्रियासमाप्त्युपलक्षणादपूर्वाणां द्वादशत्वेन स्तुतिद्वादशत्वसिद्धिः। न हि प्रत्यृचं सर्वस्तोत्रेभ्यो वा तत्कल्पनायाः किञ्चित् प्रमाणमस्ति यथा प्रकाशनस्य दर्शनम्॥२५॥

ऋचामनूह्यत्वादाग्नेयग्रहचोदनयैवाग्नेयीनां स्तुतिसाधनत्वसिद्धेः 'आग्नेयीषु स्तुवते' इत्यनर्थकं वचनम्॥२६॥

संबन्धस्य भेदनिबन्धनत्वात्संबन्धवचनेन स्तोत्रशस्त्रयोर्भेदः। स च प्रकाशनैकत्वान्न प्राप्नोति। ननु स्तुत्येकत्वादितरत्रापि तुल्यमेतत्। अथ प्रगीताप्रगीतमन्त्रसाधनत्वेन भेदः, तद् व्यक्तिद्वारेण वा, स पूर्वपक्षेऽप्यविशिष्टः। तत्रोत्तरं द्वादशत्ववत्। अत्यन्तभेदाद्धि स्तोत्रशस्त्रापूर्वयोस्तद्द्वारेण क्रिययोर्भेदमुपचर्य संबन्धवचनम्, न तु प्रकाशनं स्वतः फलतो वा भिद्यते॥२७॥

यदिदं द्वितीयाप्रतिपादितकर्मार्हमभिधानमिदं चापरं प्राधान्ये कारणम्।

**कर्तृव्यापृतिर्देवताप्रतीतिरानुषङ्गिकी। ततः स्तुत्या रूप्यते। यदा तु देवताप्रतीतिपर्यन्ता तदा प्रकृत्या धातुतामुपादाय प्रकाशयेदित्याख्यातार्थो वचनीयः। ततश्च स्तौतिशंसत्योः प्रकाशनलक्षणार्थत्वमिति। अपूर्वद्वादशत्वाच्चेति। स्तुत्यापूर्वं भावयेत् कथमित्यपेक्षायां यावन्तो मन्त्रा गृह्यन्ते तावद्भिर्निर्वर्तिता सापूर्वसाधनमिति। नन्वाग्नेया ग्रहा भवन्तीति चोदिते प्राकृतीनामेव नानादेवत्यानामृचामग्निपदोहेन प्रयोगप्राप्ते[१]रूहपदार्थवदेवाग्नेयीनामित्याशङ्कानवतारार्थमाह—ऋचामनूह्यत्वादिति। गायत्र्यादीनां प्रत्येकमनेकप्रभेदानां छन्दसां प्रत्यृचं कश्चिच्च छन्दो भेदक्रमादिवन्मन्त्रविशेषणत्वेन स्थितः। तस्य चैकपदवर्तिनापि स्तोकेन विशेषेण नाशात् सकलस्यामन्त्रत्वेन लौकिकत्वम्। तत्र प्राकृतं सत् गुणत्वसम्पत्तयेऽध्ययनसाफल्याय[२] चाग्नेयीनां तासामानयनमिति। यदिदं द्वितीयाप्रतिपादितमिति। अपि वा**

१. आधारमातृका त्वत्र पठति—'प्राप्तेरथवा देवाग्नेयीनां विधानमिति। आशङ्क्ये'त्यतः समानं सर्वत्र मातृकासु। २. साकल्याय आ० मा०।

प्रधानक्रिया हि केनचिद् रूपेणेप्सिता । 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इतिवद् भवति न संस्कारक्रियात्यन्तगुणभूतत्वात् ।

अथ वा स्तोत्रशस्त्रसमाख्ययोरभिधानत्वं तत्प्राधान्यज्ञापनार्थम् । इतरथा हि प्रकाशनमित्येवं समाख्या स्यात् । अवहन्त्यादिवद्वा नैव भवेत् ।।२८।।

योऽयं मन्त्रे फलाशीरर्थवादः स स्तुतेः प्रधानत्वे घटते सर्वत्र प्रधानविषयत्वात् प्रार्थनानाम् । त्वत्पक्षे तु—

देवतैव प्रधानत्वात् फलं याच्येत कर्मवत् ।
न स्वामिनि स्थिते कश्चिद्दासात् प्रार्थयते फलम् ।।२९।।

## [ मन्त्रविधायकत्वाधिकरणम् ]

इह मन्त्रा उदाहरणम् किं तद्गता भावनावचना ब्राह्मणवद्विदधति नेति सन्देहे शब्दाभेदाद्विधायका इत्याशङ्क्य मन्त्रत्वात् प्राप्तार्थत्वाच्च विधित्वासम्भवेन प्रयोगकालेषु ब्राह्मणविहितानामेवार्थानां स्मारका इत्युत्तरपक्ष उक्तः । तथा हि—

**श्रुतिसंयोगादित्यस्यैवायं प्रपञ्चः । द्वितीयाप्रयोगेण कर्मत्वाभिधानं तत्र धात्वर्थस्य प्रतिपादितं [1]कारकत्वेन धात्वर्थस्य परमार्थतोऽकर्मत्वादेवं ब्रवीति । तेन चाभिधाने कर्मतुल्यतास्य दर्शिता । सा च [2]कर्मत्वप्रधानमुपपद्यते न गुणकर्मत्व इत्याह—प्रधानक्रिया हीति । प्रधानक्रियां फलापूर्वयोरदृष्टार्थत्वात् प्रयोगासमवायाच्च फलस्य क्रियासिद्धौ तत्सिद्ध्यवगमात् क्रियामेव निर्वर्त्यतया पुरुषः संकल्पयतीत्यस्ति तदपेक्षया प्राधान्यम् । तस्याः संस्कारकर्मव्याप्यं तु प्रयोगसमवायि दृष्टमिति । तदेव क्रियान्वयित्वेन संकल्प्यते न क्रिया । तेन सा गुणभूतैव केवलमत एव दृष्टसंस्कार्याज्यादिनिरूपणीयत्वाद् गुणकर्मणां तदुपाधिनैव प्रकाशनादिशब्देन व्यवहारो विशेषव्यवहारस्य संस्कार्यभेदोपाधेस्तेनैवसिद्धेर्न विशेषसंज्ञया [3]प्रयोजनम् । निर्विषया चासौ स्वभावभेदाभावात् प्रधानकर्मणां चापूर्वभेदहेतुः स्वगतो विशेषः अपूर्वस्यात्यन्तादृष्टत्वात् । तेनानिरूपणीयः शब्दभेदं व्यवहाराङ्गमपेक्षत इति । ब्राह्मणव्यावृत्तस्य हेत्वन्तरस्य स्फुटस्यादर्शनात् मन्त्रत्वकीर्तनमेव हेतुत्वायेति प्रतीयते । तेनाह—मन्त्रत्वादिति ।**

१. करणत्वेन आ० मा० ।
२. सा च प्रधानकर्मत्वेऽवकल्पते आ० मा०; °त्वं उपपद्यत इति पू० मा० ।
३. कार्यम् आ० मा० ।

न कर्मान्तरतास्त्यत्र बलवत्प्रत्यभिज्ञया ।
न चोपात्तो गुणः कश्चिन्न च वाक्यान्तरे स्तुतिः ॥

स्मारकत्वप्रतिपक्षौ हि विध्यर्थवादौ स्यातां, तदिह स्वरूपं तावदन्यतः क्रियायाः प्राप्तं गुणफलनिमित्तानि तु नैवोपात्तानि यानि विधीयेरन् ।

न च वाक्यान्तरस्थे पर्यवसितप्रयोजने विधौ स्तुतिरुपपद्यते । तदुक्तं प्रथनमन्त्रे तस्मात् प्रकाशका मन्त्रा इति यद् व्याख्यायते तत्र वदामः । किं पुनः कारणं मन्त्रत्वेनाख्यातविशेषाणां विधिशक्तिस्तिरोधीयते कथं च ब्राह्मणत्वे नासावाविर्भाव्यते । दृष्टाश्च मन्त्रगता अपि विधायका 'वसन्ताय कपिञ्जला नालभते' इत्यादयः ।

तथा ब्राह्मणगता अप्यविधायका यथा 'यस्योभयं हविरार्तिमार्छेदि' त्यादयः । तस्मान्नायमेकान्तः । किञ्च—

प्राप्तत्वाद्यदि चेष्येत मन्त्राणामनुवादता ।
तैरेव विहितं कस्मान्न स्मारयति चोदना ॥

तत्रोभयोरनुवादत्वासम्भवादगृह्यमाणविशेषत्वाच्च द्वयोरपि विधायकत्वम् । अभ्यासाच्च कर्मभेदः स्यात् । बलवत्प्रत्यभिज्ञायाश्चाभ्यासाधिकरण एवोत्तरं भविष्यति । तस्मान्नैवमभिधायकत्वसिद्धिः । येऽप्याहुः—

यस्माद् व्रीह्यादिवन्मन्त्राः करणत्वेन कर्मणाम् ।
ब्राह्मणेन नियुज्यन्ते तद्वत्तेन विधायकाः ॥

तैरपि सामान्यतो दृष्टमात्रं व्यपदिष्टम् । कुतः—

विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते ।
ततो विधास्यति ह्येष नियोगात् स्मारयिष्यति ॥

न हि विनियुक्तेन न विधातव्यमिति किञ्चित् प्रमाणं यदि स्वतो विधि शक्तिरस्त्येव । अथ त्वसौ प्रथममेव नास्ति व्यर्थो विनियोगोपन्यासः । न चोभयकरणे विरोधः । तथा हि—

**स्मारकप्रतिपक्षौ हीति । अनेनापूर्वपक्षोकृतस्याप्यर्थवादत्वस्य पूर्वपक्षविधित्वनिराकरणे कृते स्मारकत्वनिरूपणावसरे तद्विवक्षितत्वान्निराकरणमित्युक्तमिति । यानि विधीयेरन्निति । फलनिमित्तयोरविधेयत्वादप्राप्तसम्बन्धाभिप्रायेण विधिशब्द इति । मन्त्रतस्त्विति । प्रयोगकाले**

विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति ।
[1]'मन्त्रतस्तु विरोधे स्यात्' इत्यत्रैतद्वदिष्यते ॥

ये च वचनेनाविनियुक्तास्ते च त्वत्पक्षे निराकरणहेत्वभावाद् विधायका-प्राप्नुवन्तीत्येतदप्यकारणम् । न चात्र मन्त्रोपन्यासस्य कश्चित्संबन्ध इत्यन्यथा वर्ण्यते । द्विविधमेवाख्यातं गुणप्रधानकर्मत्वेनोक्तम् ।

अथेदानीं प्रस्तूयते किं तावेव द्वौ प्रकारावुतान्योऽप्यस्तीति । तत्र न तृतीयः प्रकारोऽस्तीति मत्वा पूर्वपक्षवादी वदत्यैकार्थ्यमिति, तथा प्राप्तेऽभिधीयते ॥३०॥

अस्ति तृतीयः प्रकारो यदभिधायकत्वं नाम् । पश्य—

येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् ।
विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥

मन्त्रगतानां ब्राह्मणगतानां चाख्यातशब्दानां येषां शब्दान्तरेण विधि शक्तिरपगच्छति तेषामभिधायकत्वम् । तत्र 'न तानशन्ति' इत्यत्र तावद्य-च्छब्दोपहितो विधायकोऽनुवादत्वं प्रार्थयते । तथा 'अहे बुध्निय मन्त्रं मे गोपाय' इत्यामन्त्रणविभक्त्या । दामि गृह्णामीत्युत्तमपुरुषेण । 'यदि सोममपहरेयु' रिति यदि शब्देन ते चैवमादयः प्रायेण मन्त्रेष्विति । मन्त्रा उदाहरणम् । अविधायका मन्त्रा इति च प्रसिद्धिः ।

ब्राह्मणे तु भूयांसः प्रत्यया विधायकास्तेन तद्विधायकमिति सिद्धम् । अल्पे त्वविधायका इति तदिह नोदाहरणम् । विधायकत्वाविधायकत्वे तु तयोर्यथोक्त-मेव कारणमिति न मन्त्रत्वब्राह्मणत्वयोर्व्यापारः ।

**पदार्थानुपस्थापयतां वाक्यानां पाठक्रमः पदार्थक्रमं नियच्छतीत्युक्ते यत्र मन्त्रब्राह्मणपाठयोर्विरोधस्तत्र ब्राह्मणपाठबाधेन[1] मन्त्रतः क्रमनियमं वदन्नविरोधे ब्राह्मणोत्थापितस्मरणक्रमेण पदार्थानुष्ठानमनुमन्यते । बल-वत्त्वं च मन्त्रपाठस्य [2]मन्त्रस्य प्रयोगापन्नेष्वेव पदार्थेषु प्रवृत्तेर्ब्राह्मणस्य तु विधानव्यापृतस्य प्रयोगानुसन्धानमिति विप्रकर्ष इति । ते सर्वत्राभिधा-यका इति । हेतोर्न मन्त्रत्वेन विशेषणमित्यनेन वदति । अन्यत्रासम्भवात्तु मन्त्रविषयत्वमभिमतमेव तस्य । तथा हि न किञ्चिद् वाक्यार्थभूतार्थ-माख्यातं यच्छब्दाद्युपेतं ब्राह्मणे पठ्यते । यस्त्वाख्यातान्तरेण विधायकेनैक-**

१. मी० सू० ५।१।१६ ।　　१. भेदेन आ० मा० ।
२. तस्य प्रयोगकालेऽनुसन्धानमिति आ० मा० ।
अत्र मन्त्रस्येत्यारभ्य व्यापृतस्येति यावत् नास्ति ।

तत्र त्वेतावान् विशेषो[1] दृश्यते । रूपादेव ब्राह्मणगतानां विधित्वनिवृत्ती सत्यां निमित्तादिप्रत्यायनार्थता । न हि तेषां रूपं कर्मसु प्रयोगार्हम् मन्त्रगतानां तु रूपमेवोपलभ्य दामि गृह्णामि निर्वपामीदमिदं च करोम्यग्नीन् विहर बर्हिः स्तृणीहि इदमिदं च कुर्वित्यादिकं शक्यमेतैः कर्म स्मर्तुमिति विनियोगबुद्धिर्भवति । कुतः—

अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः ।
अनन्यसाधनानन्यकार्यैर्मन्त्रैः प्रसाध्यते ॥

न तावदनुष्ठानवेलायामस्मृतः कश्चित् पदार्थः शक्यः कर्तुमित्यवश्यं भाविन्या स्मृत्या योग्यसाधनमात्रापेक्षणाद् यत् किञ्चिद् ब्राह्मणपदार्थानुसन्धानं वा पूर्वपदार्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वात्मीयग्रहणवाक्यानि वोपद्रष्टादि वा साधनं ग्रहीतुमारभ्यते ।

तत्रानन्यप्रयोजनान् मन्त्रान् प्रकरणे पठ्यमानान्सामान्येन किमप्येभिः कर्तव्यमित्येवं प्रयोगवचनेन गृह्यमाणानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तद्रूपा एत इति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते ।

ततश्चोपायान्तराण्यप्रमाणकत्वान्निवर्तन्ते । नियमादृष्टसिद्धिश्च मन्त्रैरेव स्मृत्वा कृतं कर्माभ्युदयकारि भवतीत्यवधार्यते *भाष्यमप्यत्रैव* योजनीयम् ।

नासकृदप्युच्चारणे तत्प्रत्ययादिति न प्राप्तत्वाभिप्रायेणोच्यते । किन्तु यच्छब्दोपबन्धादस्यैव मन्त्राख्यातस्यान्यतः प्राप्तमहं ब्रवीमीत्येवंरूपप्रत्ययात् शतकृत्वोऽपि ह्येवमादिरुच्चार्यमाणः स्वसामर्थ्येनैव नापूर्वप्रत्ययं करोति तत एव पूर्वप्राप्तबुद्ध्युत्पादात् ॥३१॥

**वाक्यतां गतं तस्य तदर्थविशेषणत्वान्न विधित्वाशङ्का नाभिधानेनोपयोग इत्यविचार्यत्वम् । तदेतदुक्तं तत्र त्वेतावान् विशेष इति । विधिशक्त्युपघातहेतुत्वमात्रप्रदर्शनायैव यच्छब्दादीनामल्पे त्वभिधायका इति ब्राह्मणगतानामुपन्यासो न विचार्यत्वेनेति दर्शितम् । तदिह नोदाहृतमिति ।**

---

१. विशेषस्थाने व्यापार इत्यपि पठ्यते । इहाजितासम्मतपाठादरः ।

## [ मन्त्रलक्षणाधिकरणम् ]

यथोक्तेन न्यायेन मन्त्रोदाहरणस्यातन्त्रत्वात्प्रासङ्गिकमिदं पूर्वसूत्रप्रयुक्त मन्त्रशब्दार्थलक्षणाभिधानमिति नावश्यमिदमर्थतोऽधिकरणं पूर्वम्। शक्यं हि वाक्यमात्रमप्युदाहृत्य विचारयितुम्।

*भाष्यकारस्तु सूत्रकारो*च्चारितमन्त्रशब्दादरेण पौर्वापर्यविशेषमाह तच्चोदकेष्विति। तदभिधानं चोदकं प्रयोजकं येषामिति बहुव्रीहिः। अर्थदर्शनमात्रार्थं तु षष्ठीकथनं *भाष्ये*। अध्येतृवृद्धव्यवहारसिद्धं चेदं प्रायिकचिह्नयुक्तं लक्षणं लाघवार्थमुक्तम्।

धरणिगतानेकद्रव्यप्रत्येकनिरीक्षणे पुनः पुनः पृष्टं कुटिलीक्रियत इति तत्सामान्येन पृष्टाकोटाभिधानम्। श्लोकश्चैवं द्रष्टव्यः—

ऋषयोऽपि हि लक्ष्याणां नान्तं यान्ति पृथक्त्वशः।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः॥
वृत्तौ लक्षणमेतेषामस्यन्तत्वान्तरूपता।
आशिषः स्तुतिसंख्ये च प्रलप्तं परिदेवितम्॥
प्रैषान्वेषणपृष्टाख्यानानुषङ्गप्रयोगिताः।
सामर्थ्यं चेति मन्त्राणां विस्तरः प्रायिको मतः॥

डुलेरिवेति। डुलिः—कच्छपः। प्रतिपुनातुंशब्दमच्छिद्रेण पवित्रेणेत्यनुषङ्गः। सामर्थ्यं—अभिधानशक्तिः। ये मां दुग्धवन्तस्तं एव निराकृतवन्त इति

वेदप्रयुक्तेति [?]। **यद्यपि चोदनया योऽर्थो लक्ष्यते तस्य वेदवाक्यार्थस्य निरूपणं लक्षणार्थस्तथापि तत्प्रसङ्गेन वेदप्रयुक्तपदार्थस्यापि धर्मप्रमित्युपयोगिनो निरूपणं क्रियत इत्यनेनोक्तमिति। मन्त्रशब्दादरेणेति। न्यायनिरूपणेऽन[1]पेक्षणेऽपि मन्त्रशब्देन व्यवहार उत्तरमधिकरणमपेक्षत इति। अर्थप्रदर्शनमात्रार्थमिति। यस्य ह्यभिधानं कार्यं तस्यैवाभिधानं प्रयोजकं भवतीति वृद्धव्यवहारसिद्धमिति। तेन व्यवहारोपलक्षणत्वात् तस्य प्रायिकत्वमदूषणमिति। कुटिलीक्रियत इति। अर्थप्रदर्शनार्थमिदम्। विग्रहवाक्यं तु पृष्टस्याकोटो यस्मिन्। श्लोकश्चैवमिति। पदार्थमात्र[2]विषयः श्लोकः प्रकृतिविषय एवं द्रष्टव्यो लक्ष्याणामिति। डुलिः कच्छप इति। तेनात्यन्तासमानेनोपमानं [3]प्रलपितमिति। तद् ब्राह्मणकान्येतानि यद्**

१. °णेऽनपेक्षोऽपि आ० मा०।　　२. °मात्रविषयः आ० मा०।
३. प्रक्लृप्तमिति आ० मा०।

धेन्वाः परिदेवितम् । अमुतः सोममाहर इति सौपर्णोपाख्याने विनतया गरुत्मानमृतार्थं प्रेषितः । कर्णवन्तीं सूर्मिम् । सूर्मिः—स्थूणा ॥३२॥

## [ ब्राह्मणलक्षणाधिकरणम् ]

परिशेषसिद्धत्वाद् ब्राह्मणलक्षणमवचनीयमिति । सूत्रमिदमनारभ्यमिति प्रतिभाति । तत्र शेषशब्दप्रयोगाल्लक्षणानभिधानाच्च सूत्रव्याख्यानमेवेदमिति द्रष्टव्यम् ।

किमर्थं पुनः सूत्रमारभ्यते । नारभ्यते, यदि मन्त्रब्राह्मणात्मक एव वेद इति सर्वेषां प्रसिद्धं भवेत् । येषां त्वप्रसिद्धं तेषां तृतीयादिप्रकारनिराकरणार्थं द्वैराश्यमेव वेदस्येति प्रतिपादयितुमाह—शेषे ब्राह्मणशब्द [मी० सू० २।१।३३।] इति । एकपुरुषकर्तृकमुपाख्यानं परकृतिः, बहुकर्तृकं पुराकल्पः । यत्रान्यथार्थः प्रतिभातः पौर्वापर्यालोचनेन व्यवधार्यान्यथा कल्प्यते सा व्यवधारणकल्पना । तद् यथा प्रतिगृह्णीयादिति श्रुतं प्रतिग्राहयेदिति कल्पयिष्यते विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्दः ॥३३॥

## [ऊहादीनाममन्त्रताधिकरणम्]

'सूर्याय जुष्टं निर्वपामि'-इत्यूहः, तथा यत्र यजमानस्यार्षेयं व्रियते स प्रवरः । यच्च यजमानतत्पुत्रादीनां नामग्रहणं तन्नामधेयं, यथा सुब्रह्मण्यायां देवदत्तो यजत इत्यादि । तेषामपि 'तच्चोदकेषु' [मी० सू० २।१।३२] इत्यस्माल्लक्षणान् मन्त्रमध्यपाताच्च मन्त्रत्वप्राप्तावुच्यते—

स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् ।
ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम् ॥

किं पुनरेकस्मिन् पद ऊह्यमाने समस्तस्यैवामन्त्रत्वमूहितपदमात्रस्यैव वेति । समस्तस्यैवेति प्राप्तम् । कुतः—

[1]प्रमाणकानीतराणीत्येवमादि वेदप्रयोगगतस्य ब्राह्मणपदस्य मन्त्रप्रयोगेणार्थनिरूपणार्थं सूत्रं शेषे ब्राह्मणशब्द [मी० सू० २।१।३३] इति ।

तत्र *भाष्यं* तत्प्रत्याख्यानार्थमिव प्रकाशमानं तादर्थ्यनिषेधेन तद्व्याख्यानायेति निरूपयति—शेषशब्दप्रयोगादिति । *सूत्रकारेण* यथा *भाष्य*मेव परिशेषसिद्धिराश्रिता न तु स्वरूपं लक्षितमतः सम्प्रतिपत्तेः सूत्रव्याख्यानार्थमेवेदं *भाष्य*मिति । आर्षेययजमानादिपदानां वचनेन मन्त्रनिक्षेप उक्तो, येन विचार्यते ।

तत् पुत्रादीति । येनासौ जनितस्तत्पुत्र इति नामग्रहणम् । अथ वा स

१. ब्राह्मणकानीतराणि पू० मा० ।

स्वरवर्णानुपूर्व्यादिविशिष्टे हि प्रयुज्यते ।
मन्त्रशब्दस्ततोऽन्यत्वे न तस्यार्थः प्रतीयते ॥

संप्रदायकालावगतस्वरूपान्यत्वं चेत् केनचिदप्यंशेन जातं न शक्यते मन्त्रत्वं प्रत्यभिज्ञातुम् ।

अथैकदेशेऽपि तत्सद्भावाभ्युपगमः ततः सर्वत्रैव मन्त्रपदाविशेषान् मन्त्रत्वप्रसङ्गः । तस्मादेकवर्णापायेऽपि मन्त्रत्वाभावात्समस्ततत्कार्यनिवृत्तिः । अतश्च यथैव तद्विनाशे सर्वावयववर्तिनि प्रायश्चित्ताभाव एवं मन्त्रच्छन्दोविषयत्वेन यावन्तः शब्दविशेषाः स्मर्यन्ते तैर्न भवितव्यमित्येकपदतदवयवोहे तन्मन्त्रगतसर्वच्छान्दसोऽपोद्धारेण लौकिकशब्दप्रयोगः कर्तव्य इति । अत्र ब्रूमः तावन्मात्रमेवामन्त्र इति । कुतः—

आकृतीनामभिव्यक्तिर्या कथञ्चिन्निरूपिता ।
नासाववयवाधिक्यविनाशेषु विनश्यति ॥

न हि गोर्गडुनि जाते विषाणे वा भग्ने गोत्वं तिरोधीयते, तदभिव्यक्तिसमर्थावयवान्तरसद्भावात्, कियत्यपि संस्थाने ध्रियमाणे सर्वा विज्ञायन्ते । सा चेयं मन्त्राकृतिविशिष्टस्वरवर्णानुपूर्व्याद्यभिव्यक्ता न किञ्चिद् विकारदर्शने नश्यतीति प्रत्यक्षमुपलभामहे । तथा हि—

यत्र वर्णविकारो वा वर्णलोपोऽपि वा स्मृतः ।
स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते ॥

यत्र वचनाद् वर्णलोपं विकारं वा कृत्वा प्रयोगः 'ऐरं कृत्वोद्गेयम्' इत्यादौ, यत्र च स्वाध्यायकादृष्टत्रैस्वर्यादिपरित्यागेनैकश्रुत्यं नियुज्यते न तत्र कस्यचिन् मन्त्रबुद्धिरपैति । स्यादेतत् वचनसामर्थ्यादिह नापैतीति ।

तदयुक्तम्, वचनेन हि प्रयोक्तव्यमेतदुच्यते न मन्त्रत्वं न नश्यतीति । न हि वचनविनियुक्तानां व्रीह्यादीनां मन्त्रत्वं भवति । अतश्चामन्त्राणामेव सतां वचनाद् विनियोग इत्यापद्यते ।

पुत्रो यस्य तस्य तत्पुत्रस्य । क्वचित्तु पित्रादीति पठ्यत इति । अतश्च यथैवेति । मन्त्रविनाशप्रायश्चित्ताभावं *भाष्योक्तं* दृष्टान्तीकृत्य—"हृग्रहोर्भश्छन्दसि [ पा० सू० ? ] इत्यादीनामपि शब्दविशेषाणामभावमाहेति । प्रत्यभिज्ञासिद्धमेवाविनाशं व्यवहारेण द्रढयति—तथा हीति ।

न चार्हति भवितुममन्त्रत्वं, मन्त्रत्वप्रत्यभिज्ञानात्। अतश्चात्रापि काम मिरापदादीनामेवामन्त्रत्वं भवतु न सकलस्य वाक्यस्य।

न च तेषामपि समस्तवेदालोचनेन मन्त्रत्वनिरूपणादिह गिरापदवान्मन्त्र इहेरापदवानिह त्रैस्वर्यवानिहैकश्रुतिमानिति ह्यादित एवावधार्यते। यद्येवमूहादीनामपि मन्त्रत्वप्रसङ्गः। तत्रापि हि प्रकृतिविकृत्यालोचनेन शक्यमेवं निरूपयितुम्। इहाग्निपदवान्निर्वापमन्त्र इह सूर्यादिपदवानिति नैतत्समानम्। कुतः—

यत्र वैदिकमन्यत्वं तत्र मन्त्रत्वमिष्यते।
न्यायेन कल्प्यमाने तु न शक्यं तन्निरूपणम्॥

वैदिकं ह्यालोच्यैवमवधारणा भवति। इहेदृशो मन्त्र इहेदृश इति। सूर्यादिपदप्रयोगस्तु कार्यवशेन न्यायात् कल्प्यते, न च मन्त्रत्वं न्यायगम्यमिति वैषम्यम्।

ननु चातिदेशोऽपि वेदप्रकार एवेति सर्वमूहादिकं वैदिकम्, इतरथा ह्यप्रमाणकमेव स्यात्। न ह्यङ्गाङ्गिभावः प्रत्यक्षानुमानादिगम्यः। तस्मात्सूर्येरापदयोरविशेष इति। अत्रोच्यते,

सत्यमूहस्यापि नावैदिकत्वम्। अत एव "अनाम्नातेष्वमन्त्रत्वम्" [मी० सू० २।१।३४] इत्युच्यते। वेदभागो हि कश्चित्प्रत्यक्षः श्रूयते, कश्चिदनुमानादिगम्यः। प्रत्यक्षश्रुतश्चाम्नात इत्युच्यते। तत्र यथेरापदादीनां विनियोगः श्रूयते नैवं सूर्यपदादीनाम्।

ननु 'सौर्यं चरुम्' इत्येतदेव श्रुतिसमवायित्वाद्देवतायाः सूर्यपदस्य विनियोजकं श्रूयते। नैतन्मन्त्रे सूर्यपदस्य प्रक्षेपं ब्रवीति। हविषस्त्यागकालमात्रे तदुच्चारणाभिधानात्। यस्तु मन्त्रेषु तत्प्रक्षेपः सोऽतिदेशकृतो भविष्यति। न चातिदेशवचनन्यायलभ्यत्वादेवाम्नायते। तस्मादनाम्नातविनियोजकत्वादमन्त्रत्वं सूर्यपदादीनाम्।

आदित एवेति। आम्नानवेलायां तत्स्वरूपाम्नानकारणमपश्यन् विकृतिवेदप्रमाणतामूहस्येतर आह— यद्येवमिति। यत्र वैदिकमन्यत्वमिति। अत्राप्याम्नानलक्षणत्वान्मन्त्रस्य वेदाम्नानगम्यत्वादित्यर्थः। वैदिकं ह्यालोच्येति। पाठोपनीतं रूपम्। परस्तु प्रमेयभ्रान्त्या चोदयति—ननु चातिदेशोऽपीति। तत्र यथैवेरापदादीनामिति। विनियोज्यस्वरूपाम्नानमपि दर्शितम्। वाचकेन शब्दान्तरेणोपादानासम्भवात्।

नन्वेवं सति प्रवरनामधेययोः प्रत्यक्षो ादेशान् मन्त्रत्वप्रसङ्गः । स्यादेवं यदि तत्स्वरूपमाम्नायेत, वचनार्थं तु ज्ञात्वानाम्नातयोरेव प्रवरनाम्नोः प्रयोगान्न मन्त्रत्वनिरूपणायामन्तर्गतिः । एवं तर्हि यत्रापि सर्वनामयुक्तमन्त्राम्नाने सति तस्य स्थानेऽन्यपदप्रक्षेपः क्रियते तत्राप्यमन्त्रता स्यात् । तथा नामेति केचित् ।

अथ वा विशेषाणामानन्त्यादयुगपत्कालत्वाच्चाम्नातुमशक्तेः स्वरूपस्य सर्वनामप्रकारेणाम्नानमस्त्येवेत्यशून्यस्थानत्वान्मन्त्रस्य शक्यमेवं निरूपणं कर्तुम्। यदत्र पदं निवेक्ष्यते तद्वानयं मन्त्र इति । इतरथा हि सर्वनाम्नामप्रयोगार्हत्वाद् यदि विशेषाम्नानमेवैतत्तेनोपायेनेति न गृह्यते, ततस्तदंशन्यूनत्वान्मन्त्रस्वरूपस्य व्यर्थमेव सर्वनामाम्नानं स्यात् । प्रवरनामधेयवदेव तु विधानात्तदवकाशस्थपद-प्रयोगः कल्प्यते । तस्मादेवमादीन्याम्नातान्येवेति मन्त्रधर्मैः संबध्येरन्, न तु प्रवरादीनां मन्त्रपाठकाले कश्चिदपि संस्पर्शः ।

न च ब्राह्मणेन रूपं दर्शितं येन प्रवचनलक्षणत्वान्मन्त्रत्वाध्यवसानं भवेत् । अतश्च विकृतिष्वभिधानार्षचोदकाभ्यां सकले मन्त्रे प्रापिते यावन्मात्रमर्थाभावाद्-व्यावर्त्यान्यत् प्रक्षिप्यते तावन्मात्रमेव लौकिकम् । अवशिष्टं तु तथा प्राप्तमेव

तदेतद[1]पश्यंश्चोदयिष्यति — नन्वेवं सति प्रवरनामधेययोरपीति । नेतन्मन्त्र इति । नहि यत्र तत्राम्नाने मन्त्रत्वं; किन्तु मन्त्रसंज्ञिता मध्यस्थ इति । वचनार्थं तु ज्ञात्वेति । प्रवरयजमानादीन् कीर्तयेदित्यादेरेवं तर्हीति । स्वरूपमाम्नानसामान्येन चोद्यम् ।

अथ वेति । पादाम्नानसमन्वितस्य मन्त्रत्वम् । तेन यदि सर्वमाम्नानं तत्स्थानशब्दान्तरसमर्पकं तदा तेषां मन्त्रत्वम् । अथाम्नातस्य सर्वनाम्न-स्तेषां प्रयोगे प्रामाण्यं न स्यात्तत्र न तावत्सर्वनामविधायकं नाप्य-भिधायकं तेषां किन्तु तत्प्रकाश्यं, तेनैतत्सर्वनाम स्वयमप्रयोगार्हं स्वाभिधेय-विषयान् प्रयोगार्हान् विशेषशब्दान् [2]उपक्षिपति । न च तेषामैरवद् विधा-यकोऽस्ति । अतः सर्वनामाम्नानमेवाविवक्षिततत्स्वरूपं तदर्थविषयान् विशेषशब्दान्मन्त्रविषयवाक्यनिवेशिनो दर्शयतीत्याम्नानलक्षणत्वान्मन्त्रत्वं तेषाम् । तत्र सति मन्त्रत्वे किमिति न तेषां स्वरूपेणाम्नानमित्यत्रोप-पत्ति विशेषाणामानन्त्यादिति । सर्वनामाश्रितमेवाम्नानं तेषामित्यस्य फलेन निदर्शनम् अशून्यस्थानत्वादिति । सर्वनाम्ना तस्यावकाशस्य पूर-

१. °दवश्यं चोदयिष्यति आ० मा० । २. लक्षयति पू० मा० ।

क्रत्वाकाङ्क्षितप्रत्यभिज्ञायमानमन्त्रत्वं चेति न प्रायश्चित्तच्छान्दसप्रयोगैर्वर्जनीयमिति सिद्धम् ॥३४॥

## [ऋग्लक्षणाधिकरणम्।]

प्रसक्तानुप्रसक्तेति पतितमृगादिलक्षणाभिधानम्। शब्दार्थस्य वृद्धव्यवहारगम्यत्वात् कृतेऽपि तल्लक्षणे तन्मूलमभियुक्तोपदेशमेव दर्शयति। क्रियापदानुपादानात् अग्निः पूर्वेभिरित्यपर्यवसितेऽर्थे वृत्तवशेन पादव्यवस्था। ननु च 'अग्निमीले' इत्यपि समस्ताया ऋच एवार्थवत्त्वान्नैव प्रतिपादमर्थः पर्यवस्यतीति न वाच्यम् **अर्थवशेन पादव्यवस्था'** [मी० सू० २।१।३५] इति।

कथं न वाच्यम् 'अग्निमीले पुरोहित'मिति तावत्प्रत्यक्षं समाप्तोऽर्थो दृश्यते। परयोः पादयोरसमाप्त इति चेन्न। आख्यातानुषङ्गेण समाप्तेः सिद्धत्वात्। तस्मात्साधूक्तमिहार्थवशेनेति। एतस्य तु प्रदर्शनार्थत्वान्न वृत्तवशव्यावृत्तिरित्यनिषिद्धमृक्त्वम् ॥३५॥

## [सामलक्षणाधिकरणम्]

तेषामित्यनुवर्तते। अत्रापि स एवाभियुक्तोपदेशोपन्यासः। प्राथम्यात्, यथाम्लं दधीति। पूर्वत्रैव वाच्यं सदनादरादिहोदाहृतम्। अथ वा यथानेकधर्मसमाहारे सति दधिगुडयो रसविशेषमात्रमम्लमधुरशब्दावुपाददति। तथा सामशब्दो गीतिमात्रमित्यत्रोदाहरणम्।

**यितुमशक्यत्वात् तैरेव पूर्णतावगम इति।** क्रत्वाकाङ्क्षितेति। **प्रयोजनमिदं क्रतोर्मन्त्राङ्गत्वेन ज्ञातस्तस्यैवमबाधो भविष्यतीति।**

प्रसक्तानुप्रसक्तेति। **एतद्वै यज्ञस्य सम्पन्नं यत्कर्म क्रियमाणमृचाभिवदतीत्यादि वैदिकप्रयोगगतमन्त्रभेदविषयस्वर्गादिपदार्थनिरूपणं प्रसङ्गविचारितमन्त्रानुप्रसंगापतितं क्रियत इति।** आख्यातानुषङ्गेणेति। **नन्वेवमाख्यातानुवृत्तेस्त्रयो मन्त्राः स्युः। नात्रावृत्त्या सम्बन्धोऽभिमतो यद्येवमेकार्थत्वात् कथं पूर्वस्य समाप्तिः। तदुच्यते, नात्र वाक्यार्थसमाप्तिरभिमता, मन्त्र[1]वाक्यैकदेशोपलक्षणत्वात्। किन्तु तद् योग्यता सापि समाप्तेरुपलक्षणं नोपक्रमस्य पूर्वसमाप्त्यैव तत्सिद्धेः। तेन द्वितीयपादः पूर्वपादाख्यातान्वयाय तस्य समाप्तत्वात्ततोऽवच्छिन्नः सोऽपि स्वयमुत्तरस्मादाख्यातानुषङ्गेणार्थसमाप्त्यवच्छिन्नो भवतीत्युच्यते।**

1. मन्त्रेत्यारभ्य तद्योग्यतेति यावत् आ० मा० न पठति।

ननु च प्रत्यक्षगम्यत्वाद् रसविशेषस्याभियुक्तोपदेशोऽनुवादत्वान्नैव प्रमाणम् । नैष दोषः । प्रत्यक्षमेवात्र इतिकरणावच्छिन्नं निदर्शनम् । एतदुक्तं भवति । यथाम्लं दधि मधुरो गुड इत्येतद् विज्ञानं प्रमाणमेवमभियुक्तोपदेश इति । गीतेर्विशेषणत्वात्पूर्वतरप्रत्यायने सत्याकृतिवदभिधेयत्वं निर्णेतव्यम् । आह च—

एकखण्डेन शब्देन विशिष्टो यत्र गम्यते ।
विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते ॥३६॥

## [यजुर्लक्षणाधिकरणम्]

**शेषे ब्राह्मणशब्द** [मी० सू० २।१।३३] इतिवत्समस्तं व्याख्येयम् ॥३७॥

## [ निगदाधिकरणम् ]

**शेषे यजुःशब्द** [मी० सू० २।१।३७] इत्येतद् व्यावर्तनार्थो वाशब्दः । चतुर्थं मन्त्रजातं निगदः स्याद् धर्मान्यत्वात् । यदि तावदुच्चैर्निगदेनेति विधिस्ततो यजुर्धर्मबाधो मा भूदित्यर्थान्तिरत्वम् । अथानुवादः स नैव प्राप्नोति व्यतिरेकेण विनेति भेदः ।

'अहे बुध्निय मन्त्रं मे गोपाय' इति त्रिष्वेव मन्त्रत्वस्योपसंहारात् । वेदे च मन्त्रसामानाधिकरण्येन निगदशब्दप्रयोगाद् यजुष्ट्वापरित्यागेनैव च धर्मविशेषव्यपदेशभेदसिद्धेः परिशेषसिद्धयजुर्लक्षणयोगाच्च यजूंष्येव निगदाः ॥४०॥

**प्राथम्याद् यथाम्लं दधीति । पूर्वोपपादितेन ह्यभियुक्तोपदेशप्रामाण्येन पश्चाद् व्यवहारो न्याय्यो नोपपादयिष्यमाणेन तथापि सर्वथार्थसिद्धेः [1]क्रमेणादरादिह तदुपपादनायाम्लं दधीत्युदाहृतम् । न तच्चोदकेषु मन्त्राख्ये [ मी० सू० २।१।३२ ] त्यत्रेति शेषे ब्राह्मणशब्दवत् [ मी० सू० २।१।३३ ] इति । अत्रापि सूत्रप्रत्याख्यानतां *भाष्यस्य* निरस्य तद्व्याख्यानता वक्तव्या । प्रयोजनं सूत्रारम्भस्य तदेव वक्तव्यमिति । वेदे च मन्त्रसामानाधिकरण्येनेति । वेदे चायं प्रयोगः । अतोऽसम्भवाद् गौणभ्रान्त्यादिमूलत्वान्मन्त्रैरेव, नामन्त्रैरिति । अथ वा वेदे मन्त्रसामानाधिकरण्येनगादिपदप्रयोगदर्शनात्तन्मूल एवगादिषु अध्येतृणां मन्त्रपदप्रयोगो नासौ तदपेक्षश्चतुर्थे पदजाते सम्भवतीति ।**

---

१. क्रमेऽनादरात् आ० मा० ।

न्यायप्राप्तोच्चैर्धर्मानुवादत्वज्ञानान्न विधानादिति व्याख्यातम् । यं त्वेतेऽर्थं वदन्ति तमुपांशुत्वेन शक्नुयुर्वक्तुमिति वचनादित्युच्यते ।।४१।।

अस्ति च 'अग्नीदग्नीन् विहर' इत्यादिवचनेनार्थोऽन्यथानुष्ठानानुपपत्तेरिति धर्मविशेषप्राप्तिः । तथा च निगदशब्दावयवव्युत्पत्तिसिद्धिः । वाचनिकमपि चोपांशुत्वमनुपकारत्वेनानङ्गत्वान्निगदव्यतिरिक्तयजुर्विषयं विज्ञायते ।।४२।।

ब्राह्मणपरिव्राजकवद् गुणेन व्यपदेशभेदः ।।४३।।

अतिप्रसङ्गद्वारेण गुणस्य व्यपदेशनिमित्ततां व्यभिचारयति ।।४४।।

न तावदतिप्रसङ्गोऽस्ति निगदं निन्दित्वा ऋचो विधानात् । न हि तमेव निन्दित्वा तस्यैव विधिरवकल्पते । न च व्यभिचारित्वम् । गदतिवशेन यजुष्ट्वे सति धर्मविशेषस्य व्यपदेशभेदनिमित्तत्वात् ।।४५।।

## [यजुःपरिमाणाधिकरणम्]

केचिदेतत् सूत्रं वाक्यलक्षणपरत्वेन व्याचक्षते । तत्रापि किल लौकिकवैदिकवाक्यलक्षणसंभवे हेतुप्रसिद्धिवशेन लौकिकानामेवैतल्लक्षणम् । कुतः—

अन्यतोऽवगतेऽर्थे हि लोके वाक्यं प्रवर्तते ।
तत्रैकार्थत्वविज्ञानात् सुखबोधैकवाक्यता ।।

लौकिकानां हि वाक्यानां प्रमाणान्तरेणार्थस्तदेकत्वं चावधार्यते । तत्र प्रसिद्धेन हेतुना शक्यमेकवाक्यत्वमवगन्तुम् । वैदिकानां पुनरनन्यप्रमाणगम्यत्वात्, प्राग्वाक्यात्तदेकत्वाज्ञानादज्ञातेऽर्थे तदेकत्वसिद्धिर्नास्तीत्येतल्लक्षणानुपपत्तेरर्थापत्त्या विपरीतं लक्षणं द्रष्टव्यम् ।

वाक्यैकत्वादर्थैकत्वमिति । यथैव हि धर्मिणा वाक्येन धर्म्यन्तरमर्थः प्रतिपाद्यते तथैकवाक्यधर्मेणैकत्वेनार्थैकत्वम् । आह च—

नित्यवाक्याधिगम्यत्वाद् यथावाक्यं प्रवर्तते ।
वेदार्थस्तदसिद्धेस्तु न वाक्यस्यार्थवश्यता ।।

अत्राभिधीयते । वेदव्याख्यानप्रवृत्तस्य *जैमिनेः* कः प्रसङ्गो लौकिकवाक्यलक्षणाभिधाने । वैदिकवाक्यलक्षणस्यापि भेदलक्षणे कः प्रस्तावः । किमर्थं

प्रमाणलक्षण एव नोक्तम् । एकशब्दश्च न वक्तव्यः, अर्थैकत्वाद् वाक्यमित्येतावतैव सिद्धत्वात् । कथं च मन्त्राधिकारे तदसंबद्धोऽर्थोऽभिधीयते । *भाष्यकृतश्च* प्रश्लिष्टपठितेषु यजुःष्वित्युपन्यासः प्रमाणवानपि विना कारणेनातिक्रान्तः । किञ्च——

यजुर्भेदं च मुक्त्वैतद् वाक्यैकत्वस्य लक्षणम् ।
मन्त्रब्राह्मणलोकेषु वक्तव्यं क्वोपयुज्यते ॥

ऋक्सामयोस्तावत्परिमाणं प्रयोगसमर्थं प्रसिद्धमिति न कश्चिद् वाक्यलक्षणादिकवाक्यतालक्षणाद्वोपकारो भवति ।

तथा ब्राह्मणेऽग्निहोत्रादिवाक्यैः साध्यसाधनेतिकर्तव्यतावत्यां भावनायां नियुक्तेषु पुरुषेष्वेकानेकवाक्यज्ञानं क्वोपयुज्यते । नन्वयमुपयोग एकवाक्यतालक्षणज्ञो वाक्यभेदं परिहरिष्यति । नायमुपयोगः । कुतः—

वाक्यभेदो ह्यसामर्थ्यं शब्दावृत्त्यादिदोषतः ।
एकनानात्वविज्ञाननिरपेक्षोऽवधार्यते ॥

एकशब्दश्चेति । वाक्यत्वाश्रयो ह्येकं वाक्यम् । अतो वाक्यमित्येव सिद्धम् । अस्मत्पक्षे तु समाप्तेरेव विवक्षितत्वादेकमिति वक्तव्यम् । एतावदेकं वाक्यं नासमाप्तं, नापि प्रयोगे [1]तस्मात् समाप्तमिति ।

एवमसङ्गतिमुक्त्वा निष्प्रयोजनतामाह—यजुर्भेदं हि मुक्त्वैतदिति । एकवाक्यतालक्षणज्ञ इति । अन्यथा भेदाभेदयोरपरिचयान्न वाक्यभेदापादिकां वचनव्यक्तिं त्यक्तुं क्षमः स्यादिति । वाक्यभेदो ह्यसामर्थ्यमिति । नहि वाक्यभेदत्वमेव वाक्यभेदस्य दूषणम् । किन्तु सकृदुच्चारितस्यासकृदुच्चारणगम्येऽर्थे [2]शक्त्यभावः । प्रतीतस्य वा सम्बन्धस्य त्यागः । यथा वाजपेयगुणविधावाख्यातपदावृत्तिः । ग्रहैकत्वविवक्षायां पदैकदेशग्रहप्रातिपदिकावृत्तिः हविरार्त्युभयत्वेन विशेषणे हविरार्तिमार्च्छेदिति पदसमूहावृत्तिः । विध्यावृत्तिस्तु सर्वसाधारणी नोपन्यस्यते । प्रतीतसम्बन्धपरित्याग आरुण्यस्य कृत्स्नस्य प्रकरणनिवेशे तदेतदुभयमेकवाक्यतालक्षणानभिज्ञेनापि सुज्ञानत्वात् परिहर्तुं शक्यम् । अपि च कदाचिद् वैदिकानामपीति । पूर्वमर्थापत्त्युपस्थापनमेव नास्ति अनुपपत्त्यभावादित्युक्तम् । नह्येतल्लौकिकेत्यादि । सम्प्रति तूत्थापिताऽपि अर्थापत्तिरनैकान्तिकत्वान्नाभिमतं लक्षणम् नियोगतोऽवगमयतीत्युच्यत इति ।

१. प्रागेतस्मादिति पू० मा० ।　　२. शक्त्यसम्भवः आ० मा० ।

पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकस्तद्विभागलक्षणो वा वाक्यैकत्वनानात्वज्ञानैर्निरपेक्षैरेव दोषत्वेनावधार्यते । विभागलक्षणे गम्यमानसम्बन्धपरित्यागोऽनेकादृष्टकल्पना च दोषः इतरत्रावृत्तेरवेदत्वादप्रामाण्यमिति नैकवाक्यलक्षणेनार्थः । पौरुषेयवाक्ये तु लक्षणनिरपेक्षस्य लोकस्य व्यवहारसिद्धेरत्यन्तानौपयिकत्वम् ।

यदि चार्थैकत्वेन वाक्यैकत्वमवधार्यते वाक्यस्यार्थप्रत्यायनार्थत्वात्तत्स्वरूपैकत्वज्ञानोत्तरकालभाविना किं वाक्यैकत्वज्ञानेन । वक्तॄणां च परप्रत्यायनार्थो वाक्यप्रयोग इति नात्मार्थं लक्षणज्ञानापेक्षा । श्रोतॄणां पुनरत्यन्तानवगतेऽर्थे प्रवर्तमानं पुरुषवाक्यमपि न वेदवाक्याद् भिद्यते । अवगतार्थं त्वनुवादत्वादनादृत्यमेवेति नैकानेकज्ञानमपेक्ष्यते ।

किमर्थं च वैदिकानां लक्षणं नोक्तम् । यदि त्वर्थापत्त्योक्तमेवेति । तन्न, श्रुत्या तल्लक्षणमभिधायार्थापत्त्या लौकिकवाक्यसिद्धिराश्रयितव्या । न चार्थापत्तिः संभवति । न ह्येतल्लौकिकवाक्यलक्षणज्ञानमीदृशेन वैदिकवाक्यलक्षणज्ञानेन विना नोपपद्यते ।

न चैतस्यापि वाक्यलक्षणता सिद्धा, वाक्यैकत्ववशेनार्थैकत्वलक्षणार्थापत्त्युपन्यासात् । अपि च कदाचिद्वैदिकवाक्यानामप्येतल्लक्षणम् । अत्यन्तविप्रकृष्टं वा किञ्चिद्भवेदित्याशङ्कितत्वान्न नियोगतोऽर्थापत्तिः । न च परिसंख्या, सामान्यविशेषभेदानुपादानात् ।

यदि हि सामान्येनेदं लक्षणं क्वचिदभिधाय पुनः केवलपौरुषेयसंबद्धमुच्येत ततः परिसंख्यावशेन वैदिकानामिदं तावन्न भवतीत्येतावन्मात्रं गम्येत । न तु लक्षणविशेषोऽनेकोपप्लवात् । एवमपि हि विपर्ययकल्पनं संभवति, अर्थानेकत्वादेकं वाक्यं निराकाङ्क्षं चेद्विभागे स्यादिति । अथ वार्थैकत्वान्नानावाक्यत्वमिति । तस्मादकल्पनेयम् ।

यत्तु न प्राग् वाक्यादिति । एतावदिदं वाक्यमिति यावन्न निरूप्यत इत्यर्थः ।

किञ्च—

कथं चार्थानपेक्षत्वे वाक्यैकत्वं प्रसिध्यति ।
न हि वर्णस्वरूपेण ज्ञातेनैतन्निरूप्यते ॥

वाक्यैकत्वाच्चार्थैकत्वेऽवधार्यमाणेऽवश्यमर्थनिरपेक्षं वाक्यैकत्वमवगन्तव्यम् । न च तस्यावधित्वेन किञ्चित्पश्यामो वर्णसहस्रं वा । तथा हि—

अज्ञातार्थेषु वर्णेषु बहुवाक्यैकवर्तिषु ।
न कदाचिन्मतिर्दृष्टा वाक्येयत्तावधारणे ॥
तस्मात्पदेषु यावत्सु श्रूयमाणेषु दृश्यते ।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता ॥

लोकमन्त्रब्राह्मणेष्वव्यभिचार्येतदेव वाक्यलक्षणमिति स्थितम् । यत्तु न प्राग्वाक्यादर्थतदेकत्वावधारणमस्तीति । अत्र ब्रूमः—

पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते ।
लोकसिद्धैर्न तत्रास्ति वाक्यैकत्वनिमित्तता ॥

यदि हि वाक्यं पदवद्वाचकं भवेत्ततस्तदेकत्वानेकत्वानुवर्तिता वाक्यार्थस्याभ्युपगम्येत कदाचित् ।

यदा तु पृथग्भूतैरेव पदैरितरेतरनिरपेक्षैः स्वेषु पदार्थेषूक्तेषु तत्संसर्गादेव पदव्यापारानपेक्षो वाक्यार्थप्रत्ययो भवति, तद्वशेन च तावन्ति पदान्येकं वाक्य मित्यवधार्यते, न तदा वाक्यतदेकत्वयोर्व्यापारं पश्यामः । तस्मादविरोधः ।

भावनैव च वाक्यार्थः स्वकारकविशेषिता ।
तस्याश्च ज्ञायते नित्यं भेदशब्दान्तरादिभिः ॥

[1]नन्वस्ति परस्परान्वये पदार्थानां सामर्थ्यं न तु [2]विशेष्यस्य वाक्यार्थात्मनोर्भेदाभेदयोः । [3]अतस्तत्र वाक्यभेदाभेदयोर्निमित्तत्वं स्यादत आह—भावनैव च वाक्यार्थ इति ।

नन्वेवमग्निहोत्रवाक्याद् दध्ना जुहोतीति वाक्यान्तरं न स्यात् । उच्यते, अस्त्येवात्राप्युत्पत्तिवाक्यावगताद् होममात्रविषयाद् [4]व्यापाररूपादधिका दध्नो व्यापृतिर्यस्य वाक्यस्य विधेयतयार्थः । सा च पूर्वभावना प्रचयात्मिका कर्मभेदेन [5]न गम्यते । अथ वा यत्र कारकं वाक्यार्थस्तत्र स्फुटत्वाद् भेदस्य न किञ्चिद् वक्तव्यम् । प्रायेणैव तु भावनैव वाक्यार्थस्तस्याः कथं भेद इत्याशङ्क्येदमुच्यते—तस्याश्चेति ।

---

१. तन्वस्तु आ० मा० ।  २. विशेषस्य आ० मा० ।
३. अतस्तत्रेत्यारभ्य भेदयोरिति यावत् आ० मा० इत्यत्र नास्ति ।
४. व्यापार रूपादिति नास्ति आ० मा० ।  ५. नेति नास्ति आ० मा० ।

यस्मिन्पदसमूहे शब्दान्तरादिभिर्न भावनान्तरं प्रतिपाद्यते तस्यैकवाक्यत्वं भावनान्तरापेक्षया तु नानात्वम्। तच्चैतदुभयमप्यन्यत एव ज्ञायत इत्यनिमित्तं वाक्यैकत्वमर्थैकत्वस्य। तस्माद् यथाभाष्यमेव व्याख्यातव्यम्।

भेदलक्षणे मन्त्रप्रस्तावे च तद्भेदस्तावदृग्यजुःसामात्मकोऽभिहितः। तदवान्तरभेदाकाङ्क्षायामृक्सामानामध्येतृसिद्धे भेदे लक्षणं न क्रियते यजुषां तु प्रश्लिष्टपठितत्वान्न लक्षणाद्विना भेदज्ञानमित्यारभ्यते।

ननु भिन्नप्रतीकविनियोगात् तद्भेदः सेत्स्यतीति। न तावत्सर्वेषामेव ब्राह्मणे विनियोगोऽस्ति। न च 'उत्तरादिः पूर्वान्तलक्षणम्' इत्येतद् वेदवचनम्। न्यायेन तु *सूत्रकारैरे*वात्मीयब्राह्मणविनियोगेष्वेतदुक्तमिति न्यायस्य लक्षणमुच्यते।

तत्रावयवव्युत्पत्तिवलेनाह—यावतेज्यत इति। सर्वमन्त्राणामनेन यजेतेति हि प्रथमं प्रकरणाम्नानानुमितवाक्यविनियोगो भवति। ततः साक्षाद्यागसंबन्धासंभवात्तदुपकारिप्रकाशनेन तैरिष्टं भवतीति कल्प्यते तेनोच्यते—

**तेन [1]यजुर्भेदादन्यत्र सामान्यलक्षणस्याप्यनुपयोगादसङ्गतेश्च यजुर्भेदार्थमेवैतद् यथा*भाष्यं* व्याख्यातव्यमित्याह—तस्माद् यथाभाष्यमिति।**

**ननु भिन्नप्रतीकेति। आदिग्रहणेन मन्त्रो विनियुज्यते। तत्र विनियोगान्तरादुत्तरस्यायमादिरिति ज्ञायते। पूर्वस्य तदवसानता ज्ञायते। तथा चोत्तरादिः पूर्वान्तलक्षणमिति *सूत्रकार*वचनं, [2]तत्राह—न तावदिति। तेनाव्यापकमिदम्। *सूत्रकारीयस्तु* विनियोगो भेदप्रतीतिमूलत्वान्न नैरपेक्ष्येण लक्षणं भवति। तेनोक्तं ब्राह्मण इति। अस्तु वा सर्वेषामभिमतभेदानां विनियोगस्तथाप्यविनियुक्तस्यान्तरा मन्त्रान्तरस्य [3]संभवाशङ्का केन वार्यते। न हि वचनेनावाचनिकत्वादस्यार्थस्येत्याह—न चोत्तरादीति। येन तु न्यायेनोत्तरादि यावत् पूर्वस्यानुवृत्तिः *सूत्रकारै*रवगता स न्यायो वक्तव्योऽन्यथा सूत्रकारवचनस्य निर्मूलत्वं स्यादित्याह—न्यायेन त्विति। एवं यजुर्भेदस्य वक्तव्यत्वमुक्त्वा तदभिधान*भाष्यं* व्याचष्टे—तत्रावयवव्युत्पत्तिबलेनेति। *सूत्रकारेण* वाक्यं लक्षितं तद् यजुष एव लक्षणमिति प्रतिपादयतावयवार्थानुसारेणैकार्थतानयोः शब्दयोर्निर्दिश्यत इति।**

---

१. यजुर्भेदस्य पू० मा०। २. इत आरभ्य अस्तु वा सर्वेषा मित्यतः प्राङ् निर्दिष्टानि पदानि आमाइत्यत्र न सन्ति।

३. सद्भावाशङ्का आ० मा०।

यावता पदसंघेन स्मार्यते यागसाधनम् ।
तावद्यजुश्च वाक्यं च वक्तव्यत्वान्निरूप्यते ॥

वचनार्हं हि वाक्यं कार्ये समर्थं च तदर्हं भवति न न्यूनमधिकं वा, तावतैव चेज्यते । तत्तु कीदृशमित्येकार्थं साकाङ्क्षावयवं चेति लक्षणम् । ईदृशं चेदेकं यजुर्यत्ततोऽधिकं तद् वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति ।

एवं सर्वत्र पुरस्तात् परस्ताद् वैकार्थत्वसमर्थपदपरिग्रहणादसमर्थपदविमोकेन च भिन्नानि यजूंषि कल्प्यन्ते । तेनैकवाक्यलक्षणोक्तौ चार्थाद् यजुर्भेदवाक्यभेदलक्षणयोः सिद्धिरिति, एतस्माच्चेत् कारणादित्याह । किमुदाहरणमिति । अभिधेयवाचिनमर्थशब्दं गृहीत्वा लक्षणद्वयसमावेशासंभावनया पृच्छति । तथा हि---

एकार्थत्वं पदस्य स्यात् साकाङ्क्षावयवं न तत् ।
साकाङ्क्षावयवः संघस्तस्यैकोऽर्थो न विद्यते ॥

पदस्य ह्याकृतिर्नामैकोऽर्थो भवेन्न तु तदवयवानां वर्णानां प्रकृतिप्रत्यययोर्वा विभागे साकाङ्क्षत्वम्, अर्थप्रत्यायनशक्त्यभावात्, समूहावयवास्तु पदानि विभागे परस्परमाकाङ्क्षन्ति, न त्वेषामेकार्थत्वं, प्रतिपदमर्थभेदात्, समूहस्य च पृथगर्थान्तराप्रसिद्धेः । अतो लक्ष्याभावादलक्षणमेतदिति ।

प्रयोजनवाच्यभिप्रायेण देवस्य त्वेत्युदाहृतम् । नन्विति परः स्वाभिप्रायं प्रकटयति । यदा पदार्थव्यतिरिक्तः कश्चिदेको निर्भागो वाक्यार्थो नास्ति तदा तत्तत्पदार्थधर्मावेव सामीप्यवशात्तेषां गम्यमानौ भेदसंसर्गौ स्याताम् । अत आह—तथाप्येकार्थता न स्यात् । कथम्---

भेदो नाम पदार्थानां व्यवच्छेदः परस्परम् ।
स च प्रतिपदार्थत्वान्नैकत्वं प्रतिपद्यते ॥

अनेन च यजुर्भेदलक्षणोपेक्षितं तद्भेदप्रतिपादनमेव क्रियत इत्याह—ईदृशं चेति । *सूत्रकारीयाल्लक्षणादभिमतसिद्धेः* प्रतिपादकं *भाष्यमे*तस्माच्चेत् कारणादित्यादि । अभिमतं च साक्षाद् यजुर्भेदज्ञानम् अनुषङ्गाच्च वाक्यमात्रलक्षणम् । तेनोभयसिद्धिप्रतिपादनेन *भाष्यं व्याचष्टे*—तेनैकवाक्यलक्षणोक्त्यं वेति । यदेतरपदार्थोपरक्तैकपदार्थपराणि सर्वाणि पदानि तदा स एव तावदेकोऽर्थः सर्वेषां भवति ।

व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैवोपात्तत्वाद् विषयशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं वक्तव्यम् । तत्संसर्गः पदार्थान्तर्गतत्वान्न वाक्यार्थो भवतीति तदुपसर्जनस्तेषां भेदो गृह्यते ।

स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वाद् भवति एवं शुक्लशब्दस्यापि गोशब्देनाश्वादिभ्यो निर्वर्तितस्य भवति, व्यवच्छेद्यनानात्वाच्च नास्त्येकत्वे प्रमाणम् । भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः । यदा तु भेदवन्तः पदार्था एव वाक्यार्थस्तदा सिद्धमेव नानात्वम् । तथा—

संसर्गोऽपि पदार्थानामन्योन्येनानुरञ्जनम् ।
एकैकत्र तदप्यस्तीत्येकत्वं न प्रतीयते ॥

आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः सन्निधानादितरेतरानुरञ्जनमर्थसिद्धभेदं वाक्यार्थः । स च गोत्वे शुक्लत्वसंसर्गः शुक्लत्वे वा गोत्वसंसर्गः सामस्त्येनैकैकव्यक्त्युपसंहारादुपलभ्यत इति नाना ।

यद्यपि च कथञ्चिद् द्विपदे स एवोभयत्रापि संसर्ग इत्येकत्वं गम्येत, तथापि बहुपदे येन येन प्रदेशेन पदद्वयं संसृज्यते तेन तेन संसर्गरूपेणोपलब्धेरनेकत्वम् । किञ्च—

स्वप्राधान्यात्पदार्थानां धर्मावेतावुभावपि ।
धर्मिभेदेन भिद्येते न ह्येकत्वमुपाश्रितम् ॥

यावद्धि प्रयोजनैकत्वं नाश्रीयते तावत्स्वतन्त्राः पदार्था नैकतामापादयितुं शक्यन्त इति पृथगेव भेदसंसर्गावनुभवन्ति । तस्मादपि नाना । यद्यपि चास्माकमाकृतिपदार्थकत्वान्नैव भेदो वाक्यार्थत्वेनाभिप्रेतस्तथापि पूर्वपक्षवादिना विकल्पमात्रेणोपन्यस्तः । सिद्धान्ताभिप्रायविवरणं प्रयोजनवाचित्वादर्थशब्दस्योपपन्नम्

एवं सत्येक एव कश्चित्पदार्थः प्रधानभूतस्तद्विशेषणत्वेनेतरोपादानमिति सर्वेषां च तद्भेदात् तत्संसर्गाच्चैको भेदः संसर्गो वेत्यपि शक्यं वदितुम् ।

**भेदसंसर्गयोरपि चैकत्वं वक्तुं शक्यमित्याह—एवं सत्येक एवेति । न ह्येवं विशेषणानामन्यस्माद् विशेष्यशब्दैर्व्यावृत्तिः प्रतिपाद्या किन्तु विशेष्यस्यैवान्यतो विशेषणशब्दैः सापि विशेष्यप्रधाना । तेन स एव भेदो**

तस्मात्कर्मसमवायित्वेन दृष्टार्थत्वादशेषसवित्रादिपदार्थविशिष्टनिर्वापप्रकाशनं समस्तस्य पदसमूहस्यैकं प्रयोजनमिति सिद्धमुदाहरणम् । परस्तु निर्वाप-प्राधान्यमज्ञात्वा पृच्छति—नन्वत्र देवस्येति । सिद्धान्तवाद्याह–यदि निर्वपामीत्यनुषङ्गस्तत एवं, स चानुषङ्गस्तद्गुणभावेन भवेत् ; न चास्य गुणभावः प्रयोजनवत्त्वात् । सवित्रादीनां चाकर्मसमवायादित्येकार्थत्वम् ।

अथ किमर्थमुभयं सूत्रितमिति । येषां संहतानामेकप्रयोजनत्वं तेषां तदशक्तेर्व्यस्तानामेकान्तेनैव साकाङ्क्षत्वं भवतीत्यवाच्यं तत् । अथ वा विभज्यमानसाकाङ्क्षत्वं संहतैकप्रयोजनत्वेन विना न भवति प्रत्येककार्येषु निरपेक्ष-प्रवृत्तिसिद्धेः । अतः साकाङ्क्षविभागेनैवेतराक्षेपात्तन्मात्रमेवाभिधातव्यमिति ।

प्रत्युदाहरणे दर्शयति—उच्यत इति । पुरोडाशे विभागप्रकाशनमेकं प्रयोजनं निरपेक्षाणां दृष्टम् । निर्वापे दत्तोत्तरापि विभागनानात्वपरिचोदना संहत्य विशेषणानुपादानात्पुनः पुनः प्रयुक्तस्यानुषङ्गदोषाभावादुपन्यस्यते । तत्रोत्तरं न तावन्निरपेक्षसाधनभेदादपि क्रियानानात्वमिति वक्ष्यामः । साधन-प्राधान्यं तु प्रत्युक्तमेव । एतत्कृतो विशेषः कर्माङ्गत्वादरणीय इति सामान्य-प्रकाशनादेकार्थत्वम् । 'तस्मिन्सीद' इत्यस्य पूर्वापेक्षित्वे सत्यपि प्रयोजनभेदाद्वाक्यान्तरत्वम् । तस्मात् संहतयोरेव लक्षणत्वम् ॥४६॥

**व्यावृत्यात्मा सर्वेषां प्रतिपाद्यः । एवं संसर्गोऽपि स एवेति *भाष्यकारेण* । ननु भागविशिष्टाद् विभागादयमविशिष्टो विभागोऽन्य इति । विशेषण-भेदाद् विशिष्टनानात्वं चोदितं सेयं परिचोदना निर्वापविषये दत्तोत्तरा । तत्र हि निर्वापः प्राधान्येन प्राकाश्यो न तस्य विशेषणान्वयस्तेनार्थस्यैकत्वमित्युक्तमिति । तत्रापि तदेवोत्तरमिति । विभागेन प्रयोजनं न तत्संबन्धिभिर्भागादिभिरित्येवं दत्तोत्तरा उदाहरणभेदमात्रेण चानुपन्यसनीयेन विशेषाभिप्रायेणोपन्यस्यत इत्याह— निर्वापे दत्तोत्तरापीति । विशेषणोपरागेणैव विशिष्टं वाक्यप्रतिपाद्यं तत्र निर्वापस्यानुषङ्गदोष-परिजिहीर्षया सकृदुपात्तस्य संहृत्य सर्वैर्विशेषणात् तदुपरक्तस्यैकत्वं भूतम् । अत्र त्वसकृदुपात्तस्य प्रत्युपादान पृथग् विशेषणान्वयात् त्रीणि विशिष्टरूपाणि भवन्ति । तेनार्थभेद इति तत्रोत्तरमिति । तदेवोत्तर-माशङ्कितविशेषण निराकरणेनोच्यते वक्ष्याम इति चित्पत्यधिकरणे ।**

## [ वाक्यभेदाधिकरणम् ]

येषामदृश्यमानकर्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावेन वचनाद्विनियोगस्तेषां प्राग्दृष्टार्थमन्त्रावधेरेकमन्त्रत्वं युक्तम् । तथा हि—

कल्प्यस्तेषामदृष्टोऽर्थः स चाल्पः स्यात्प्रमाणवान् ।
कल्पिते च तदेकत्वे साकाङ्क्षाः स्युर्वियोजिताः ।।

यदा हि बह्वदृष्टकल्पना निष्प्रमाणिकेत्येकमदृष्टं सर्वेभ्यः कल्पितं भवति तदा प्रत्येकं तत्साधनशक्त्यभावाद्विभज्यमानसाकाङ्क्षत्वमप्यस्तीत्येकवाक्यता । कथं पुनरस्मिन्पक्षे प्रतीकभेदेन विनियोगः "ईषे त्वेति शाखां छिनत्ति" 'ऊर्जे त्वेत्यनुमार्ष्टि' इत्येवमादिः । कथं च क्लृप्तीर्वाचयति' इति बहुत्वनिर्देशः । तदुच्यते—

एकोऽपि बहुभिर्मन्त्रः प्रतीकैर्विनियुज्यते ।
पुनः पुनः प्रयोगाच्च क्लृप्तीरित्यभिधीयते ।।

आदिमध्यावसानग्रहणेनैकोऽपि मन्त्रस्तत्र तत्र विनियुज्यमानोऽपि न पीड्यते । यावद्विनियोगं हि सकल आवर्तिष्यते खण्डस्याप्रयोजनत्वात् । कल्पतां कल्पतामिति च पुनः पुनः प्रयोगादेकवाक्यत्वेऽपि बहुवचनाविरोधः । उच्यते, नैतदेवम् ।

रूपादुत्तरकाले हि विनियोगप्रयोजने ।
तस्मात्प्रागेव तत्क्लृप्तेर्भेदाभेदपरीक्षणम् ।।

तिष्ठतु तावत्प्रयोजनकल्पनं विनियोगवाक्यं वा न हि तदुत्तरकालं स्वरूपनिरूपणं युक्तम् । अज्ञातरूपस्य विनियोगाशक्तेरविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः । तत्तन्निरपेक्षं तु रूपं पाठादेवावधार्यते । तत्कालावधृतभेदाभेदानुवर्तित्वं तु प्रयोजनविनियोगयोः प्रमाणवच्चानेकमपि कल्पनीयमित्युक्तम् । रूपोपलब्धिवेलायां चेषे त्वादिना न परस्परसाकाङ्क्षत्वमेकप्रयोजनत्वं चोपलक्ष्यते । ततश्च निष्प्रतिद्वन्द्वेऽवधारितभेदे पश्चान्न किञ्चिदेकत्वापादने कारणं संभवति । न च प्रागनुपलब्धं साकाङ्क्षत्वं कल्पयितुं शक्यम् । तेन च

प्राग्दृष्टार्थमन्त्रावधेरिति । दृश्यमानार्थवशेन तस्य विच्छिन्नत्वात् पूर्वावधित्वमिति । नच प्रागनुपलब्धमिति । तदा हि भवन्नप्येकस्मिन्नर्थे विनियोगः प्रत्येककार्यसिद्ध्या स्यात् ।

विना यद्यप्येकप्रयोजनवत्त्वं भवेत् तथाप्येकाङ्गवैकल्यादेकवाक्यत्वाभावः, किमुत यदा रूपभेदाद्विनियोगभेदस्तद्भेदाच्चादृष्टार्थत्वेऽपि प्रयोजनभेदः। त्वत्पक्षेऽपि चावश्यं यावद्विनियोगं तेन तेन भवितव्यम् । इयांस्तु विशेषः, तव समस्तान्मन्त्रान्मम व्यस्तेभ्यः । न चैषामदृष्टार्थत्वं, ब्राह्मणोपदिष्टदृष्टार्थसाधनत्वात् । तद्बलेन चैषां यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं च्छिनद्मीत्यादि । यद्वा यथैव 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती' ति वचनादवाचकस्यापि विनियोगमात्रानुसन्धानेन स्तोत्राभिमुख्यचिह्नत्वं भवति, एवमिषेत्वादीनां छेदनादिस्मरणहेतुत्वम् । उभयमपि चैतत्प्रमाणवदिति *सूत्रकारैः* कैश्चित्कथञ्चिदाश्रितम् । सर्वथात्रैवमध्यवसातव्यम् । विकलवाक्यप्रयोगासंभवादवाचकप्रयोगानुपपत्तेश्चाध्याहारः । अथ वा यथाम्नातविनियोगानुसारात्तादृशेनैव स्मतुं संस्काराधाने यतितव्यम् । तत्रानुष्ठात्रभिप्रायाधीनोऽन्यतरपरिग्रह इति दृष्टप्रयोजनभेदादपि सिद्धो वाक्यभेदः । किञ्च —

अन्योन्यनिरपेक्षाणां कार्यान्यत्वे नियोगतः ।
प्रत्येकं यागहेतुत्वाद्यजुष्ट्वमवकल्पते ॥

तथा 'आयुर्यज्ञेन कल्पताम्' इत्येवमादीनां निराकाङ्क्षभिन्नरूपोपलब्ध्येर्नैकत्वापत्तिः सत्यप्येकार्थत्वे । न च तदस्ति, आयुःकल्पनादीनां भिन्नत्वात् निर्वापवदभेद इति चेन्न । क्लृप्तीरिति मन्त्रबहुत्वचोदनायाः प्रत्यक्षत्वात् । इह तावदर्थानामकर्माङ्गापवादविवक्षायां सत्यां मन्त्रोच्चारणमात्रं

तद् बलेनैवेति । ब्राह्मणोपदिष्टकार्यवशेनेत्यर्थः । विकलवाक्येति । शब्दानामर्थविशेषत्वस्य स्थितत्वादवाचकस्याप्रयोगाद्वाचकस्य च विकलस्याप्रयोगादध्याहार इति । यथाम्नातेति । विनियोगाम्नातयोस्तावन्मात्रविषयात्वात्तावति च यथाकार्यं सिध्यति तथा यतेतेति । वेदाभिप्रायावगमात्स्मरणहेतुसंस्काराधाने यतितव्यम् । किञ्च यदि संहत्यार्थमभिदधति पदानि वाक्यमित्येवं लक्षणं वाक्यं बुभुत्सितं स्यात् तदा स्यादपि प्रत्येकमवाक्यता । यजुस्तत्र वाक्यमित्युक्तम् ।

यजुष्टंव चात्रोक्तन्यायेन यथाम्नातविनियोगेऽपि समाप्तमेव प्रत्येकमित्याह—अन्योन्यनिरपेक्षाणामिति ।

प्रयोजनम् । अत्र च बह्व्यः क्लृप्तयः श्रूयन्ते तद्भेदश्चार्थभेदमन्तरेण न भवतीत्यक्षरोपसर्जनभूतोऽर्थो नानात्वेनाश्रीयते । क्लृप्तिविशेषवचनं च दृष्टार्थमिति मन्त्रबहुत्वापादनार्थत्वात् यथा विभाग इति । सकृच्छ्रुतनिर्वापवैलक्षण्यात् क्लृप्तीनाम् पुनः पुनरुच्चरितशब्दोऽपि यथा विभागः साधनभेदे सत्यपि न भिद्यते, तथा क्लृप्तिभेदोऽपि न भविष्यतीति मन्यते । नैतदेवमित्युत्तरम् । इह सामान्यविवक्षानुपयोगात् । अथ वा सिद्धान्तवाद्येव यथा विभागे नैतदेवमिति स्वयमेवैकवाक्यभूतमुत्तरं ददाति । ननु च विभागवाक्यानामपि भेदोऽस्त्येवेति नोपन्यसनीयम् । एवं तर्हि नैवेदं प्रभेदप्रतिपत्त्यर्थं, किं तर्हि दृष्टान्तेन सहैकत्वापादनपरत्वात्तदीयविकल्पापादनायोपन्यस्यति । यथा विभागे तथात्र विकल्पः कस्मान्न भवतीति । नैतदेवमिति । समानविषयत्वे हि विकल्पो भवति, न चेह सामान्यविवक्षा, येन विभागवदैकार्थ्यं भवेत् । क्लृप्तिविशिष्टायुराशासनपरत्वात् विभागे हि साधनानामप्रयोजनत्वात्सामान्यभूतक्रियामात्रप्रकाशनपरत्वम् । इह पुनरायुरादीनामाशास्यत्वेन प्राधान्यात्तद्विशेषणत्वेन क्लृप्त्युपादानं न त्वायुरादिविशिष्टा सा प्रकाश्यते निष्प्रयोजनत्वात् । अथापि क्रियाप्राधान्यं तथापि तद्भेदपरत्वान्नानार्थत्वम् । भेदपरत्वे च पूर्वोक्तमेव दृष्टार्थत्वमुच्यते । अथ वा क्लृप्तीर्वाचयतीति नैव मन्त्रपरः क्लृप्तिशब्दः, कथं तर्हि, क्रियाबहुत्वाभिधान एव, शब्दानामर्थतन्त्रत्वात् । अतश्च बहुत्वसंख्यया कर्मभेदाद्विशेषणकृतभेदाश्रयणाच्च मन्त्राणां तत्परत्वे चोदितार्थनिर्वृत्त्यादृष्टार्थत्वात् सिद्धा भिन्नार्थता । कथं पुनरस्मिन्पक्षे वाचयतीत्युच्यते, शब्दपदार्थको ह्ययं प्रयुज्यते । नैष दोषः, उभयत्र प्रयोगात् । यथैव हि शब्दं ब्रुवन्तं प्रयुञ्जानो वाचयती-

अत्र च बह्व्यः क्लृप्तयः इति । क्लृप्तेर्मन्त्रलक्षणार्थत्वाद्बहवो मन्त्राः वाचयितव्याः श्रूयन्त इत्यर्थः । निर्वापसाम्येऽपि विशेषविवक्षया परिगृहीते विभागसाम्याशङ्कायां *भाष्यकृदुक्तायां* कारणमाह— यथा विभाग इति । क्लृप्तीनां सकृच्छ्रुतान्निर्वापात् पुनः श्रुतत्वमात्रेण वैलक्षण्येनावगम्यमानानां शक्यो निर्वापवदभेदो वक्तुं, यथा तु विभागे पुनः श्रुतेरपि सामान्यविवक्षा तथात्र भवेदित्याशंक्यत इति । तदेतद्विवृणोति— पुनः पुनरिति । प्रकारान्तरेणार्थभेदमाह—क्लृप्तिविशिष्टायुराशासनेनेति । नैव मन्त्रपरः क्लृप्तिशब्द इति ।

त्युच्यते तथैव च यः शब्देनार्थं ब्रवीति तस्यापि प्रयोजको वाचयतीति। तस्मात् क्लृप्तिक्रियाशब्दैर्यजमानं वक्तुं प्रवृत्तमध्वर्युर्वाचयतीत्ययमर्थो विज्ञायते, तत्प्रकाशनेन च भिन्ना एव सन्तो मन्त्रा दृष्टार्था भवन्तीति वाक्यभेदः ।।४७।।

## [ अनुषङ्गाधिकरणम् ]

ज्योतिष्टोमे तिसृणामप्युपसदामादावाग्नेयी विहिता "अग्निमनीक" मिति । तत्र प्रथमायाः क्रमे "या ते अग्नेऽयाशया" इति निराकाङ्क्षो मन्त्र आम्नायते । उत्तरयोस्तु, साकाङ्क्षौ "या ते अग्ने रजाशया" "या ते अग्ने हराशया" इति । तत्र स्त्रीलिङ्गयच्छब्दनिर्देशस्य स्त्रीपदार्थेन केनचिद्विना परिपूर्णता नास्ति । न चापरिपूर्णेन व्यवहारोऽवकल्पते तत्र तदन्यथानुपपत्त्यावश्यं परिपूरणसमर्थो वाक्यशेषः कल्पनीयः । कुतः ।

न्यूनवाक्यप्रयोगाद्धि वेदे नैव समाश्रितः ।
कश्चित् क्वापि स्थितः शेषः सोऽन्वेष्टव्यः प्रयत्नतः ।।

न हि वैदिकवाक्यानां प्रत्यक्षमेवैकं प्रमाणं, तद्वदेव ह्यनुमानादीन्यपि प्रमाणानि । सर्वप्रमाणप्रत्यस्तमये च षष्ठेनाभावः परिच्छिद्यते । तदिह प्रत्यक्षानुपलब्धे वाक्यशेषे न तावत्येवोपरन्तव्यम् । यद्यनुमानादीन्यपि निवर्तिष्यन्ते तत एतावानेवायं मन्त्र इति कल्पयिष्यामः । अथ तु तैः कश्चिदवगम्यते ततस्तत्सहितोऽयं मन्त्रः सकलः प्राक् तस्मादून इत्यध्यवस्यामः । तदिहार्थापत्त्या तावत्सामान्यतः कश्चिदस्ति शेष इत्यध्यवसेयम् । ततश्चाभावस्यानवसरादूनमिदं वाक्यं न प्रयोगार्हम् । तत्र विशेषाकाङ्क्षायां लौकिकः कल्पनीय उत वैदिक एव पूर्वमन्त्रस्थस्तनूर्वर्षिष्ठेत्यादिरनुषक्तव्य इति संशये लौकिक इत्याह ।

**क्लृप्तार्थानामकर्माङ्गभावेऽपि यन्मन्त्रोच्चारणाददृष्टं कल्पनीयं तत् क्लृप्त्यर्थाभिधानादेव कल्प्यतामेवं मन्त्रलक्षणं न भविष्यति । आदावाग्नेयीति । आग्नेयीष्टिरग्निमनीकमित्यादिना वाक्येन विहितेति । नन्वदृष्टसिद्ध्यर्थमेव वेदाश्रितोऽर्थापत्तिमात्रेण कथं कल्पनामर्हतीति पृच्छति— कुत इति । न्यूनवाक्यप्रयोगाद्धीति । स्वाध्यायविधिराम्नातभागस्याध्ययनेनोपादानमाह— यावता तु विना न तेन कार्यसिद्धिस्तावदर्थापत्तिसिद्धमनुजानात्येव । ननु प्रत्यक्षैकप्रमाणस्य वेदस्य तन्निवृत्या भावेऽवगते कथमर्थापत्त्युदय इत्याशङ्क्याह— नहि वेदवाक्यानामिति ।**

तथा हि—

नान्यत्रोत्सहते गन्तुं वैदिकं सन्निबन्धनम् ।
यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकम् ।।

यथैवाहवनीयादयो वैदिकास्तन्निर्दिष्टकार्यव्यतिरेकेण न प्रवर्तन्ते तथैव वैदिकः शेषो यत्र वाक्ये समाम्नायेन विनियुक्तः स तन्निबद्धत्वान्नान्यत्र प्रयोगं क्षमते । लौकिकः पुनरनिबद्धत्वात्सर्वार्थः सर्वाकाङ्क्षापूरणायापि नियुज्यमानो न विरुध्यते । तस्माल्लौकिकः । तत्र यदि वैदिकमपि रचितत्वाल्लघुतरप्रयोगं रचयितव्यादवैदिकाल्लौकिकात्मना मन्वानः प्रयुङ्क्ते न केनचिद्वार्यते । वैदिकत्वबुद्धिस्तु तत्र न कर्तव्या । तथा हि—

तानेव वैदिकान् वर्णान् भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुध्या प्रयुञ्जते ।।

यदि त्वानन्तर्यविशेषाद्रजाशयेत्यनेनापि संबन्धोऽभ्युपगम्येत ततो यथा निवेशं प्रयोगात् पुरस्तादेवास्य प्रयोगः प्राप्नोति । तस्मादपि न वैदिकः शेष इति प्राप्ते, उच्यते—

विमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः ।
तद्व्यापारविमोकश्च सकलान्वेषणक्षये ।।

वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणक्षमो न लौकिकः । चोदना लक्षणधर्मनियमात् । यदा तु वेदः सर्वात्मनान्विष्यमाणोऽपि त्यक्तव्यापारो दृश्यते तदा लौकिकमप्यनुजानाति सा वान्वेषणा यथासंनिकर्षं प्रवर्तते ।

नान्यत्रोत्सहते गन्तुमिति । लौकिकमेव वेदनियतेन रूपेण वैदिकं भवति । अतो नियमातिक्रमे वैदिकत्वापगमान्नान्यत्र वैदिकस्य गतिः । न स्वरूपमात्रप्रत्यभिज्ञा तु लौकिकं भवत्यतस्तस्य सर्वार्थत्वमिति । पुरस्तादेव प्रयोग इति । न चासौ सम्भवति विशेष्यविशेषणानां प्रथमान्तानामप्रथमान्तेन चतुर्थ्यन्तसंबन्धार्हेण स्वाहाशब्देन व्यवधानप्रसंगादिति । वैदिकस्येति । वैदिकस्यादृष्टसाधनस्य तदंशनिपाती शेषो वेदप्रमाणक एव स्यान्न लोक प्रमाणक इति । न चैवं वक्तव्यम् । यदि लौकिकमप्यनुजानाति वेदस्तदा-लौकिकवैदिकयोः को विशेष इति ।

तत्र—

अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते पुनः।
पदे स्वस्मिन्नलब्धस्तु प्रार्थनीयः पदान्तरे॥
स्वस्मिन् वाक्येऽपि न स्याच्चेन्मृग्यो वाक्यान्तरे ततः।
वाक्यान्तरेऽपि न स्याच्चेन्मृग्यः प्रकरणान्तरे॥

एकस्मिन्नर्थे साकाङ्क्षेऽभिहिते प्रकृत्या प्रत्ययेन वा तत्संबन्धसमर्थमर्थान्तरं यदि वा तत्रैव दृश्यते ततो रमणीयम्। अथ न दृश्यते ततः प्रमादालस्ये परित्यज्य प्रकृती प्रत्यये चान्वेष्टव्यः। तयोरपि चेन्न दृश्यते ततः पुरस्तात् परस्ताद्वानन्तरोच्चरिते पदान्तरे। न चेदनन्तरे लभ्येतैकान्तरद्वयन्तरादिव्यवहिते। यदि तु स्ववाक्ये न लभ्येत ततस्तेनैव क्रमेण प्रकृते वाक्यान्तरे। वाक्यान्तरेऽपि त्वलभ्यमानो यथोपस्थाप्यमानानुसारेण प्रकरणान्तरे। यदा तु तत्रापि न लभ्यते तदा लोके। लोकेऽपि चेन्नोपलभ्येत ततो नास्तीत्येवमवधार्याकाङ्क्षाबुद्धि भ्रान्तित्वेन परिकल्प्य निराकाङ्क्षीकर्तव्यम्। सर्वत्र च

सन्निकृष्टो न लब्धश्चेद् विप्रकृष्टोऽपि वैदिकः।
स एवावैदिकस्तु स्यात् प्राप्तः सन्निहितो यदा॥

तदिह रजाशयाहराशयावाक्ययोः शेषः स्वपदस्ववाक्ययोरलभ्यमानत्वाद् वाक्यान्तरे नूनमित्युपसंह्रियते। स च यादृगाकाङ्क्षितस्तादृगेवैकानन्तरं पुरस्तादुपलभ्यतेऽन्यस्य व्यवहितः। यद्यपि चासौ प्रथममन्त्रे कृतार्थत्वान्न तावाकाङ्क्षति। तौ तु तेन विनानुपपद्यमानावात्मसमीपेऽन्यस्यानाम्नानादेवं पुरुषं प्रयुञ्जाते। सर्वसमीपे सकृत् पठितुमशक्यः प्रमाणान्तरलभ्यत्वाच्च पुनः पुनरश्रावितोऽयमावयोरप्यर्थेनाम्नातः शेषो नैकस्यैव सन्निधिविशेषनिमित्त-

**यतः— सन्निकृष्टो न लब्धश्चेदिति। एवं पुरुषमिति। वाक्यशेषस्य प्रतिपत्तारं पुरुषं प्रत्येवंविधं प्रयोजकव्यापारं कुर्वीतेत्यर्थस्तं प्रयोजकव्यापारं प्रतिपादनस्वरूपं दर्शयति—सर्वसमीप इति। साधारणस्यैकसामीप्यादरानुपपत्तेरसाधारण्यमनेन निरस्यते। साधारणस्यापि सकृत् पठ्यमानस्य नान्तरीयकत्वादेकसन्निधिः। सकृत्पाठे च कारणं वैफल्यमसकृत्पाठस्य स्यात्। प्रमाणान्तरेति। प्रमाणान्तरमुक्तं यादृगाकाङ्क्षित इत्यादिना योग्यत्वादिति प्रपञ्चयिष्यते च *भाष्य*व्याख्यायामिति। ननु**

भ्रान्त्या कल्पयितव्य इति । यद्यपि च पुरस्तादालोच्यते, तथापि यत्प्रदेशवर्त्ति-त्वेन ताभ्यां काङ्क्षितस्तत्रैव विनियुज्यते । कुतः—

प्रतीतिमात्रलाभार्थं तत्प्रदेशे स पठ्यते ।
योग्यत्वात् सन्निवेशस्तु पूर्वमन्त्रवदिष्यते ।।

स हि सकृदाम्नायमानः सर्वेषामीप्सिते प्रदेशे न शक्य आम्नातुमित्ये-कस्य यथाक्रममाम्नात इतरयोश्च यावता बुद्धिविषयतामापद्यते, ततश्च गृहीतः सन् स्वयमपि प्रदेशान्तरे स्थातुमसमर्थस्ताभ्यामपि चान्यवृत्तित्वेनानाकाङ्क्षितः पूर्वत्र च परस्ताद् भावितया दृष्टसामर्थ्यः परस्तादेव निवेक्ष्यते । *भाष्यकारेण* तु प्रथमद्वितीययोर्मध्ये पाठादगृह्यमाणविशेषः शेष उभयोरप्यानन्तर्येणैव संबन्धी-त्युक्त्वा तृतीयस्य व्यवधानादसंबन्धमाशङ्क्यार्थित्वाविशेषादुभयोः समुदाया-पादनेनाव्यवधाने साधिते समुदायशेषत्वमेव तर्हि प्राप्नोतीत्याशङ्क्य तस्या-प्रयोगार्हत्वात् प्रयोगार्हसमुदायिसंबन्धः, तत्रापि तयोः प्राधान्यादन्यथा च नैरा-काङ्क्ष्यानुपपत्तेः । प्रत्येकं सकलशेषसंबन्धसिद्धिरित्यभिधाय पुनर्व्याख्यानान्त-रमारब्धम् । अपि च साकाङ्क्षस्य सन्निधाविति । तत्र कैश्चिद् व्याख्यानविकल्प एवेत्याश्रितम् । अपरे तु वदन्ति पूर्वत्रापरितोषादुत्तरं कृतम् । किं कारणम्,

न तावत्समुदायत्वं केनचिन्निर्मितं तयोः ।
पुनः प्रत्येकनिर्माणे न च हेतुः प्रतीयते ।।

समुदायत्वं ह्येककार्यत्वेनैकशब्दोपादानेन वा भवेत्, न चात्रैकमप्यस्ति । नन्विदमेककार्यत्वमेकवाक्यशेषग्रहणं नाम । अहो नु खलु मन्त्राणां कार्यं

**पाठे वाक्यशेषं प्रतिप्रमाणीकृते बलात् तत्प्रदर्शितः क्रम आपद्यते । कुतः क्रममात्रेण पाठानादर इति पृच्छति— कुत इति । प्रतीतिमात्र-लाभार्थमिति । यावदनेन पाठेन नापेक्षितं साधयितुं शक्यते तदर्थोऽयं तत्र क्रमस्यासम्भवादविवक्षायां प्रतीतिमात्रार्थतावशिष्यते । न च सापि क्रम-रहिता व्यर्थेति मन्वीथाः[1] । अतः योग्यत्वात्सन्निवेशस्त्विति । प्रदर्शितश्चा-सावेकत्र पाठेनापीति दर्शितं— पूर्वमन्त्रवदिति । न चेप्सितदेशानामाम्नान-मेव तत्रानिवेशाभिप्रायं गमयति । अन्यथाप्युपपत्तेरित्याह—स हि सकृदिति ।**

**समुदायत्वं हीति । पदे वाक्ये चैककार्यत्वेन [2]पौर्णमास्यमावास्ययोरेक-शब्दोपादानेन—अहो नु खल्विति । प्रधानं निष्पाद्यमत्र कार्यमित्युक्तम् । यत्रि**

---

१. विषये आ० मा० ।
२. व्यर्थत्वाद्धेया पू० मा० ।

विज्ञातम् । अपेक्षा हि तत्रोभयोः स्यात् । कथं तत्कार्यमित्युच्यते । शेषश्चासौ तयोर्न तद्वशेन समुदायत्वापत्तिर्युक्ता । पश्चादपि वा समुदायिभ्यामेव तस्य संगतिरिष्टेत्यादित एव समुदायत्वं न लभ्यते । यदि च समुदायत्वमापन्नो ततः पुनः प्रत्येकं संबन्ध इति राजैकपुत्रक्रीडापद्यते । पुरस्तादेव च प्रयोगः प्राप्नोति । तथाभूतेन समुदायानन्तर्यात् ! न वागृह्यमाणविशेषत्वं, देशभेद-निमित्ततन्त्रभेदात् । प्रथमस्य ह्यसौ यथाकाङ्क्षिते देशे स्थितो नोत्तरयोः । तस्मादिदमेव व्याख्यानम् ।

आकाङ्क्षा सन्निधानं च योग्यता चेति च त्रयम् ।
संबन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥

यो हि बहूनां संबन्धित्वेन सकृदाम्नायते तस्यावश्यंभाव्ये केनानन्तर्यं-मिति न तदेव तदा संबन्धकारणत्वेनाश्रीयते । तत्राप्यस्मादेव कारणत्रयात् संबन्धसिद्धेः । सन्निधिविशेषात्तु तदाश्रयप्रतिपत्त्या भवति भ्रान्तिः । सा तु साकाङ्क्षयोग्यसंनिहितसंबन्ध्यन्तरदर्शनान्निवर्तते । यथा धात्वर्थादिषु विधि-बुद्धिर्गुणाद्युपादानसामर्थ्यात् । एवं हि तत्र ज्ञायते, सर्वार्थोऽयमाम्नायमानः सर्वसाधारणानन्तर्यासंभवाद् वाक्यैकत्वाच्च कस्यचिदेकस्य समीपे पठ्यते । तस्मादकारणमानन्तर्यमिति । सन्निधिरिति बुद्धौ विपरिवृत्तिः । सा चानन्तर्ये संबद्धपदव्यवाये च भवति । संबद्धपदव्यवधिरानन्तर्यप्रकार एव । कथम्

अनन्तरेण संबद्धः स्यात् परस्याप्यनन्तरः ।
ततः पुनस्तदारूढः परानन्तर्यमश्नुते ॥

'या ते अग्ने रजाशया' इत्यनेनापेक्षितः शेषः परस्तादलभ्यमानः पुरस्तात् परावृत्त्यालोच्यमानो लभ्यते तनूर्वर्षिष्ठेति । यदा त तत्रारूढस्तदा हराशयेत्यस्यानन्तरीभूतः पुनरेवमेव तृतीयेनापि सह संबध्यते । ततः परं त्वन्यस्यानाम्नानात् तावत्यैवोपक्षीयते । सर्वत्रैवमपेक्षा पुरस्तात् परस्ताच्च

त्पाद्यमानं स समुच्चिनोति साधनानि न निष्पत्तिमात्रम् । वाक्यशेषे च प्रधाननिर्वृत्त्यर्थेऽपेक्षा तयोरिति न तत्कार्यमिति । अस्तु वा तन्निष्पत्तिमात्रं कार्यशब्दवाच्यम् । न चैवंविधं प्रतिप्रधानावृत्तित्वात् समुदायीकरणक्षममित्याह —शेषश्चासावित्यादि । नचागृह्यमाणेति । न वा गृह्यमाणविशेषत्वं येन तन्त्रता स्यात् । यतो देशभेदेन गृह्यमाणविशेषत्वादस्य तन्त्रात्साधारण्याद्-

प्रसृतैकत्रारुह्य्तरेषामनन्तरीभवन्ती तावदपेक्षमाणा निगृह्णाति, यावत्किंचिन्न योग्यमस्त्ययोग्यं चोपलब्धम् । ततः सर्वमालोचितमुपसंहृत्य निवर्तते । यद्यपि च क्रमोच्चारणात्संनिकर्षविप्रकर्षौ प्रतीयेते तथापि नित्यत्वाद्वेदस्यानन्तरे दूरस्थे च युगपदपेक्षासंबन्धश्चेति पश्चादवगमान्न प्रामाण्ये कश्चिद्विशेषः। एवं वाक्ये पदानां प्रकरणे च वाक्यानां संबन्धो यावत्साकाङ्क्षेण तत्संबन्धार्हेण परस्याप्यनन्तरीकर्तुं समर्थेन व्यवधानम्। अव्यवधाने विच्छेदेऽपीति विरोधिना पदेनाव्यवधाने विप्रकृष्टत्वे भवति संबन्ध इत्यर्थः। तस्मादनुषङ्गः समाप्ति रनुषज्यत इत्यनुषङ्गः । स एव समाप्यते तेनेति समाप्तिः ।

यत्र तावच्छेषिणः साकाङ्क्षास्तत्रैवमथ यत्र नैराकाङ्क्ष्यं सर्वेषु शेषिष्वेकः शेषः साकाङ्क्षः पठ्यते । यथा 'चित्पतिस्त्वा पुनातु' इत्येषामन्ते अच्छिद्रेण इत्यादिस्तत्र कथमिति । किं प्राप्तम् ।

अनन्तरेण संबध्य शेषस्येष्टा कृतार्थता ।
शेषिणश्च निराकाङ्क्षाः किंनिमित्तानुषङ्गधीः ॥

उच्यते—

अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम् ।
तत एवं भवेदेष त्वाख्यातार्थेन सर्वभाक् ॥

**भेदोऽसाधारणतेति । ननु सन्निहितेन शेषिणा शीघ्रसम्बद्धस्य वाक्यशेषस्योच्चारणमवसितं पश्चादागतसम्बन्धाय स्यादत आह— यद्यपि क्रमोच्चारणादिति । नित्यत्वाद् वेदस्य यथावस्थितः शब्दराशिरध्येतृभिः क्रमेणाभिव्यज्यते । तत्रैकशब्दाभिव्यक्ति समये[1] अन्येषां संनिहित व्यवहिताभिव्यक्तीनां प्रमाणशरीरसमवायाविशेषादभिव्यज्यमानेनापेक्षाग्रहणं च युगपद्भूतमुच्चारणक्रमात् क्रमेणावसीयते । अवगतं हि प्रतिपत्त्रापि यद्यत् सम्बन्धयोग्यं भविष्यति तदर्थमेतदिति । किं चैकविवक्षाविपरिवर्तिनां व्यवहितोच्चारणानामपि उच्चार्यमाणेन ग्रहणाविरोधः । एवं च लौकिकेऽपि वाक्ये सम्बन्धोपपत्तिः । तेनोच्चारणस्य सर्वार्थत्वज्ञानानुव्यवहितसंबन्धस्यावैदिकोच्चारणाप्रसूतत्वेनाप्रमाणता इत्युक्तं, न प्रामाण्ये कश्चिद्विशेष इति ।**

**अनन्तरस्य वाक्यस्येति । स्वाध्यायगतस्य मन्त्रपाठस्य मन्त्ररूपनिरूपणोपयोगात् पाठतात्पर्यानुसरणम् । तत्र यदि कर्तृपदाख्यातसंहतात्मक-**

१. दर्श पूर्ण मासयोः आ० मा० ।

आनन्तर्यविशेषेण ह्ययं पुनात्वित्यनेन संबध्यते । स चैक एव त्रिष्वपि वाक्येषु तदेकत्वाच्चार्थस्याप्येकत्वम् । न च कारकभेदात्तस्य भेदो भवति । येन चित्पत्यादिसंबद्धादस्यानन्यत्वं विज्ञायते । न चाच्छिद्रेणेत्येवमर्था क्रिया, येन सकृत्संबन्धेन संतुष्येत् ।

तस्मादस्य क्रियार्थत्वाद् यावदेषा प्रयुज्यते ।
तावदेव प्रयोगित्वं काष्ठानां पचने यथा ॥

अथोच्यत एकत्वेऽप्यस्या यत्कर्तृविशिष्टाभ्यासाद् यः करणसंबन्धः श्रूयते तद्विशिष्टैव तेन योजयितव्या । यथैकस्यापि ज्योतिष्टोमस्य मैत्रावरुणग्रहाभ्यासविशिष्टस्य पयसा श्रपणं चोदितं नातिप्रसज्यते, यथा चात्रैव चित्पत्यादयो न सर्वे सर्वत्र भवन्ति । उच्यते—

श्रपणानां व्यवस्था हि भिन्नापूर्वप्रयुक्तितः ।
कर्त्रन्तरावरोधाच्च चित्पत्यादेरसंकरः ॥

ऐन्द्रवायवादिग्रहाभ्यासानामदृष्टार्थत्वात्तद्भेदेन श्रपणव्यवस्था युक्ता । न हि तथा किञ्चित् कारणमस्ति । करणस्य क्रियां प्रत्युपयुक्तत्वात् । करणप्रकाशनद्वारेण सैव क्रिया पुनः प्रकाश्यते । सा च सर्वत्राविशिष्टत्वात् प्रकाशनमपेक्षते । तथा च वाक्पत्युपादानात् तत्समानन्यायारश्चित्पतिर्निवर्तते, नैवमच्छिद्रपवित्रप्रतियोगिकरणान्तरश्रवणमस्ति येनैतन्निवर्तेत, न च कर्तृप्रयुक्तं करणम् । यतस्तद्भेदाद् व्यवतिष्ठेत, कारकाणां क्रियाक्षिप्तत्वेन परस्परसंबन्धाभावात् । नन्वेवमपि मन्त्रान्तरगतेनापि पुनातुशब्देनास्य संबन्धः स्यात् । नैष दोषः । दर्शपूर्णमासबर्हिर्धर्मवद् व्यवस्थासिद्धिः । इह प्रक्रम्य पुनातु शब्दस्य यत्कार्यं तत्प्रयुक्तमच्छिद्रादिविशेषणं मन्त्रत्रयेऽपि तदेकमिति प्रत्यक्षमवगच्छामः । न मन्त्रान्तरे, कर्मान्तरगतद्रव्यान्तरसंस्कारार्थत्वात् । नन्वेवं सत्येककार्यत्वान्मन्त्रविकल्पः प्रसज्येत । कुतो वैवमादीनां संख्यायुक्तविधानादन्ते समुच्चयः । सर्वेषु चैतेष्विति ? विपरिवृत्तिभङ्गासन्निधिः संभाव्येत न मन्त्रान्तरेष्विति विशेषः ।

स्यानन्तरस्य वाक्यस्यायमेकदेशः स्यात्तदा संहतान्तरेण न स्यात् । अयं तु कारकत्वान्न क्रियान्वयीति । तेन पुनातुशब्दस्य क्रियाविशेषस्मरणार्थस्यायं सहकारीति पाठतात्पर्य्यम् । अतश्चाख्यातार्थत्वेनाख्यातप्रतिपाद्यद्वारेण वा तद्विशेषणोऽयं सर्वमन्त्रभागिति । दर्शपूर्णमासबर्हिर्धर्मवदिति । प्रकरणपठितोऽयं मन्त्रः । पुनातुशब्दैकवाक्यतया तदर्थो ज्ञायमानः प्रकृतापूर्व-

तस्मात् पुनातुशब्दोऽयं सर्वमन्त्रगतोऽपि सन् ।
अच्छिद्रापहृतः सर्वैः पुनस्तद्वानपेक्षते ॥

सर्वाभ्यासान्ताभिहितेनाच्छिद्रेणेत्यादिनानन्यगतिकत्वाद् यदा पुनातुशब्दः स्वीकृतः, तदा पुनात्वच्छिद्रेणेत्येवं कल्पिते संबन्धे य एवानन्तरः पुनातुशब्दः स एव पूर्वयोरपीति करणसंबन्धप्रदर्शनवेलायामन्वेति । क्रियाः पदार्थाः सन्तस्तामपेक्षमाणाः सकरणिकामेवासादयन्तीति सर्वत्रानुषङ्गः । एवं वानुषङ्गेण प्रयोक्तव्ये ये तन्त्रेण प्रयुञ्जते तेषां तदालस्यमात्रं पुरस्तात् परस्ताद्वा वाक्यशेषस्यानुषङ्गत्वाविशेषे सति यत्पुरस्तादनुषङ्गोऽन्वीयत इति कैश्चिदुच्यते तद्विशेषप्रसिद्धिमात्रमिति द्रष्टव्यम् ॥४८॥

## [ व्यवेतानुषङ्गाधिकरणम् ]

प्रत्युदाहरणत्वेन सन्निधेरेवमुच्यते ।
असंबन्धातिरोधाने वैषम्यान्नानुषज्यते ॥

'सं ते वायुर्वातेन गच्छताम्' इत्यस्य साकाङ्क्षस्यानन्तरत्वादवधारितशेषो बहुवचनान्तेनायोग्येनासंबद्धस्तुल्ययोगित्वाभावाद् योग्येनापि यज्ञपतिना नानुषज्यते । अतश्च वैदिकशेषासंभवादस्ति लौकिकस्यावकाश इत्युभयत्राध्याहारः कर्तव्यः । तत्र तु यद्यपि नोच्चार्यते गच्छतामिति तथाप्यवश्यमनुसन्धातव्यः, अन्यथार्थापरिसमाप्तेः । तस्मान्नानुषङ्ग इति । प्रयोजनं तु, अनुषङ्गे मन्त्रत्वात् प्रायश्चित्तम् । लौकिकत्वे चामन्त्रत्वमिति । आह च—

**प्रयुक्तपुनात्वर्थो विज्ञायते श्रुतेरिव बर्हिर्धर्माः प्रकृतापूर्वप्रयुक्तबर्हिरर्था इति । किञ्चैक एवायं पुनातुशब्दः इतरयोश्च एवैकत्राच्छिद्रान्वित इत्यत्र सन्निधिरपि प्रमाणं संभाव्यत इत्याह—सर्वेषु चैतेष्विति । सोऽयं युक्तिसिद्धोऽस्य सर्वत्रान्वय एव स्फुटं बुद्धौ विधेय[1] इत्याह—तस्मात्पुनातु शब्दोऽयमिति । एवं सकृत्पाठेनैव त्रिषु मन्त्रेषु कर्माङ्गेषु दर्शितेषु ये प्रयोगकालेऽपि सकृत्पाठमाद्रियन्ते, न ते पाठदर्शितं मन्त्रं रूपं संपादयन्तीति सुहृद् भूत्वाचष्टे—एवं चावृत्येति ।**

**तत्र तु यद्यपि नोच्चार्यत इति । याज्ञिकैरनुच्चारणाद् विचारानर्थक्य—**

१. निवेश आ० मा० ।

आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायाम् ।
ऊहादिसाम्ये ननु लौकिकानाममन्त्ररूपप्रतिपत्तिसिद्धिः ॥३६॥

*इति श्रीभट्टकुमारिलविरचितमीमांसाभाष्यव्याख्याने तन्त्रवार्तिके द्वितीयस्याध्यायस्य प्रथमः पादः ।*

**माशाङ्क्येदमुच्यते । यद्यपीत्यनुच्चारणेऽनुशयो दर्शितः अनुसन्धानस्थेऽपि मन्त्रामन्त्रत्वे विविच्येते तद्विनाशप्रायश्चित्तविशेषायेति ॥४६॥**

इति महामहोपाध्यायपरितोषमिश्रविरचिते
अजिताख्ये तन्त्र टीकानिबन्धे
द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥१॥

---

## द्वितीयाध्यायस्य द्वितीयः पादः

### [ शब्दान्तराधिकरणम् ]

उपोद्घातप्रसक्तानुप्रसक्तादौ गतेऽधुना ।
शब्दान्तरादिभिर्भेदो[1] लक्षणार्थोऽभिधीयते ।।

तत्र शब्दान्तरं तावत् स्पष्टत्वात् प्रथममुदाह्रियते । एकानेकाख्यातप्रत्यय संबद्धाः सर्वे धातवो यजति ददाति जुहोति निर्वपति गृह्णाति स्तृणाति शंसति स्तौति इत्येवमादय उदाहरणम् । *भाष्यकारेण* तु स्वत्वपरित्यागांशेन

तत्र शब्दान्तरं तावदिति । यस्मात् स्थूलसूक्ष्मक्रमेण प्रतिपत्तयोऽर्थ-मवगाहन्त इति । एकानेकाख्यातेति[1] । एकेनानेकेन च प्रयोगवचनाख्यात-प्रत्ययेन सम्बद्धा धातव उदाहरणम् । सर्वत्र प्रत्ययैकत्वस्य[2] भावनैकत्वहेतो-र्भावात् । तदिदमयुक्तम्, तथा हि येषु धात्वर्थभेद एव भेदहेतुः सिद्धान्ते तदाक्षेपेण च पूर्वपक्षस्तेषामेतत् विचारविषयत्वम् । येषु तु गुणादिभ्योऽपि भेदसंभवस्तेष्वप्यस्य पूर्वपक्षस्यासम्भवान्नैतद्[3] विचारविषयत्वम् । प्रकरणा-न्तरवर्तिनां चासन्निधानान्नाख्यातान्तरस्थभावनानुवादेनाख्यातान्तरे[4] धात्वर्थविधिः सम्भवति । अथ वाचकप्रत्ययाभेदमात्रेण भावनाभेदः साधा-रणः सर्वत्र पूर्वपक्षो विध्यतिरेक इवार्थवादादिषु । क्रमेण तु प्रत्यधिकरणं पूर्वपूर्वहेत्वसम्भवेन तदवस्थ[5] पूर्वपक्षप्रसक्तिरुदाहरणान्तरे भेदहेत्वन्तरो-पन्यासेन निराक्रियते । तेन[6] तस्मिन् पूर्वपक्षे सफलवैदिकार्थत्वम् । तदसत् । कथं हि [7]गोशब्दाविशेषेऽपि शुक्लकृष्णादिगोविशेषव्यवस्थितं शब्द-व्यवहारमुपलभ्यमानो वाचकाभेदमात्रेण प्रमेयाभेदं ब्रूयात् । तस्मात् भेदप्रमाणाभावे शब्दैक्यादभेदो वक्तव्यः । अभावश्च तेषां भेदशक्त्याक्षेपात् । न चैकत्रैव सर्वेषां साक्षिप्यते । तथा हि अत्रानाक्षिप्य[8] पुनर्विधानस्य

१. प्रतीकमिदम् आ० मा० इत्यत्र केवलम् ।
२. °त्वस्य हेतोर्विद्यमानत्वात् आ० मा० । न तु भावनैकत्वहेतोर्भावादिति ।
३. नैतद् विषयत्वम् आ० मा० ।
४. ०तान्तरेण आ० मा० ।
५. पूर्वपूर्वभेदहेत्वसम्भवेन आ० मा० ।
६. तेनैतस्य पूर्वपक्षे आ० मा० ।
७. गोशब्दविशेषम् आ० मा० ।
८. अत्रानाक्षिप्यैव आ० मा० ।

यजत्यादित्रयं प्रत्यामन्त्रार्थत्वात् सुतरामभिन्नमाभासत इत्युदाहृतम् । तत्र पूर्वपक्षत्रैविध्यदर्शनात् संशयोपन्यासोऽपि तदनुगुणः प्रतिभाति । तद् यथा तिस्रो भावनाः किमेकमपूर्वं कुर्वन्त्युत त्रीणीति । तथा त्रयो धात्वर्थाः किमेकां भावनां विशिषन्त्युत तिस्रः, तथा त्रयो धातवः किमेकं धात्वर्थं वदन्त्युत त्रीनिति । कार्यशब्दश्चापूर्वभावनाधात्वर्थेषु उपकार्यत्वाविशेषेण प्रयुज्यते । भावनाधात्वर्थधातवो ह्येषामुत्पादनेन विशेषणेन प्रतिपादनेनोपकारकत्वात् साधनत्वेनाभिधीयन्ते । कुतः संशयः,

साधकत्वं द्विधा दृष्टं प्रत्येकसमुदाययोः ।
वस्तुलक्षण एवातस्तद्दृष्टेः संशय ध्रुवः ।।

अथ वा पारमार्थिकोऽत्रायमेकः संशयः, किं धात्वर्थत्रयानुरक्तैका भावना अथ वा प्रतिधात्वर्थं भावनाभेद इति । भावनैव धात्वर्थानुरक्ता कर्मशब्देनोच्यते ।

भेदहेतुत्वं [1]धात्वर्थान्तरविधानेन तस्य साफल्यादभेदकत्वेऽवस्थितेऽधात्वर्थान्तरोपधानस्य भेदकत्वाक्षेपेण पूर्वपक्षोऽभ्यासाधिकरणे तु विपरीतः । अथ सिद्ध एव धात्वर्थान्तरोपधानस्य[2] भेदकत्वेऽभ्यासादीनां भेदकत्वम् । अन्यथा धात्वर्थभेदमात्रेण तेषां चरितार्थत्वाद् भावना[3] सैव स्यात् । भवेदभ्याससंज्ञा संख्यासु न गुणप्रकरणान्तरयोः । न ह्यनेकगुणविधिर्भावनाभेदमन्तरेण प्रकरणान्तरे च पूर्वानुपस्थानादपूर्वोत्पादनं भावनायामपि । अतोऽस्मिन् पूर्वपक्षे न सकलवैदिकार्थता[4] । प्रतिप्रकरणं तु प्रकरणवर्तीं भावनामनूद्य धात्वर्थान्तरविधिरुपपद्यते ।

तस्मादेवं व्याख्येयम् । एकेन प्रयोगवचनेनाख्यातप्रत्ययेनानेकैश्च प्रतिस्वमाख्यातप्रत्ययै[5]रिति । त्रैविध्यदर्शनादिति । न वस्तुतस्त्रैविध्यं किन्तु आपातात् तथा दृश्यते इति दर्शनादित्युक्तम् । एवं तदनुगुणः प्रतिभातीत्यपि ।

ननु कथं पारमार्थिकोऽयमेव सन्देहो यावता कर्मभेद इत्याह सूत्रकारः—"अपूर्वं च भाव्यत्वात् कर्मधात्वर्थश्च कर्मशब्दाभिधेय [ मी० सू० ? ] इत्युक्तं भावार्थाधिकरणे । तत्राह—भावनैव चेति । उक्तं तत्रैव शास्त्रे कर्मशब्दः कदाचिद् भावनायां कदाचिद् धात्वर्थे [6]कदाचिद् प्रत्यासत्त्योभयत्रापीति । अथ वा युक्तोऽयमेव सन्देहो यतो न शुद्धो धात्वर्थः

१. धात्वर्थान्तरविधानेनेत्यारभ्य भेदकत्वेऽवस्थिते इति यावत् आ० मा० न पठति ।
२. ०रोपन्यासस्य आ० मा० ।
३. भावनाभेदो न० आ० मा० ।
४. सकलवेदैकार्थता आ० मा० ।
५. ०ख्यात प्रत्ययेनेति आ० मा० ।
६. कदाचित् नास्ति आ० मा० ।

तस्या एव शब्दान्तरादि भेदकं भविष्यति, अपूर्वस्यानभिधेयत्वात् कर्मभेदानुनिष्पाद्येव तदिति न पृथग्विचारमर्हति । प्रासङ्गिकश्च धात्वर्थैकत्वोपन्यासः कथमप्यसार्वत्रिकः सन् यज्यादिषु भविष्यतीति नातीव तन्त्रीकर्तव्यः । ततश्चैतदपि संशयकारणं पूर्वपक्षवादिनः प्रतिभाति किं धात्वर्थान् प्रत्युपादीयमाना भावना प्रत्येकं समाप्यते, अथ वा ते तां प्रत्युपादीयमानाः संहत्य विशिंषन्तीति । किं तावत् प्राप्तं संहत्येति । तत्र समुदायश्चिकीर्षितः समुदायादेकमपूर्वं न वाशाब्दः समुदाय इत्यादिषु पुनः पुनः समुदायशब्दोच्चारणादपूर्वैकत्वाभिधानाच्च तिसृभ्यो भावनाभ्य एकमपूर्वमिति पूर्वः पक्षः । इयं चोपपत्तिः ।

अदृष्टं प्रथमं तावन्नास्तीत्येवं प्रतीयते ।
तथैव निश्चयश्चात्र दृष्टं चेन्न विरुध्यते ।।
दृष्टश्रुतविरोधे तु सत्यदृष्टं प्रकल्प्यते ।
एकेन चाविरोधित्वे सिद्धे नानेककल्पना ।।

**क्रियानुरक्ततदव्याप्यवचनेन कर्मशब्देनाभिधीयते क्रियाभेदमन्तरेण च भिन्नापि धात्वर्थाः एकमनुष्ठेयं भवति । तेनानुष्ठेयभेदवाचिना कर्मभेदशब्देन भावनाभेदोऽप्युक्तः । तत्र च धात्वर्थभेदस्यान्यत्वं[1] सिद्धित्वाद्भावनाभेद एवात्र[2] विवक्षि[त]त्वात् प्रधानं भवति । तेन धात्वर्थानुरक्तभावनाविषयत्वात् कर्मशब्दस्य तद्विषय एव [3]संशय इति । एवमपूर्वस्याविचार्यत्वमुक्तं पूर्वपक्षभाष्यञ्च तद्विषयमन्यथा व्याख्यास्यते । धात्वर्थ[4] भेदोपन्यासस्तु यद्यपि भविष्यति तथापि असार्वत्रिकत्वान्नासौ प्राधान्येन पूर्वपक्ष इत्याह—प्रासङ्गिकश्चेति । ततश्च भावना भेदाभेदसंशये[5] परमार्थो येन कारणेन स्वपक्षसम्भावनां दर्शयन् पूर्वपक्षवादी सिद्धान्ते सन्देहमापादयति तदपरमप्येतदित्याह—ततश्चेति । त्रेधा [6]प्रतिभानं पूर्वपक्षस्य दर्शयति—तत्र समुदाय इति । भिन्नानां तावत् समुदायो भवति । तत्र भावनाभाव्यम-**

---

१. ०स्यात्रासिद्धत्वात् आ० मा० ।
२. एव विवक्षितत्वात् आ० मा० ।
३. सन्देह आ० मा० ।
४. धात्वर्थभेदो प० आ० मा० ।
५. सन्देह आ० मा०
६. प्रविभागम् आ० मा० ।

तदेवाह—

विरुध्यमाने कल्प्यः स्याज्जायते तेन सोऽर्थवान् ।

दृष्टः श्रुतो वा भवतीति । तत्राप्येकानेकार्थकल्पनयोर्विशेषश्चेद् गुरुलाघवं प्रति न गम्येत ततोऽनेकोऽपि कल्प्येत, गम्यते चासौ । तस्मात् समुदायादेकमपूर्वम् । तत्रैतत् स्यात्, केन भावनासमुदायश्चोदितो यस्मादेकमपूर्वं स्यादित्यत आह—न चाशब्दः समुदायोऽवयवशब्दैरेव चोदितत्वात् । अथ वेति, धात्वर्थत्रयानुरक्तैकभावनापक्षपरिग्रहः । तस्याप्युपपत्तिः ।

प्रत्ययार्थप्रधानत्वात् प्रतिधातु न भिद्यते ।

तत्रोपादीयमानत्वाद्धात्वर्थाः संहताः पुनः ॥

यदि हि धात्वर्थानां प्राधान्यं भवेत्ततो भावना तान् प्रत्युपादीयमाना प्रतिप्रधानं भिद्येत । भावप्रधानत्वाच्चाख्यातस्य प्रकृतिप्रत्यययोश्च प्रत्ययार्थशेषत्वादरुणैकहायन्यादिवद् यागादिभिः संहृत्यैका भावना विशेष्यते । यद्यपि प्रधानानां गुणानुरोधेनावृत्तिरयुक्ता तथापि केवलप्रकृतिप्रत्ययप्रयोगासंभवादवश्यं तावद्धातुसंबन्धार्थं प्रत्ययः पुनरावर्तयितव्यः । यदि तु केवलः प्रत्ययः क्रीणातिवच्छ्रूयेत, ततः सकृदुच्चरित एवारुणादिभिरिव धातुभिः संबध्येत, अपदत्वान्न स्वतन्त्रः श्रूयत इत्यावर्तते । दृष्टा च विशेषणसंबन्धार्थमावृत्तिः आयुर्यज्ञेन कल्पतां 'दध्ना जुहोति' 'पयसा जुहोति' 'ऐन्द्रवायवं गृह्णाति'

पूर्वमेकं समुदायादिति वदन् भावनासमुदायं वदन्तीति[1] । प्रतिप्रधानं भिद्येतेति[2] । ननु आवर्तेत इति वक्तव्यम्, सत्यं, यदि सकृदुपात्तानेकैः सम्बध्येत पुनरुपात्ता तु धात्वर्थोद्देश्येन [3]प्रकारान्तरन्यायेन भिद्यते । न हि यागानुरक्ता प्रतीता जुहोतीत्यत्र प्रत्यभिज्ञायते । प्राधान्येन तु भावनामात्रे निष्कृष्टानूदिते धात्वर्थान्तरविधिरिति । [4]साचप्रधानत्वादिति । विशेषप्रसिद्धेः । प्रकृतिप्रत्यययोश्चेति सामान्यप्रसिद्धेरपीति । गुणानुरोधेना[5]वृत्तिरिति । अभिधानावृत्तिरिति । तथापीति । न धात्वर्थतन्त्रत्वादावर्तते किन्त्वन्यथा तत्सम्बन्धप्रतिपादनासम्भवादिति । आयुर्यज्ञेनेति । ननु तत्र भिन्नाः क्लृप्तय उक्ताः । सत्यं विशिष्टभेदादर्थभेदेन मन्त्रवाक्यभेदार्थं न तु विशेष्यांशभेदात् । एवं ग्रहणस्य दृष्टार्थसंस्कारात्मको[6] भेदाभावाद् द्रव्यदेवतान्तर-

१. वदतीति आ० मा० । २. प्रकरणान्तरन्यायेन आ० मा० ।
३. भावनाप्रधानत्वादिति आ० मा० । ४. ०न प्रवृत्तिरिति आ० मा० ।
५. ०रात्मनो आ० मा० ।

'मैत्रावरुणं गृह्णाति' इत्येवमादिषु । तथानुष्ठानावृत्तिरपि ज्योतिष्टोमस्यानेकद्रव्यदेवतासंयोगसंपादनार्था दृश्यते । तस्मादर्थैकत्ववशेन सर्वमिदं यजतिददाति जुहोति विधानात्मकमेकं वाक्यमेकं कर्मैकं चापूर्वमिति । अयमेव चात्र पूर्वः पक्षः साधुर्न पूर्वोक्तो भावनासमुदाय संभवात् । कुतः,

प्रसिद्धे भावनाभेदे भाव्यभेदो नियोगतः ।
न चासां समुदायत्वमैकशब्द्याद् विनेष्यते ॥

यदि हि भावनाभेदं पूर्ववाद्यभ्युपगच्छत्येव ततः सा भावयितव्या अपूर्वभेदादृते नैव भिद्यत इति तद्भेदेऽपि सिद्धे किमनेन कृतं स्यात् । अपि च समुदायत्वापादनमेकशब्दसंयोगात् समुदायानुवादरूपेण वा भवति । यथा य एवं विद्वान् पौर्णमासीं यजते इति । फलादिसंबन्धेन वा यथा राजसूयेन स्वाराज्यकाम इति । न त्विहैकमपि पश्यामो येन समुदायत्वमध्यवस्येम । ननु ज्योतिष्टोमेनेत्येष समुदायवचनो भविष्यति । न, तस्य यजिसामानाधिकरण्येन तन्मात्रवचनत्वात् । तस्मान्नैष पक्षः । एवं तु भाष्यग्रन्थो नेतव्यः । किं तावत् प्राप्तं धातुत्रयानुरक्तमिन्द्रायुधमिवैकं कर्मेति । तत्सिद्ध्यर्था त्वियमुपपत्तिः । एवमल्पादृष्टकल्पना भविष्यतीति । कर्मभेदे हि बह्वदृष्टकल्पना निष्प्रमाणिकाभ्युपगन्तव्या । तस्मात् समुदायश्चिकीर्षित इत्याद्यैकस्यैव कर्मणोऽवयवाभिप्रायेणोक्तम् । अतो यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति, उत्तरो भावयेदित्यादि निगमनम् । अथ वेति प्रमादलिखितं मन्यन्ते । शक्यं त्वेतत्

सम्भावनार्थमावृत्तिरित्यभिप्रेत्योदाहरणमिति । धात्वर्थैकत्वस्याङ्गीकृतो भाष्यकारेणोपन्यासः । दर्शितं च प्रासङ्गिकत्वादप्राधान्यं केवलं [1]व्याकरिष्यते । तेन द्वयोरुपन्यस्तयोरुत्तरस्य [2]प्राधान्यं न पूर्वस्येत्याह—अयमेव चात्रेति । एकशब्दसंयोगस्य समुदायहेतुत्वं द्वेधा विभजति । समुदायानुवादरूपेण वेति । 'यजतिनानूद्यमानेषु [3]गुणेषु पौर्णमासीमित्येकः शब्दः समुदायीकरणार्थं एव । राजसूयेनेति तु फलसम्बन्धपरत्वान्न समुदायीकरणार्थः । युगपत्त्वेकशब्दोपात्तानामेकफलसम्बन्धात् फलोपाधिरिव समुदायः सम्पद्यते । यस्य राजसूयेनेत्येकवचनेनोपादानमिति । न तस्य केवलं य जतीति । यदि हि अस्मात् प्रागेकापूर्वान्वयी समुदायः सिद्ध्यते तदेकदेशग्रहणेन तस्योपादानं स्यादपि नत्वनेनैव समुदायीकरणमिति । ददाति जुहोत्योरिति । ददातौ

१. व्याख्या करिष्यते आ० मा० । २. पारमार्थिकत्वम्—आ० मा० ।
३. यागेषु आ० मा० । ४. न त्वेकेनैव आ० मा० ।

समर्थयितुं, द्वे ह्येते पूर्वपक्षोपपत्ती *भाष्यकारेणोपन्यस्ते*। तत्रानेकादृष्टकल्पनादोषं पूर्वमुपन्यस्य *अथ* वेत्युपपत्त्यन्तरमाह। एतदुक्तं भवति। किमेकादृष्टकल्पनोपपत्त्याथ वा शब्देनैवैकां भावनां प्रतिपादयामः। पूर्वार्धभेदेऽपि प्रत्ययैकत्वेनाभिन्नार्थप्रतीतेस्तद्दर्शयति। तथा ददातीति पूर्वो ददात्यर्थमुत्तरस्तमेव भावयेदिति। एवं प्रतिभाति तमेव धात्वर्थं भावयेदिति। तत्त्वयुक्तम्, सर्वत्र धात्वर्थभाव्यत्वप्रतिषेधात्। न चैतत् पूर्वपक्षवादिनोऽपि क्वचिदुपयुज्यते। तथानुवदतीति न शक्यं वदितुम्। तस्मादेवं वाच्यं पूर्वो ददात्यर्थ उत्तरः पुनर्यो यजतेः परेणांशेनोक्तस्तमेव भावयेदित्येवं धात्वर्थान्तरसंबन्धार्थमनुवदतीति। एवं जुहोतीत्यत्रापि। तथा च यजेतेत्यत्रैवं नाभिहितं, न हि तत्र पूर्वतरप्राप्ता भावनास्ति यानूद्येत। यदि धात्वर्थभाव्यत्वमभिधीयेत तदविशिष्टं तत्रापीति। न तद्वर्जमुत्तरयोरेव ब्रूयादतो भावनैकत्वप्रतिज्ञानाभिप्रायमेतत्। तस्मादेका भावनापूर्वं च। यद्वा यजतिशब्देन विहितमिति—धात्वर्थैकत्वं वदति स्वत्वत्यागांशसमत्वात्। अथापि लक्षणया ददाति जुहोति यजेतेत्यस्यानुवादस्तथापि कर्मान्तरनिमित्तादृष्टकल्पनातः सैव ज्यायसीत्याश्रीयते। न वानुवादे लक्षणा दोषः। गुणविध्यर्थस्त्वनुवादः। एकत्रात्रेयः संप्रदानं हिरण्यं च प्रदेयं विधीयते। इतरत्र दाक्षिणानि विधीयन्ते। ननु नामधेयत्वान्नैवायं गुणविधिः। कर्मविधानपक्षे ह्येतस्य नामधेयत्वमनुवादे तु वाक्यानर्थक्यप्रसङ्गादेकान्तेन गुणविधिरभ्युपगन्तव्यः। तदा च यजति ददाति जुहोतय इति धात्वभिप्रायकम्। एकं कार्यमेकं धात्वर्थं तदेतरत् तदर्थमिति वा न्यायेनैकमपूर्वं गमयन्तीत्यर्थः। तस्मान्न कर्मभेद इति। अत्रोच्यते—

**जुहोतौ च यजेतेत्यस्यानुवाद इति। धात्वर्थैकत्व[1] पूर्वपक्षे *भाष्याक्षराणि* योजयति—तदा चेति। तस्मादेकमपूर्वमिति *भाष्यं* योजयन् पूर्वस्य प्रयोजनं कीर्तितवान्। अत्र यजिरेवापूर्वं गमयति। इतरयोर्दृष्टार्थत्वात्। तत्कथं [2]त्रिभ्यः एकापूर्वोत्पत्तिरित्याशङ्का। तेनाह—तदेतरत् तदर्थमिति चेति। न च समुच्चयमिति। नानेन विकल्प आपद्यते सिद्धान्तानुपयोगात्। किन्तु तुल्यबलत्वा[3]सम्भवान्नैकस्यां त्रयसन्निपात इत्युक्ता सन्निपतेयुरपि यद्यविरोधात् समुच्चीयेरन् न त्वेतदस्तीत्युच्यते। सत्यप्येकार्थत्वे यदि सापेक्षता**

---

१. धात्वर्थैकत्वस्य पूर्वपक्षत्वे आ० मा०।

२. त्रिभ्य अपूर्वमित्याशङ्क्य तेनाह आ० मा०।

३. बलत्वाभावात् आ० मा०।

धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम्।
उत्पत्त्यैकानुरक्ता हि नान्येनाप्यनुरज्यते ॥

यद्यप्येको भावनावचनस्तदर्थस्य च प्राधान्यं, तथाप्यनुरञ्जकधात्वर्थभेदाद् भावनान्तरं प्रत्येतव्यम् । न ह्येकस्यास्त्रयो धात्वर्थाः सन्निपतितुं समर्थाः । न च समुच्चयं प्रतिपद्यन्ते करणांशावरोधित्वेन तुल्यार्थत्वादन्योन्यनिरपेक्षाभिन्नशब्दोपादानाच्च । न ह्येको धातुस्त्रीन् धात्वर्थानुपादत्ते । न चैकस्मिन् पदे धातुत्रयं परस्परापेक्षं प्रत्ययं प्रत्युपादीयमानं संभवति । धातो [पा० सू० ३।१।९१] इति प्रत्ययोत्पत्तौ विवक्षितैकत्वसंख्यत्वात् । न चैतत् पदत्रयमेकवाक्यतां गच्छति । विभज्यमानसाकाङ्क्षत्वैकार्थत्वयोरभावात् । न वैकापूर्वकल्पनात् एकवाक्यतापद्यते । समेषु वाक्यभेदः स्यात् [मी० सू० १।१।४७] इत्यत्र प्रत्याख्यातत्वात् । न चापूर्वभेदाभेदपूर्वकौ कर्मभेदाभेदौ, विपरीताभ्युपगमात् । यदि च केवलैव भावना केनचिदुपादीयेत ततोऽरुणादिभिरिवैकवाक्यगतैर्दध्यादिवद् वा भिन्नवाक्यगतैरेकैवानूद्यानूद्य युगपद्वा विशिष्टविधानन्यायेन यागदानहोमैरनुरज्येत, न त्वस्याः पृथगुत्पत्तिरस्तीत्यवश्यं ददात्यादीनामेकेन समस्तैर्वोत्पादयितव्या । तत्र यदि तावत् समस्तैरुत्पाद्यते, तत उत्पन्नायाः पुनरुत्पत्त्यसंभवात् सिद्धं कर्मान्तरत्वम् । अथैकेन तावदुत्पाद्येत, तत्रापि विनिगमनायां हेतोरभावाद् विशेषो न ज्ञायते । येन केनचिदुत्पत्तिरप्येतस्याः प्रतीयते ततस्तद्‌व्यतिरिक्तेन धातुना नानुरज्यते । येनैव ह्येकेन धातुना कृतानुबन्धा भावनोत्पन्ना तस्यैव श्रौतत्वेन बलीयस्त्वान्न पदान्तरस्थैर्धात्वर्थैः सह विकल्पः संभवतीति, ततः प्रच्युतैस्तैः स्वपदप्रतिपादितमवश्यं भावनान्तर-

स्यात्, स्यात् समुच्चयः । न च साप्यस्तीत्याह—अन्योन्यनिरपेक्षेति । एकशब्दोपादानाद्वा राजसूयवत् सापेक्षता स्यात् सापेक्षत्वाद्वा भिन्नयोरपि शब्दयोरग्नीषोमवत् न त्वत्रोभयमप्यस्तीति । भिन्नशब्दोपादानमाह—नह्येको धातुरिति[1] । नैरपेक्ष्यमाह—न चैकस्मिन् पद इति । न भिन्नपदोपात्तानामपि समुदाये वाक्यसमाप्तेः परस्परापेक्षत्वमेकवाक्यत्वासम्भवादित्याह—न चैतत् पदत्रयमिति । एवं [2]समुदायासंभव उक्तः । यथा च तुल्यबलत्वादेकस्या [3]मनेकसन्निपातस्तदुच्यते । यदि च केवलैवेति । एवं हि तुल्यबलता स्यात् । तत्र भिन्नवाक्यगतैरनूद्यानूद्य एकवाक्यगतैर्विशिष्टविधानन्यायेनेति ।

---

१. न ह्येको धातुरिति नैरपेक्ष्यमाह आ० मा० इत्यत्र नास्ति ।
२. समुच्चयासम्भव आ० मा० ।
३. ०मनेकोपनिपातः आ० मा० ।

मनुरञ्जनीयम्। एवमेकैकत्र स्वपदोपात्तधात्वर्थानुरञ्जनमौत्पत्तिकं श्रौतं च, धात्वर्थान्तरानुरञ्जनमुत्पन्नभावि वाक्यप्रकरणलभ्यं च। ददातिर्हि यजत्युपनिबद्धां भावनां निषेधन् स्ववाक्योच्चारितां पदान्तरानुवर्तिनीं प्रकरणाद् वाक्याच्च प्राप्नुयादेवं यजतिरपि तत्र तत्रेति योज्यम्। ननु च ददातिपदेऽप्यसौ पुनः श्रूयमाणा सैवेति प्रत्यभिज्ञायत इति न वक्तव्यं वाक्यप्रकरणाभ्यां ददातिसंबन्धो भवतीति। सत्यं भावनामात्रसंबन्धः श्रुत्यैव प्रतीयते। यागानुरक्तभावनासंबन्धे तु न श्रुतिव्यापारो युज्यते। ननु चैकत्वादेवास्या एवं भेदव्यवहारो न युक्तः। केन वा कर्मभेदपक्षेऽपि सामान्यैकत्वं नास्युपगम्यते। नन्वत्र

**स्ववाक्योच्चारितमिति। यत्रास्या भावनायाः स्वमुत्पत्तिवाक्यं ददाति वाक्यादन्यदित्यर्थः। क्वचित्स्ववाक्यानुच्चरितमिति पाठः। तां प्रकरणाद् वाक्यैकत्वे पदान्तरव्यपदेशात् तद्वर्तिनीं वाक्यात् प्राप्नुयात्। अत्र चात्यन्तनिर्मूलत्वं सापेक्षतया वदतां निराकृतवैकवाक्यता सम्प्रत्यङ्गीकृत्यैकवाक्यतां बलाबलमुच्यते। अनेनैवाभिप्रायेणैकवाक्यत्वेऽपि यदि युगपद्[1] द्वयनिपातो भवति तदा द्वाभ्यां सिद्धावगमात्तयोः सापेक्षता स्यादत्र तु पदार्थपूर्वकत्वाद् वाक्यार्थस्य पदार्थावगमावसरे धात्वर्थग्रहणं भावनाया न पदान्तरस्य धात्वर्थापेक्षं प्रतीयते। ततश्च नैरपेक्ष्याद् बलवता दुर्बलस्य बाध इति। सम्प्रति शब्देनाभेदं वक्तुमशक्नुवन् वस्तुलक्षणेनाभेदेन प्रत्यवतिष्ठते— ननु चैकत्वादिति। न चैवं सकलवेदैकार्थापत्तिर्दूषणमभेदबाह्यनुगुणत्वात्। न चामुमेव पूर्वपक्षमाश्रित्य विचारोपक्रमो यजत्युत्पादितभावनानुवादस्येतरत्रोपन्यासात्। नहि तदा लोकसिद्धस्य व्यापारसामान्यस्य व्रीह्यादिवदुत्पत्तिरस्ति। न चानेकैर्विधीयमानस्यापि भेद इति। अत्र सत्यपि तत्त्वैकत्वेऽपूर्वभेदान्वयिव्यवस्थित[2]धर्मभेदानुष्ठानभेदप्रतिपत्तौ शब्दान्तरादिप्रामाण्याभ्युपगमेनाभिमतसिद्धौ तत्तेनोत्तरं विवक्षन् आह—केन वेति। एकत्वमात्राभिधानं भवतोऽभिधानमूलप्रमाणानुसारेण सामान्यविषयं तच्चास्मत्पक्षस्याबाधकमिति। इतरोऽभिधानमूलस्य व्यक्त्येकत्वविषयतामाह—नन्वत्रेति। व्यावृत्तिधीसम्भेदरहितं ह्येकत्वज्ञानं व्यक्त्येकत्वविषयमेव भवति। न च फलाश्रयोपाधिपृथक्करणेन व्यापारात्मनि बुद्धयो व्यावर्तन्ते। तेन गकारवदभेद इति।**

---

१. ०युगपद्द्वयनिपातो० आ० मा०। २. धर्मविषयानुष्ठान आ० मा०।

व्यक्तिनानात्वेऽपि नास्ति प्रमाणम् । कथं नास्ति । यदा भिन्नधात्वर्थसंनिधानादसौ नानात्वेन प्रतिशब्दमुपलभ्यते । ननु च शब्दवदेव परोपाधिको भेदप्रत्ययो न पारमार्थिको भावनाभेदः स्यात् । नैतदेवम्, शब्दस्यापि गकारादिभेदः पारमार्थिको नैव कस्यचिदनिष्टस्तद्वदिहापि यागादिभेदे सिद्धे शब्दस्थानीयमनुष्ठानसामान्यं निरूप्यते । न च यथा शब्दस्यार्थान्तरभूता ध्वनयः द्रुतादिबुद्धिमपारमार्थिकीं कुर्वन्त्येवमत्र यागादयोऽदूरव्यतिरिक्ताः । तस्मादस्ति भेद इति ।

सिद्धान्ती[1] तु किं प्रमाणान्तरानुसारेणास्मादेव शब्दान्तराद् भेदः प्रतीयत इत्याह— कथं नास्तीति । परस्तु यदि[2] धात्वर्थसन्निधिप्रसूतो भेद औपाधिकस्तर्हि शब्दस्येव ध्वन्युपाधिरित्याह— ननु चेति । तत्रान्यसन्निधिप्रसूतत्वस्यौपाधिकत्वे कारणत्वं व्यभिचारयति—नैतदेवमिति । एतेनैतदुक्तं भवति—अन्यसन्निधिप्रसूतोऽपि भेदप्रत्ययो यो धर्मानिवोपाधिमत्यध्यस्यन्नुदेत्यसावौपाधिको गकार इवानुनासिकादिभेदभिन्नः । यस्तु धर्मावधीरणेन वस्तुस्वरूपविषयो नासावौपाधिको गकारादिष्विव शब्देषु । अयं चानन्तरवद् द्रष्टव्य इत्याह—तद्वदिहापीति । येषां तावत् क्रियात्मको धात्वर्थस्तेषां व्यावृत्तिबुद्धिविषया यागादय एवं फलावधिमाद्यपरिस्पन्दात् प्रभृति पूर्वापरीभावं भावनामारभन्ते । सा तच्छरीराद् भेदे भिन्नैव भवति । [3]शक्त्यात्मिका धात्वर्थभेदाभिन्ना सम्भवति । शक्तस्य हि शक्योदयानुकूल्यं शक्तिः, न चान्योदयानुकूल्यमन्यस्मिन् भवति । तदिदमुक्तं न च यथा शब्दस्य ध्वनय इति । ततश्च भावनाभेद[4]समवायिव्यापारसामान्यं शब्दत्ववत् प्रत्यभिज्ञागोचरो भवति । येषामव्यापारात्मा व्यापाराधीननिष्पत्तिर्धात्वर्थस्तेषां धात्वर्थक्रियैवोद्दिष्टाभिमत[5]फलभावना भवति । सा त्वर्थशक्त्यात्मिका धात्वर्थभेदेनाभिन्ना भवितुमर्हति । शक्तस्य हि शक्योदयानुकूल्यं शक्तिः । न चान्योदयानुकूल्यमन्यस्मिन् भवति । तेन

" ज्ञेयभेदे यथा ज्ञानं साध्यभेदे तथा क्रिया ।
रूपस्यैवान्यरूपत्वाद् भिद्यतेऽनुपचारतः ॥

दूरे व्यतिरिक्तेति च सत्येव व्यतिरेके परस्परानपेक्षया[6] स्वरूपध्वनिशब्दयोरिव निवारयति । तस्माद् वस्तुभेदे सिद्धे शब्दादप्युत्पत्त्येकानुरक्ता हि नान्येनाप्यनुरज्यत इत्येवं सिद्धो भेद इत्युपसंहरति—तस्मादस्ति भेद

---

१. सिद्धान्तवादी आ० मा० । २ यदि भिन्नधात्वर्थं आ० मा० ।
३. शक्त्यात्मिकेत्यारम्भ अन्यस्मिन् भवतीति यावत् आ० मा० न पठति ।
४. समन्वयिव्यापार आ० मा० । ५. फलाफलभावना आ० मा० ।
६. स्वरूपसिद्धिध्वनि आ० मा० ।

आह च—

यथा रक्तोपधानेन निरुद्धे स्फटिके सति ।
कृष्णादिचोदनायुक्तं गम्यते स्फटिकान्तरम् ।।
तथैकधातुसंबद्धभावनाचोदने सति ।
भावनान्तरगामिन्यः स्युर्धात्वन्तरचोदनाः ।।

यस्मात्तु प्रकृतिप्रत्यययोः स्वार्थाभिधाने स्मृतेराचाराच्च नित्यविवक्षितक्रमत्वेन पूर्वप्रयुक्तप्रकृत्यर्थव्याप्तेषु प्रतिपत्तृषु प्रत्ययांशः संनिपतन् कृतानुबन्धमेव स्वार्थं वदति तस्मान्न कदाचित्प्रत्ययार्थः शुद्धो लभ्यते । यथोक्तं प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहेति । प्रयोगवाक्यशेषभावेन हि समुदायस्य सत्तासंबन्ध इति । एकापूर्वकल्पनया हि समुदायानुरक्तभावनाकल्पनमाश्रितं फलसंबन्धनिमित्ता वा अपूर्वकल्पना । प्रयोगवाक्यशेषभावेन वोत्पत्तिवाक्यानां फलसंबन्धो भवति न स्वरूपैः । अवधृतस्वरूपाणि च कर्माणि प्रयोगवाक्येन गृह्यन्त इत्यवगते भेदे न शक्यान्येकीकर्तुम् । न च ददातिजुहोत्योः प्रयोगवाक्यशेषभावं पश्यामः, यजेत स्वर्गकाम इति केवलयागश्रवणात् । न च तेन दानहोमौ लभ्येते । स्वार्थत्यागप्रसङ्गादुभयाश्रयणे वा युगपच्छ्रुतिलक्षणापत्तिर्दोषः । तस्मान्न समुदायकल्पनास्ति । अतश्च धात्वन्यत्वेन पदान्तरत्वात् केवलविशिष्टता गम्यते । न च

इति । उपधानान्तरावरुद्धे वस्तुन्युपधानान्तराप्रवेशेन भेदे श्लोकोपन्यासः । —आह चेति । उत्तरश्लोकोक्तावरोधोपपादनं—यस्मात्त्विति । तु शब्दोऽवधारणे । अथ वा पूर्वोपपत्तिव्यवच्छेदार्थः उत्पत्त्येकानुरक्ता हीति तु बलाबलप्रदर्शनम् । पूर्वपक्षवादिनिरूक्तरीकरणार्थमस्माभिरुक्तं गुणान्तरन्यायस्तु तथा स्यात् । एवं त्वत्र भेदो यस्मात् प्रकृत्यर्थानुरक्तबुद्धिः प्रत्ययात् सामान्यविषयशक्तिमतोऽपि भिन्नप्रकृत्यर्थोपरागोपपादितान् भावनाविशेषानेव परस्परव्यावृत्तत्वात्[1] प्रतिपद्यते । तस्मान्नासौ भावयेदित्येवं रूपः शुद्धो लभ्यते । —विशेषक इत्याहेति । अभिधानमेव प्रत्ययस्य पूर्वावगतं प्रकृत्यर्थमुपादाय तदवच्छिन्नस्वार्थविशेषधीहेतुरित्युक्तम् । तेन नात्र सामान्याकारेण बुद्धिरुत्पन्ना भिन्नाभिन्नत्वव्यक्तिविषयत्वेन सन्दिह्यमानान्यतरनिर्णयाय हेत्वन्तरमपेक्षते, किन्तु श्रुतिरेव भिन्नविषया नाभेदशङ्काविषय इति ।

१. व्यावृत्तान् पू० मा० ।

ज्ञानान्तरेण निवर्तते। न च धात्वर्थैकत्वम्। आसेचनपरस्वत्वापादनाभ्यधिकत्वात्। न च त्यागमात्रलक्षणा, स्वार्थवृत्तित्वेनापि वाक्यसमवायोपपत्तेः। न च दाक्षिणानि नाम गुणः कश्चित्प्रसिद्ध इति सामानाधिकरण्यान्नामधेयत्वमेव युक्तम्। अतश्च वाक्यानर्थक्यं मा भूदिति होमो विधीयते। ददातिना तु यागमनूद्य गुणे विधीयमाने हिरण्यात्रेयसंबन्धे वाक्यभेदप्रसङ्गाद् गुणादपि भेदः संभवतीत्यत्रैकगुणो निर्गुणो वान्यो ददातिरुदाहर्तव्यः ॥१॥

## [ अभ्यासाधिकरणम् ]

शब्दान्तराधिकरणप्रत्युदाहरणरूपेणाभ्यासस्य पूर्वपक्षः सुखमभिधीयत इति तदनन्तरमारम्भः। तत्र 'समिधो यजति' 'तनूनपातं यजति' इत्यादिषु समिदादिशब्दानपोद्धृत्य यजतीत्येतत् पञ्चकृत्वोऽभिहितं किमेकस्य कर्मणो वाचकमथानेकस्येत्युदाहृतं, तदाक्षिप्यते—

गुणो वा नामधेयं वा समिदादिपदं भवेत्।
ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति॥

षडपि भेदहेतवः पृथग्भूताः स्वसामर्थ्यमात्रव्यापारफला दर्शयितव्याः। तद् यावदत्र गुणनामधेययोर्भेदकरत्वं नापनीयते न तावदभ्यासस्य परभागलाभोऽस्तीत्यन्यदुदाहर्तव्यम्। न च तत्संभवति। कुतः—

**प्रतिपादितो धात्वर्थभेदाद् भावनाभेदः। तेन नाशङ्कितव्यमभ्यासस्य यागान्तरविधिनापि साफल्यान्न भावनाभेदकत्वमिति। न च भावनैव भिद्यतां किं धात्वर्थभेदेनेति वक्तव्यं व्यक्तिविशेषबुद्धिप्रसूतिहेतुर्हि धात्वर्थोपरागो[1] यथा धात्वर्थान्तरोपरक्ताद्भेदं बोधयत्येवं पुनः प्रतीयमानस्तद्व्यक्तित्वम्। तथा च यत्र भिद्यते भावनामात्रं धात्वर्थो नेति [2]वक्ष्यते। तत्रानुबन्धविरहप्रतीतेरयजिश्रुतेः। तेन भावनाधात्वर्थयोरव्यभिचारात् स धात्वर्थैव भावना कर्म शब्देनोपात्ता भिद्यते, तेनेति चिन्त्यते। तदेतद् दर्शितं शब्दान्तराधिकरणे ॥१॥**

**प्रत्युदाहरणेति। धातुभेदे तदर्थभेदाच्चेद्भावनाभेदो हन्त धात्वर्थभेदे तदर्थभेदान्न भावनाभेद इति। [3]षडपि भेदहेतव इति। अन्यथैकप्रदर्शनमिव भेदव्यवहारसिद्धेरितरप्रदर्शन[4]वैयर्थ्यम्। एकस्मिन् वा प्रमेये द्वयोः प्रामाण्यसम्भवादन्यतरस्याप्रामाण्यमेवेति। परभागलाभ इति। साफल्येन प्रामाण्येन**

---

१. धात्वर्थविशेषोपरागो आ० मा०।　　२. भिद्यते आ० मा०।
३. षड्विध आ० मा०।　　४. वैफल्यम् आ० मा०।

प्रयुज्यते हि वेदेषु नाख्यातं केवलं क्वचित् ।
नाम किञ्चित् प्रयुक्तं चेत्तस्य चोक्तं गतिद्वयम् ।।

'ऐन्द्रवायवं गृह्णाति' इत्येवमादीनि हि सर्वाणि परस्परासंगत्यौत्पत्तिकगुणयोगाद् भिद्यन्ते । 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादीन्यपि 'फलं चाकर्मसंनिधौ, [ मी० सू० २।३।२५ ] इत्यनेन न्यायेन निमित्तं प्रत्युपादीयमानत्वाद् भिद्यन्ते । निमित्तसंबन्धपरत्वाच्च नाभ्यासानर्थक्यमित्यभेदकत्वम् । ये तु पञ्चशारदीयेषु 'तान् पर्यग्निकृतांस्तान्पर्यग्निकृतान्' इत्येवमभ्यासमुदाहरन्ति तेषां प्राकृतपर्यग्निकरणानुवादप्रस्मरणसामर्थ्यं तत् । न वात्र यजतिः श्रूयते यस्याभ्यासाद् भेदः स्यादिति न किञ्चिदुदाहरणम् । यथोदाहृतेष्वेव तु समाधिः ।

चोत्कर्षस्य लाभ इति । ये तु पञ्चशारदीय इति । अस्ति पञ्चशारदीयोऽहीनस्तत्र श्रूयते वैशाख्याममावास्यायां सप्तदशमारुतोस्त्रिवत्सा उपाकरोति । सप्तदशपृश्नीनुक्षगस्तान् प्रोक्षितान् पर्यग्निकृतानितरानालभन्ते । प्रेतरानुत्सृजन्ति । ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्षणस्तान् पर्यग्नीकृत्य तत्र प्रेतरानुत्सृजन्तीति । किमयं संस्कारस्यालंभादेः प्राप्तावसरस्य प्रतिषेधस्तांश्चैवोक्षण इति । तेषामेव प्रतिसंवत्सरमानयनमन्ते च तेषामेवालम्भप्रतिप्रसवं स्त्रीनुक्षण एकैकस्मिन् अहन्यालभन्ते पञ्चोत्तम इति । उतायं कर्मशेष प्रतिषेधः । प्रतिसंवत्सरमन्ये यागाः पशवश्चेति । तत्रानेका[1]पूर्वकल्पनाभयात्तांश्चैवोक्षण इति प्रकृतपरामर्शोपपत्तेश्च संस्कारप्रतिषेध इति पूर्वपक्षः । अत्रोच्यते न चोदनैकवाक्यत्वात् [मी० सू० ११।२।५५] सप्तदशमारुतो[2] त्रिवत्साः सप्तदशपृश्नीनुक्षण इति चतुस्त्रिंशद् द्रव्याण्युपादाय देवतासम्बन्धं बोधयद्चतुस्त्रिंशद्यागानेकं वाक्यं विधत्ते । तेषां पूर्वेषामिवोत्तरेषामपि तत्कालप्रयोगावगमान्न कालान्तरगमनं सम्भवति । एवं सम्वत्सरे राजीवानामुक्षणं च चतुस्त्रिंशद्द्रव्याणामानयतिना सम्बन्धः । स राजीवासु देवतापदानुषङ्गेण गुणतो भिन्नान् यागान् विदधदेकत्वाद् वाक्यस्य उक्षस्वपि विधत्ते । एवं यागभेदे द्रव्यभेदे च प्रतीयमानेन संस्कारप्रतिषेधप्रतिप्रसवौ सम्भवतः । तांश्चैवेति तज्जातीयापेक्षया भविष्यति । किञ्च प्रतिवर्षं पर्यग्निकरणदर्शनं कर्मैकत्वे कृतत्वान्नोपपद्यते न च विधीयते, [3]तस्योत्सर्गस्य विधाने वाक्यभेदात् । न चालम्भनस्य प्रतिप्रसवः सम्भवति ।

---

१. अनेकयागापूर्वं आ० मा० । २. मारुती आ० मा० न पठति ।
३. तस्योत्सर्जनस्य आ० मा० ।

विधीयते । तदा तत्स्वरूपोत्पत्तिरपि तावदनुक्ता सती क्लेशेन लब्धा किमुत पदार्थान्तरविधानं, तदाह—भवतिसंबन्धाभावान्नानेन[1] संबध्यते । यथाग्नेयः पौर्णमास्यामित्यत्रापि स्वरूपोत्पत्तिक्लेशः पूर्वोक्त एव द्रष्टव्य इति । तमप्रदर्श्यैवाष्टाकपालसंबन्धाभावः प्रदर्शितः । एवं पौर्णमासीविशिष्टान्यतरानुवादेऽप्यनूद्यमानस्योत्पत्तिः पौर्णमासीसंबन्धो विधीयमानस्याप्युत्पत्तिरितरेतरसंबन्धश्चेत्यतिगौरवम् । पौर्णमासीपदतन्त्रत्वेऽप्युभयोरुत्पत्तिः कर्तव्या परस्परं संबन्धश्चेति दोषौ । न चारुणैकहायनीवत्परस्परनियमसिद्धिर्विशिष्टविधानदोषात् । अतोऽष्टाकपालाननुरक्तया पौर्णमास्याग्नेयः संबध्यते तदननुरक्तया वाष्टाकपाल इत्यसंबन्धः । एतत्परिहारार्थं परस्परसंबन्धं द्रव्यदेवतयोः प्रथममेव कुर्वन् उभयस्वरूपोत्पत्तिरन्यतरस्य चान्यतरत्र विधानमिति युगपद् विधीयमानपरस्परसंबन्धक्लेशमनुभूय पुनः पौर्णमासीसंबन्धक्लेशः । तत्परिहारार्थमन्यतः सिद्धं देवतासंबन्धमनूद्य केवलकर्मसम्बन्धं दर्शयति । अथ केनचिदाग्नेयः संकल्पित इति । तत्र संकल्पितशब्दवशेन केचिदाहुः केनचिदनुष्ठात्रा संकल्पित इति । न त्वेतद्युक्तमिव । अन्येनार्धकर्मणि तदीयस्य हविषो हरणमिति । तस्माद्धि णिजन्तः संकल्पितशब्दः केनचिद्वाक्येन रुक्कामादियुक्तेन विहित इत्यर्थः ।

विशिष्टविधानदोषादिति । विशिष्टोभाभ्यामेकस्मिन् क्षणे विधीयमाना क्रियोभयोरन्वयमापादयति नान्यथोभयविशिष्टः स्यादिति । [1]अनूदितानाग्नेयादिपदव्यापारादनपेक्षिताष्टाकपालपदाग्निदेवत्यद्रव्यमात्रसम्बद्धा[2] प्रतीयते । एवमष्टाकपालपदात् तदर्थमात्रसम्बद्धा[3] । अतो न नियम इत्युभयनियममन्विच्छतामनङ्गीकृतं विशिष्टविधानदूषणमि[4]त्युच्यते । अथ वा यद्याग्नेयशब्देन देवतामात्रं विधीयते तस्यां नियमः देवताविशिष्टद्रव्यविधानत्वे तत् तच्चोक्तेन न्यायेन नियमं दूषयतीति । एतत्परिहारार्थमिति । प्रथममेव कुर्वन्नन्यतः सिद्धमिति सम्बन्धः । किमित्यन्यतः सिद्धस्य प्रदर्शनमित्यत्र प्रयोजनाभिधानमुभयस्वरूपोत्पत्त्यादिक्लेशमनुभूय पुनः पौर्णमासीसम्बन्धक्लेशो यस्तत्परिहारार्थमिति । तच्छब्दाक्षिप्तो यच्छब्दः क्लेशो य इति । न त्वेतद् युक्तमिति । शास्त्रान्तरविरुद्धं परस्वहरणं विशेषेण यागोपयोगिन इति । रुक्कामादियुक्तेनेति । आग्नेयमष्टाकपालं

१. °न्नाग्नेयेन° इति काशीमुद्रितपाठः ।

१. अनूदितत्वाग्नेयपदव्यापारात् आ० मा० । २. °सम्बन्धः आ० मा० ।

३. °सम्बन्धः आ० मा० । ४. दूषणमापद्यते आ० मा० पु० मा० ।

तत्राहाष्टकपालसंबन्धसिद्ध्यर्थमाग्नेयशब्देऽनूद्यमाने पौर्णमासी गतस्य का देवतेति न ज्ञायते, युगपदुपलक्षणविधिकल्पने वाक्यभेद इति । अनेनैव मार्गेणाकृत्यधिकरणमुखप्रदर्शितैर्वचनव्यक्तिप्रकारैर्वाक्यभेदानन्त्यं प्रपञ्चयितव्यम् । तेनावश्यं विधातव्योऽत्र द्रव्यदेवतासंबन्धः । न च स पूर्वप्राप्ते कर्मणि संभवतीति **गुणश्चापूर्वसंयोग** [ मी० सू० २।२।२३। ] इति कर्मान्तरत्वम् । कर्मान्तरत्वे च सति तदवस्थं रूपावचनमित्यनुवादता । अतश्च बलादेकवचनलक्षणाद्याश्रयणीयम् किञ्च—

न वानन्यक्रियायोगे वाक्यमेतत्समाप्यते ।
न च स्वार्थसमाप्तत्वाद् वाक्यान्तरमपेक्षते ।।

अष्टाकपालो भवतीति नायं पुरुषव्यापारः । न च पुरोडाशव्यापारमात्रं विधातुं शक्यम् । अभावनाविशेषात्मकत्वात् । तत्रावश्यकल्पनीये पुरुषव्यापारविशेषे यागकल्पनापतति, तत्र यद्यपि प्रत्यक्षे लभ्यमाने न युक्तमानुमानिककल्पनं तथाप्यत्रापरिपूर्णे वाक्ये वाक्यान्तरानपेक्षिणि पौर्णमास्यमावास्यावाक्यस्थो यजिरसंनिहित एवेति नानुमानं प्रतिबध्नाति । अनुमिते च सति य 'एवं विद्वान्' इत्यनुवादसरूपत्वादनुवाद एव विज्ञायते । क्रियासामानाधिकरण्याच्च यदाग्नेयोऽष्टाकपाल इत्यादेर्यच्छब्दाद् विलक्षणः कर्तृसमानाधिकरणोऽयं 'य एवं विद्वान्' इत्युपबध्यमानो विधिसामर्थ्यं निरुन्ध्यात् । तथा चोक्तम्—

क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम् ।
कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ।।६।।

एकेष्टिर्यद्यमावास्या सांनाय्यौषधयोस्ततः ।
विकल्पे सति संभारपौर्वापर्यं कुतो भवेत् ।।

कर्मभेदे हि भिन्नविषयत्वात्सांनाय्यपुरोडाशसमुच्चये सति संभ्रियन्त इति समस्तसंभरणं प्रथमोत्तराभिधानं चावकल्पते नान्यथा, प्रथमपक्षे च चतुर्थमप्यपरमस्तीत्युत्तराणीति स्यान्नोत्तरे इति ।।७।।

**निर्वपेद् रुक्काम इति ।** न [1]चानन्यक्रियायोग इति । **भवति क्रियातोऽन्यया यो योगस्तदभाव** इति । क्रियापदैकयोगित्व इति । **येदृशी क्रिया तां पुरुषः कुर्यादित्यविरोधो विधेः प्रवृत्त्यनुवादात्** । यः करोतीति तु **कर्तृप्रवृत्तावनूदितायां विध्यसम्भव इति ।**

१. न चान्यक्रियायोग इति आ० मा० ।

कर्मान्तरपक्षेऽभ्यधिकत्वाद् गुणविधिपक्षे न्यूनत्वात्त्रयोदशचतुर्दशत्वानुवादविरोधः। कुतः,

पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये यदा।
प्रधानाहुतयः सन्ति तदा संख्योपपद्यते ॥

तस्मात्समुदायानुवादाविति सिद्धम्। आह च—

अरूपत्वाद्विधेयस्य प्रकृते शब्दशक्तितः ॥
तत्रैव रूपलाभाच्च समुदायानुवादता ॥८॥

## [ उपांशुयाजाधिकरणम्। ]

इदानीमधिकरणत्रयेण समुदायानुवादापवादः क्रियते। तत्र 'उपांशुयाजमन्तरा यजति' इति तावत्सकलः प्रागुक्तो न्यायोऽस्ति। कुतः,

यागान् विष्ण्वादिसंयुक्तैर्विहितान् रूपवत्तया।
अरूपमन्तरायुक्तमगत्यैवावलम्बते ॥

तेषु तावत्तव्यप्रत्ययेनैकान्तिको विधिः। तत्र यदीदं यागान्तरं कल्प्यते ततः प्राप्तं रूपाज्ञानमदृष्टान्तरकल्पनं च। किञ्च

अजामिकरणं चैषु प्रत्येकमवगम्यते।
जामिदोषेण चोपांशुयाजोपन्यसनं कृतम् ॥

यथोपक्रममुपसंहाराज्जाम्युपन्यासस्याजामितायाश्चैकविषयत्वादेत एव विधयो गम्यन्ते। न ह्यन्तरालवाक्ये तादृगर्थवादो विधिर्वा स्पष्टो दृश्यते। समुदायानुवादप्रयोजनं च कथं नाम 'उपांशु पौर्णमास्यां यजन्' इत्यत्रैकीकृतानां कालसंबन्धे सति सर्वेषां प्राधान्यं स्यात्। ननूपांशुगुणकमिति कथं द्रव्यदेवताव्यतिरिक्तं रूपत्वेनोच्यते। नैष दोषः। सर्वथा येन यागान्तराद् व्यवच्छिन्नो यागो निरूप्यते तदेव रूपम्। शक्यते चोपांशुत्वेनायं व्यवच्छिन्नरूपः प्रत्येतुमिति। अत आह नैवंजातीयकः शब्दः शक्नोतीति। यदि ह्यवयवार्थभेदेन गुणविधिरयं कल्प्येत ततो याजशब्दस्य घञन्तत्वादकृतकुत्वस्यासाधुत्वं स्यात्। अव्युत्पन्ननामधेयत्वे तु नैष प्रसङ्गः। नन्वेवं सतीति नामधेयत्वेऽप्यवश्यं 'तत्प्रख्यं चान्यशास्त्रम् [ मी० सू० १।४।४। ] इत्येवं 'विष्णुरुपांशु यष्टव्यः'

यथोपक्रममिति। यथोपक्रममुपसंहाराज्जामिताजामितयोरेकविषयता। तेन जामिता विषयपरत्वादुपक्रमस्य तद्विधानपरता वाक्यस्येति। किञ्चित्

इत्यादिभिर्विहितं तद्गुणयोगमाश्रित्य प्रसिद्धिरवाप्तव्या ततश्च तुल्यो दोष इति। तत्परिहरति—मा भूदुपांशुयाजशब्दो यजतिशब्दो भविष्यतीति। विधौ ह्यत्यन्तमाञ्जस्येन कार्यं नामधेये तु [1]यजिप्राप्तानुवादरूपेण प्रवर्तमाने किञ्चिद् रूप्यानुगमेऽप्यविरोधः ॥६॥

कर्मचोदना 'उपांशुयाजं यजती'ति न समुदायानुवादः। कुतः—

प्रकृतानामसद्भावाद् गम्यते नानुवादता।
यागो विष्ण्वादिसंयुक्तैर्न हि वाक्यैर्विधीयते॥

यथा वैश्वानरवाक्ये द्वादशकपालेनोपक्रमोपसंहाराभ्यामष्टत्वादय एकवाक्यतामापद्यमानाः पृथग्विधित्वं न प्रतिपन्नास्तथात्रापि 'जामि वा एतदिति' विध्युपक्रमे दोषसंकीर्तनं कस्यचिद्विधीयमानस्याकाङ्क्षितं तदपनयनद्वारेण स्तुत्यर्थमिति गम्यते। जामिता च पुरोडाशयोरन्तराले कस्मिंश्चिदविधीयमाने भवतीति यदन्तरालकालसंयोगेन विधास्यते तस्याजामिकरत्वं प्रशंसेत्यवधारणादुपांशुयाजमन्तरेत्यस्य स्तुत्यर्हत्वेन ज्ञानाद् विष्ण्वादियुक्तेषु च तदपेक्षिताजामिरूपस्तुतिसंकीर्तनादनपेक्षितं विधित्वमनादृत्य स्तुत्यर्थता गृह्यते। न हि विष्ण्वादिसंयुक्तेष्वन्तरालकालसंयोगोऽस्ति येनोपक्रमोक्तया जामितया तद्विधिस्तद्गतं वा जामित्वं स्तावकतयापेक्षितं संबध्येत। अन्तरालकालसंयुक्तस्य पुनर्विस्पष्टजाम्युपक्रमवाक्यविधानार्हत्वात् तद्वशेन चेतरेषां स्तावकत्वोपयोगे सति नानेकादृष्टकल्पनानुबन्धिविध्यभ्युपगमो युक्तः। किञ्च—

विष्ण्वादियागसंबन्धे कृते यागोऽर्थतो भवेत्।
उपसर्जनभूतस्तु श्रौते चैतन्न युज्यते॥

कर्मोत्पन्नस्तव्यप्रत्ययो यागोपसर्जनविष्ण्वादिप्रधानस्तत्रार्थान्निकृष्य यागकर्तव्यता कल्पनीया। न चासौ युज्यते, 'अन्तरा यजति' इत्यनेन प्रत्यक्ष-

सारूप्येति। दर्शपूर्णमासशब्दवदाख्याविकारेण न्यायेन प्रकृतबोधनमिति। उपसर्जनभूतश्चेति। विष्ण्वादिसम्बन्धपरे तावद्विधाववसीयमाने विधेयो यागः प्रधानं भवेदभिधानतश्चोपसर्जनीभूतस्तद्विपरीतो भवेदिति। यद्येवमजां नयति ग्राममितिवद्द्विकर्मकतया भवितव्यम्।

---

1. यथाप्राप्तानु इति मुद्रितपुस्तकटिप्पणीधृतपाठः।

प्रधानोपदेशोपपत्तेः । तत्र यद्यपि तावद् विष्ण्वादियुक्तानि पृथग्वाक्यानि भवेयुस्तथापि तस्मिन्नेवान्तरालविहिते यागे देवतां विदध्युर्न कर्मान्तराणि[1] । न च देवताऽप्येवंविधैः सम्यगभिधीयते । न ह्येते संप्रदानं देवतात्वं वा वदन्ति, किं तर्हि, कर्मोपसर्जनद्रव्यवचनास्तत्र कर्मशक्तिं प्रधानीकृत्य द्वितीया तुल्यार्थता तावल्लब्धव्या, न च तावता देवतात्वं सिध्यति । त्यागार्थत्वाद्धि यजतेः परमार्थतस्त्यज्यमानं द्रव्यमेव कर्म भवति । ततस्तेनाप्यमाना देवता पश्चात्कर्म संपद्यते । तत्र द्विकर्मलक्षणप्रसक्तौ 'समाप्तिः शब्दार्थः' इत्यनेन न्यायेन पूर्वं त्यज्यमानकर्मतिरोधानेन परपूज्यमानकर्माविर्भावादेककर्मत्वावधारणेन संप्रदानत्वशक्तिमभिभूयैव निर्देशो भवति 'विष्णुं यजति' 'विष्णुर्यष्टव्य' इति । न तु तत्र देवतात्वमभिधीयते । किं तर्हि, कर्मत्वान्यथानुपपत्तिलक्षणयैव गम्यमानं निश्चीयते । ननु च यजतेर्देवतापूजात्मकत्वात्तदीयकर्मदेवताशब्दौ पर्यायावेवेति न वक्तव्यं लक्षणया गम्यत इति । नैष साक्षाद् देवतापूजावचनः । कुतः—

स्तुतेरपि हि पूजात्वाज्ज्ञायते यजिवाच्यता ।
न वातिथिवदेतस्याः पूज्यतेति च वक्ष्यते ॥

न हि देवताः स्तुवानस्तत्पूजाव्यापृतोऽपि सन् कश्चिद्यजत इत्युच्यते । रूपासमवायित्वाच्च नातिथिवद्देवता पूज्यमानतां प्रतिपद्यते । न च यजिस्तत्पर इति नवमे वक्ष्यते । दानेन वोपाध्यायादिः पूज्यमानोऽपि न कर्म संपद्यमानो दृष्टः ।

**सम्प्रदानत्वेन वा विष्णोस्त्यज्यमानेन कर्मणा व्याप्तेस्तत् कथं विष्णुं यजतीति निर्देशः । तमुपपादयति—तत्र द्विकर्मकलक्षणेति । ततश्च यज्यर्थमुपदेशविशिष्टं त्यागं प्रत्यन्वयि देवतात्वं न द्वितीया वदति त्यज्यमानेन तु द्रव्येण व्याप्तिरभिहिता तद् गमयतीत्याह—न तु तत्रेति । यदि स्यादपि यागे देवतापूजा तथापि न यजिः पूजारूपः साक्षादभिधानेनोपादत्त इत्युक्तम् । न च तत्र पूजाप्यस्तीत्याह—न चातिथिवदिति । मन्त्रार्थवादयोरन्यपरत्वान्नात्र प्रामाण्यं विधिरपि यागानुष्ठानं विदधदारादुपकारिणीं देवतामपेक्षते न रूपेण समवेताम् । विधेयस्य च यागस्यैव [1]फलवत्वेनावगमान्न निष्फलदेवतापरता तस्येति वक्ष्यते । सति वा पूजावचनत्वे सत्यामपि पूजायां न पूज्यमानस्य कर्मतेति दृष्टान्तेन साधयति—दानेन चोपाध्यायादिरिति ।**

१. कर्माणि इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।
१. फलवत्त्वागमात् आ० मा० ।

एवं तर्हि तद्वदेव नित्यं देवतायाः संप्रदानत्वेनैव निर्देशः प्रसज्यते । नैतस्यास्तादृशं संप्रदानत्वमप्यस्ति, प्रति[1]ग्रहीतृत्वाभावात् । अपि च दृश्यते हि क्वचित् संप्रदाननिर्देशः, 'योऽदाभ्यं गृहीत्वा सोमाय यजते' इति । सर्वथेयं देवता न वान्यैः सम्प्रदानैस्तुल्या, न च कर्मभिरसाधारणैर्नैव त्वात्मनो केवलं यजिविषयं कर्म संप्रदानं वा भवति । तच्चैतस्याः क्रियासाधनत्वात्सप्तमकारकासंभवाच्चैवं कल्प्यते । न हि देवताशब्दवाच्येनात्मना धात्वर्थसंबन्धित्वं प्रतिपद्यते । तेन तदुद्देशत्यागांशेन प्रतिग्रहीतृव्यापाराद् विनापि कथञ्चित् साकल्यकल्पनया संप्रदानं निर्दिश्यते । यद्वोद्देशगतमाप्यमानत्वं त्यागांशेऽप्यध्यस्य सकलस्य यजेः कर्मत्वेनोच्यते । तेन यत्र संप्रदानत्वनिर्देशस्तत्रैतदुक्तं भवति । परस्वत्वमिवापादयितुं तदुद्देशेन द्रव्यं त्यजेदिति । यत्रापि कर्मनिर्देशस्तत्रैषोऽर्थः, त्यक्तुं द्रव्यं देवतामुद्दिशेदिति । तथा च केवलोद्देशव्यापारेषु त्यक्तृत्वरहितेषु यजेति प्रैषो भवति । तदेतदुभयमपि लाक्षणिकम् । तत्रापि संप्रदानत्वं त्यागांशाव्यभिचारित्वादसम-

एवं मुख्यसम्प्रदानत्वं नास्तीत्युक्तं गौणं तु दृश्यत एवेत्याह—अपि च दृश्यत इति । तेन न वक्तव्यं सम्प्रदानत्वेनापि गौणनिर्देशसम्भवात्तद्दर्शनं मुख्यतां कर्मनिर्देशस्य गमयतीति । सप्तमकारकासम्भवादिति । निष्कृष्टशब्देन क्रियां प्रति शक्तिः कारकं न चास्या यज्यर्थं त्यागं प्रति शक्तिः कर्मादिविलक्षणत्वाद् द्वितीयादिविभक्तिभिर्निष्कृष्यते । न च देवताशब्दः क्रियाशक्तिमाह । हविःसम्बन्धि[1]वाचित्वादित्याह—नहि देवताशब्देति । अथवैवं कल्प्यत इति [?] । गौणी कल्पनोक्ता तत्र हेतुर्नहि शब्दवाच्येनात्मना धात्वर्थसम्बन्धं देवता प्रतिपद्यत इति । यदोद्देशगतमिति । त्यज्यमानेन द्रव्येण देवताव्याप्तिः पूर्वमभिहिता कथं त्यक्तुरुद्देशेनेदानीम[2]-भिधीयत इति । तदुच्यते, प्रतिगृहीतृत्वाभावात्तदाभिमुख्यादन्या न द्रव्येण देवताव्याप्तिः । आभिमुख्यं च द्रव्यस्य त्यक्तुरुद्देश एव । ननु यद्युद्देशो द्रव्येण देवताव्याप्तिः कथमस्याः समाप्तित्वमुक्तम् । त्यक्तुं द्रव्यं देवतामुद्दिशेदिति हि प्राथम्यमुद्देशस्य वक्ष्यति । सत्यमर्थसमाप्तिस्तु तस्य त्यागात् । अत्यक्तं हि तन्न देवतायै, त्यक्तुं तु तस्यै भवति । तेन त्यागादुद्देशस्य द्रव्यदेवतासम्बन्धरूपतेति समाप्तित्वाभिधानं तस्येति । तथा च केवलेति । होत्रादीनां देवतोद्देशमात्रव्यापृतानां प्रैषो होतर्यज: प्रशास्तर्यजेति ।

---

१. ग्रहीतृत्वा इति काशीमुद्रितपाठः ।

१. सम्बन्धिशब्दत्वादित्याह आ० मा० ।

२. 'नेदानीमुच्यत इति आ० मा० ।

न हि स्तात्मकत्वाद् दूषितमपि सत् प्रत्यासन्नतरं देवतात्वस्य । कर्मत्वं तु क्रियान्तरेष्वपि व्याप्यमानत्वसंभवात् सव्यभिचारमिति विप्रकृष्टतरं देवतात्वस्य । न हि तद्देवतात्ववत्सकलं यजिं प्रति कर्मत्यवधार्यते । परमार्थतः पुनर्देवताशब्देन तद्धितशब्देन वा देवतात्वमभिधीयते, न कारकविभक्त्या कयाचित् । तथा च

देवतातद्धितोत्पादे न हि पाणिनिना तथा ।
इदमग्नय इत्येवं तेन क्रीतमिवोदितम् ।।

ये हि विभक्तिवाच्या अर्था भवन्ति तद्विभक्तिसमर्थेभ्य एव तेभ्यस्तद्धितविधानं दृश्यते । तदर्हति [पा० सू० ४।४।७६।], तेन क्रीतं [पा० सू० ५।१।३७।], तस्मै हितं [पा० सू० ५।१।५।], ततः आगतः [पा० सू० ४। ।७४।], तस्यापत्यं [पा० सू० ४।१।९२।], तत्र भवः [पा० सू० ४।३।५३।] इति । न तु देवतायां तस्या इदं तामनेन यजतीति वा निर्देशो दृश्यते । कथं तर्हि, साऽस्य देवता [पा० सू० ४।२।२४।] इति । तस्मान्नूनमनन्यवाच्योऽयमर्थ इति गम्यते । ततश्च स्थितमेतन्न 'विष्णुरुपांशु यष्टव्य' इत्यनेन देवताप्यभिधीयत इति । तत्र क्लेशेन तां कल्पयित्वा यजिभावना कल्पनीया । ततश्च वरमर्थवादत्वमेवाश्रितम् । अन्तरा यजतीति तु यद्यप्यन्तरालसंबन्धविधिपरत्वान्न स्वरूपविधानार्थमित्याशङ्क्यते तथाप्यनन्यगतित्वाद्विशिष्टविधानम् । न हि यथेतरेषामर्थवादत्वेनार्थवत्ता तथेह केन चित् प्रकारेण । ननु च समुदायीकरणेनार्थवत्तेत्युक्तम् । यथा नैतेनार्थवत्ता तथान्यार्थदर्शनं व्याचक्षाणा वक्ष्यामः । किञ्च

अन्तरालेऽनुपादेये कर्म तत्र विधीयते ।
तादृग्विपरिवृत्तिश्च नेत्युत्पत्तिरपोष्यते ।।

यादृशी ह्याख्यातेन स्वप्रधाना पूर्वापरीभूता भावनान्तरालमनुपादेयं प्रत्युपात्ता न तादृशी विष्णुर्यष्टव्य इत्यादिभिरुपस्थाप्यत इति नोत्पत्तिविधिकल्पनाभङ्गः । तत्र सत्यपीतरेषां कर्मविधित्वे[2] कर्मान्तरं स्यान्न प्रकृतानुवाद

तद्देवतात्ववदिति । देवतात्वं सकलं यथायागमेव प्रति न क्रियान्तरं नैवं कर्म । अथ वा न तत्सकलसंशद्वयात्मकं यजिं प्रति येन व्याप्यतामात्रेण क्रियान्तरे न स्यादिति । अस्य प्रपञ्चस्य[1] प्रयोजनमाह—तत्र क्लेशेनेति । तथाप्यनन्यगतित्वादिति । न गुणविधित्वमेकवाक्यत्वात् स्तुतिबुद्धिस्तु नोत्पद्यत इति । ननु यदीतरेषां विधित्वमभ्युपगम्य कर्मान्तरशब्दः कथं प्रकृता-

१. विधानार्थत्व इति काशीमुद्रितपाठः ।
२. काममित्याधिकः पाठः मुद्रितपुस्तकटिप्पणीधृतः ।
१. प्रयोजनस्य प्रयोजनमाह आ० सा० ।

इति मत्वाह—कर्मान्तरस्य वाचकः स्यादिति । देवतायाः पुनरुपादेयत्वात् कर्मोद्देशेन विधिः संभवतीति नानुवादबुद्धिरपैति । कर्मविध्यभ्युपगमे तु सत्यपि प्रकृतसद्भावे तद्रूपाणां प्रकृतानामभावादित्यभिप्रायः । अथ वा यदिदमाग्नेयादिभ्यः कर्मान्तरं चोद्यते तस्योपांशुयाजं यजतीत्ययं वाचकः स्यान्नेतरेषाम् । तस्मादन्तरालानुपादेयत्ववशेनास्यैकान्तिके कर्मविधित्वे सतीतरैरर्थवादैरेव भवितव्यम् । धात्वर्थं चान्यत्र विदधत् प्रत्ययः सन्निकृष्टवृत्तिर्भविष्यति । स तु विधीयत उपांशुत्वादिसंबन्ध इति । उपांशुयाजशब्दं गुणविधिं मन्यते । यत्त्ववाचकत्वमस्मिन् पक्षे कुत्वप्रसङ्गादिति । तत्रोच्यते, तुल्यमेतत् त्वत् पक्षे । कुतः—

वाच्यवाचकसंबन्ध इष्टः शब्दार्थयोः पुरा ।
पश्चाद्विध्यनुवादत्वे स्यातां साधारणाश्रये ॥

वाच्यवाचकत्वेऽवधारिते पश्चाद् विधिविधेयत्वमनूद्यानुवादकत्वं वा कल्प्यते । तत्रोभयोरपि वाच्यवाचकसंबन्धः साधारण इति तद्गतौ गुणदोषावपि साधारणौ । तेन नैको बाधो भवति । स्यादेतत्, अनुवादत्वमवाचकस्यापि कथञ्चिद् दृष्टं न विधित्वमिति । तदुच्यते—ममापि हि

यजिना विहिते यागे याज इत्यनुवादभाक् ।
विधिसंबन्ध्युपांशुत्वं न वैतदसमञ्जसम् ॥

न च तत्प्रख्यरूपेण नामैतदुपपद्यते ।
विहितं न ह्युपांशुत्वं शास्त्रेणान्येन केनचित् ॥

न तावद् विष्ण्वादियुक्तेन विहितम्, अर्थवादत्वात् । न 'उपांशु पौर्णमास्याम्' इत्यनेन कालविधिव्यापृतेनानेकविध्यशक्तेः । तस्मादुत्पत्तिस्थेनैव

**नामभावादित्यभिधानं तद्व्याचष्टे—कर्मविध्यभ्युपगमे त्विति । अथ वा नेतरेषां कर्मविधित्वाभ्युपगमेन कर्मान्तरभाषा किन्त्वेवमित्याह—अथ वेति । धात्वर्थं चान्यत्रेति । अन्यथा धात्वर्थानुवादेनान्तरालसम्बन्धो विधेयः स्यादुद्देश्यस्यापि कालस्य विधेयत्वादिति ।** ***भाष्यकारेण*** **विष्ण्वादिसंयुक्तानामर्थवादतामुपदर्शयतोक्तं क्रमजामितामर्थवादं वक्ष्यामीति—विष्ण्वादिसम्बन्ध [1]उपयुज्यत इति । तत्र यथा विष्ण्वादिसम्बन्धोऽजामितोपयोगी तदाह—जामितापनयनं वेति । विष्ण्वादिसम्बन्धकीर्तनस्यालम्बनं** ***भाष्यकारेणोक्तं*** **तस्मिन् क्रियमाणे ज्ञायत एव यथा विष्णुर्यष्टव्य**

१. उच्यत इति पू० मा० ।

विधीयते । तथा च *सूत्रकारो* वक्ष्यति— गुणोपबन्धादिति [ मी० सू० २।२।११।] । जामित्वापनयनं च सर्वप्रकारं द्रव्यतः स्वरतो देवतातश्च ज्ञायत एव । यथा विष्णुर्यष्टव्यः प्रजापतिरग्नीषोमौ वेति यागे चोदितेऽवश्यंभाविन्यां देवतायामनियमप्रसक्तौ केचिद् विष्ण्वादयः प्राधान्यप्रसिद्ध्या वैचित्र्यप्रदर्शनार्थं संकीर्त्तिताः । तेन यद्यपि परमार्थेन न यष्टव्यास्तथापि स्तुतिपरत्वादुपादानं गुणवादेन कथञ्चिदुच्यते । शाखान्तरे विधानात् प्राप्ता इति अनुदाहरणादस्फुटमेवमभिधाय न हि किञ्चिदसाध्यं स्यात् । न च तस्मिन् सति दशमे 'तद्वच्च देवतायां स्यात्' [मी० सू० १०।८।४६।] इत्यादि विचार्य 'विष्णुर्वा स्याद्धौत्राम्नानात्' [ मी० सू० १०।८।५३ ] इत्यादिना मान्त्रवर्णिकत्वं *जैमिनि*राश्रयिष्यति । यद्यप्यप्राप्तिरिति चेहापि स्वयमेवाशङ्का दर्शिता । यदप्युक्तमुपांशुधर्मत्वात् प्राप्तौ 'तस्माद्यत् किञ्चित् प्राजापत्यम्' इति तदप्ययुक्तम् । वचनव्यक्तिविपर्यासात् । न ह्येवं वचनं यदुपांशु तत्प्राजापत्यमिति । किं तर्हि, यत्प्राजापत्यं तदुपांश्विति । तेन नोपांशुत्वेन प्राजापत्यता लभ्या । अग्नीषोमयोस्तु विधायकमुदाह्रियत एवेति । एतदपि चतुर्थीतद्धितमन्त्रवर्णात्मकत्वादविधाय-

इत्यादि । तत्र कारणमाह—यागे चोदित इति । जामितापनयनक्षमदेवतान्तरमात्रोपलक्षणमिदम् । प्रधानेन चोपलक्षणं क्रियते । प्राधान्यप्रसिद्धिश्च विचित्रा इत्यनेकोपन्यासः । एवं च यदि न विष्ण्वादयो यष्टव्या अपि भवेयुस्तथाप्युपपन्नं विष्ण्वादिकीर्तनमित्याह—तेन यद्यपीति । अत्र *भाष्यकारेण* यदि विष्ण्वादिविधानं नैतत् तत् कथमभिमतं देवतात्वं तेषां सेत्स्यतीति प्रश्नपूर्वकमुक्तं—शाखान्तरे विधानादिति । तद्दूषयति—शाखान्तर इति । अनुदाहृतत्वेनास्फुटाद्विधानादनुपलम्भदोषपरिहाराय शाखान्तरे तदित्यभिधायेति । तद्वच्च देवतायामिति । उपांशुयाजदेवतायामनियम इति पक्षः परिगृहीतस्तद्वच्च देवतायां स्यादिति । तद्वदिति पूर्वाधिकरणपूर्वपक्षे द्रव्येऽनियम उक्तः परामृश्यते । यत्र ध्रौवाद्वासर्वसंयोगार्थत्वादिति [मी० सू० १०।८।४८] सिद्धान्तः कृतः । पक्षान्तरं तान्त्रिणां प्रकरणा त् [मी० सू० १०।८।५०] । प्रकृतत्वेन विशेषेण दर्शपूर्णमासतन्त्रे पठितानामन्यतमा स्यात् । [1]तत्रापि निर्धारणायाह—धर्माद्वा स्यात् प्रजापतिः [मी० सू० १०।८।५१] । तस्माद् यत्किञ्चित् प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत्क्रियत इति । प्रजापतिधर्ममुपांशुत्वं दृष्ट्वा प्राजापत्यमनुमीयत

१. तथापि आ० मा० ।

कम्। यदि हि तावग्नीषोमावब्रूतां ततोऽस्माकं किमिति हि विजानन्तो यजमाना न वयं देवतायां प्रवर्तिता इति कल्पयेयुः। कालविधिपरत्वाच्च न देवताप्यनेन शक्या विधातुं, देवतापरत्वे वा कालविधिपरित्यागात् पौर्णमासीशब्देनापि नानूद्येतेति पूर्णमासशब्देनाग्रहणादसति प्रधानत्वेऽङ्गत्वप्रसङ्गः। *सूत्रकारेण* च दशमेऽमावास्यायामुपांशुयाजमनिच्छतैतदेव पौर्णमासीकालविधिपरत्वेनोपन्यस्तम्। अत्र समाधिः। मान्त्रवर्णिको देवताविधिरिति स्थितम्। उपांशु याजक्रमे हि वैष्णवप्राजापत्याग्नीषोमीयानि याज्यापुरोनुवाक्यायुगलान्याम्नायन्ते। तैश्च तुल्यार्थत्वाद् विकल्पमानैः वैकल्पिक्य एव देवताः प्राप्यन्ते। तदेव हौत्रं शाखान्तरमित्याह आध्वर्यवेऽपि तु क्वचिदस्त्येव याज्यानुवाक्याम्नानं हौत्ररूपेणेति तदभिप्रायं वा शाखान्तरवचनम्। उपांशुधर्मत्वं चास्यैव द्योतनार्थम्। अन्यथा हि देवतात्रानीयमानात्मीयं धर्ममुच्चैष्ट्वं जह्यात् परधर्ममुपांशुत्वं प्राप्नुयादिति विरुद्धम्। विष्णुप्रजापत्योस्तु प्रत्यासन्नधर्मकत्वादविरोधः। तथा अग्नीषोमयोस्त्विति—विधायके देवताविध्यसंभवाद् यथासंभवग्रहणेन पौर्णमासीकालस्य विधायकेऽग्नीषोमानुवादः प्राप्तिपुपोद्बलयति ॥१०॥

**इति। तत्रोक्त[1]मर्थवादस्वरूपोऽयं प्रजापतिं मनसा ध्यायेदिति तु विधिः। तस्मान्नोपांशुत्वेन प्राजापत्यत्वानुमानं किन्तु विष्णुर्वा स्याद्धौत्राम्नानात् [मी० सू० १०.८।५३]। अमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात्। मान्त्रवर्णिको विष्णुर्देवता स्यात् मन्त्रस्य चामावास्यायां दर्शनादुपांशुयाजेऽप्यमावास्याहविष्ट्वमनुमीयत इति। अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगादगुणत्वान्मन्त्रो यथाप्रधानं स्यात् [मी० सू० १०.८।५४]। सत्यं मान्त्रवर्णिक्यो विष्ण्वाद्या देवता न त्वमावास्याहविष्ट्वम्। आज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति कालविधानात्। न च मन्त्रानुरोधेन प्रधानस्य स्वकालत्यागः। मन्त्रस्यैव तु प्रधानकालत्वमुचितमिति। ततोऽस्माकं किमिति। किमन्तेन ज्ञेयोपादानमित्यादिना तद्विषयज्ञाननिर्देश[2]इति। तदेव हौत्रमिति। यद्यपि[3] चैकवेदत्वे शाखान्तरशब्दः समञ्जसस्तथाप्यगत्या आध्वर्यवमुपांशुयाजविधिमपेक्ष्य हौत्रशाखायां शाखान्तरशब्दो व्याख्येय[4] इति।**

---

१. °मनुवाद° आ० मा०।

२. इतीत्यनन्तरं जानन्त इति इत्यधिकं पठति आ० मा०।

३. यद्यपि वेदैकत्वे इति आ० मा०।

४. व्याख्यात इति आ० मा०।

यस्यायं गुण उपबद्धो दृश्यते कालविधिपरे वाक्ये उपांशु पौर्णमास्यां यजन्निति । न त्वेतदेव गुणस्योत्पत्तिवाक्यमयागविधिपरे सत्यनेकार्थविधिप्रसङ्गात् । अत 'उपांशुयाजमन्तरा' इत्यनेनैव प्राप्तस्य संकीर्तनमिति ॥११॥

'हृदयमुपांशुयाज' इति यज्ञपुरुषस्य प्रधानप्रायेणावयवेन संस्तवात् प्रधानमित्यवगम्यते । कथं पुनरप्रधानत्वं पूर्वपक्षे प्रसज्यते । उच्यते,

त्रयाणां वैष्णवादीनां समुदायेऽवधारिते ।
अग्नीषोमीय एवैकः पौर्णमास्यां विधीयते ॥

तावन्नूतामग्नीषोमाविति योऽग्नीषोमदेवत्यः स एवैकः कालविशेषसंयुक्तः पूर्णमासग्रहणेन फले चोद्यते । तत्र वैष्णवप्राजापत्ययोर्गुणभावात् सकलोपांशुयाजप्राधान्यवचनानुपपत्तिः । ननु तवापि वैकल्पिकदोषत्वाद् देवतासु यदैवाग्नीषोमीय दैवत्यस्तदैव प्राधान्यमिति नित्यवत् प्रधानत्वसंकीर्तनं नैव घटते । नैष दोषः ।

कालदेवतयोर्नात्र संबन्धोऽयं विधीयते ।
यत्तु तल्लक्षितं कर्म तदन्यत्रापि विद्यते ॥

यदि ह्यग्नीषोमयोरेव पौर्णमासीसंबन्धः क्रियते ततो विष्णुप्रजापतिपक्षे न स्यात् । अयं पुनर्देवतोपलक्षितस्य यागस्य संबन्धः । सर्वत्र चोपलक्षणापायेऽप्युपलक्ष्यं गृह्यते । यथा वक्ष्यति 'अनपायो हि कालस्य लक्षणं हि पुरोडाशौ' [ मी० सू० १०।८।६९ ] इति । न वैकस्यैव कर्मणः कदाचित् प्रधानत्वं कदाचिदङ्गत्वमित्युपपद्यते । नानात्वे त्वविरुद्धं स्यात् । न च संभवति तत् । तस्मादेककर्मत्वाय 'उपांशुयाजमन्तरा यजती'त्ययमेव विधिः ॥१२॥

अग्नीषोमीय एवैक इति । **ननु यागमात्रे कालविध्यसम्भवादुपांशुत्वेनोपलक्षणमस्तु विवक्षितमग्निषोमाभ्यां तु नावकल्पते । सत्यम्, यद्युद्देश्यो यागः स्यात्, कालं प्रति तूपादीयमानस्य सकलरूपविवक्षोपपद्यते । किञ्च पुराकल्पादत्र विद्यमानं न तदविषयीकृते सम्भवति । अथ वा देवतैवोपलक्षणं प्राथम्यात् । न च तयाग्नीषोमीयपुरोडाशोपलक्षणम् । उत्पत्तिवाक्य एव तत्र कालप्राप्तेः । ततश्चाज्योपांशुत्वयोरनुवाद इति । अनपायो हि कालस्येति । प्राक् सोमादग्नीषोमीयाभावादेकपुरोडाशा पौर्णमासी तस्यामुपांशुयाजो न स्यादन्तराले विधानात् । द्वयोर्हि भवत्यन्तरालमिति । तत्रोच्यते, उपांशु पौर्णमास्यां**

## [ आधाराग्निहोत्राधिकरणम् । ]

ऊर्ध्वमाघारयति तण्डुलैर्जुहोतीत्यादिभिरेवंभूता एवाघारा होमाश्च विहिता विपरिवर्त्तन्ते । न हि 'विष्णुरुपांशु यष्टव्यः' इत्यादिवद् द्रव्यप्राधान्येन यागहोमभावनयोरभिभवः । किञ्च

न चैषामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः ।
ऐकान्तिको विधिस्तेन गुणवत् कर्मगोचरः ।।

नोपांशुयाजवाक्यवदेषामेकवाक्यत्वमिष्टं, न च स्तुत्यर्थता, तेनोभयपक्षे निश्चिते विधित्वे गुणमात्रं विधीयतां तद्युक्तं वा कर्मेति कर्मविधानं युक्तम् । कुतः

विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति ।
तद्विधिर्भावनातश्चेत् सैव पूर्वं विधीयताम् ।।

न तावद् दध्यादिशब्दैः स्वयं विधित्वमभिधीयते । न च प्रत्ययोपात्तं सद्भावनाधात्वर्थव्यतिरेकेण स्वतन्त्रैर्दध्यादिभिः संबध्यते । न हि भवति दध्ना [1]यादिति । किं तर्हि दध्ना कुर्यादिति संबध्यते । होमं वानेन कुर्यादिति । तस्माद् यत् प्रसादेन दध्यादेः कर्त्तव्यता तावेव भावनाधात्वर्थौ न विधीयेते इति । कुत एतत् । न हि तद्विध्यनपेक्षं कथञ्चिदपि गुणविधानं शक्यं दर्शयितुं यदैव हि दर्शयितुमुपक्रम्यते तदैव पूर्वतरं भावनाधात्वर्थविधिर्बलादापद्यते । तस्माद्धोम दध्यादिविशिष्ट[2]भावनैव विधीयते । ततश्च तासां रूपवतीनां प्रचयशिष्टः समुदायोऽस्तीत्यग्निहोत्रं जुहोतीति तदनुवादो विज्ञायते । निमित्तफलचोदनयोश्च एकत्वोपजनः समुदायानुवादे प्रयोजनम् । एवं च सति दध्यादेर्भिन्नकर्मविषयत्वादन्याय्यो विकल्पो न प्रसज्यते । तथोर्ध्वमाघारयतीत्यादिषु यद्यपि द्रव्यदेवतं न श्रूयते तथाप्युपांशुत्वन्यायेन व्यवच्छेदकारणत्वादूर्ध्वत्वादिभिरेव रूपवत्तायां कल्पितायामाघारमाघारयतीत्यरूपः सन् स्वार्थे विनियोक्तुमशक्नुवन्ननुवादो भवति । तस्यापि प्रयोजनम् 'इन्द्र[3] ऊर्ध्वो अध्वर' इति मन्त्रविनियोगे, 'तस्याघारमाघार्यम्' इति च द्रव्यविधावेकत्वसिद्धिः ।।१३।।

---

१. यादित्येतावन्मात्रस्य प्रयोगानर्हत्वेऽपि विध्यर्थकस्य लिङो यासुडागमविधानाद्विध्यभिधायित्वमभ्युपेत्योक्तम् इति पूनामुद्रितपुस्तकटिप्पणी ।

२. दध्यादिविशिष्टा भावना इति मुद्रितपुस्तकधृतटिप्पणीपाठः ।

३. ईड ऊर्ध्वो इति काशीमुद्रितपाठः ।

अपि च ।

विशेषप्रतिपत्त्यर्थं संज्ञा सर्वा प्रवर्त्तते ।
यदा तदा विशेषोऽसौ कोऽस्येति न निरूप्यते ॥
सामान्यं स्यादिदं ज्ञेयं ज्ञातत्वान्न क्रियान्तरम् ।
तदज्ञेयतया[1]ऽन्यत्र विधानमवकल्पते ॥
क्रियाश्चाकारकत्वेन युज्यन्ते न द्वितीयया ।
ताभिस्तु साध्यमानत्वात्समुदायस्य कर्मता ॥

आघारमग्निहोत्रमिति द्वितीयानिर्देशः क्रियेप्सितस्य कारकस्य युज्यते । न च जुहोत्याघारयतिभ्यामात्मैवाप्तुमिष्यते । स्वात्मनि क्रियाविरोधात् समुदायः पुनर्निष्कृष्य शब्देनार्थान्तरात्मनोच्यमानः शक्यः साध्यत्वेनाभिधातुं, यथौदनपाकं पचतीति विशेषः सामान्येनेप्सिततमः कर्मत्वेनोच्यते । ननु च समुदायस्य[2] समुदायिभ्योऽव्यतिरेकान्न कथंचित्साध्यत्वमवसीयत इत्ययुक्तमेव कर्मत्वम् । न, अवयवक्रियाप्रचयसाध्यत्वात् समुदायस्य । समस्ताभ्यो हि समुदायस्याव्यतिरेकादेवमुपादानं न स्यात् प्रत्येकरूपात्तु समस्तरूपमर्थान्तरमिष्टं, न च प्रत्येकरूपैर्विना समस्तरूपनिष्पत्तिरित्युपपन्नमीप्सिततमत्वम् । ननु चैवमादयः समुदायिवचनत्वे-

यजन्निति पौर्णमासीमात्रे विधानात्त[1]त्रापि स्यात् । न च पुरोडाशयोरभावात् न भविष्यति । न हि तावस्याङ्गं किं तर्हि तदुपलक्षितः कालः । न चासौ नास्तीत्युक्तमनपायो हीति । पुरोडाशयोरन्तरायः कालः स ताभ्यां लक्ष्येत । स चाग्नेयस्योपरिष्टाद् भवति । अनपायश्च तस्यैकपुरोडाशायामपि स्यादिति । नहि भवति दध्ना जुहुयादिति । यदि भवेत्तदा धात्वर्थव्यतिरेकस्तावदस्फुटो भावनाव्यतिरेकोऽपि पदश्रुतेः । समानप्रत्ययोपादानश्रुतिः बलीयस्त्वमपश्यतां स्यात् । अत्र च नैवंविधं वेदवचनमस्तीत्येतावतैव सिद्धेऽप्यसम्भवद्विधानत्वाभिधानम् । वस्त्वेवेदृशमिदं सिद्धिरूपं यदेतद् विशिष्टसाध्यात्मकाख्यातार्थविधानेन विधेयं, न स्वरूपेणेत्येतद् व्यञ्जयितुमिति । तदज्ञेयतयान्यत्रेति । तस्य सामान्यस्य क्रियान्तरत्वेन विधिज्ञेयत्वाभावादन्यत्र दध्यादियुक्तेषु वाक्येषु[2] विधानं, येषु विधिज्ञेयविशेषोपादानम् । अथ वा अत्रैतस्य सामान्यस्याज्ञेयतयान्यत्र क्रियान्तरे विधानं कल्प्येत । सामान्यस्य तु ज्ञेयत्वेन क्रियान्तरमिति ।

---

१. °या नात्रेति पूनामुद्रितपाठः ।

२. समुदायस्याव्यतिरेकात् इति काशीमुद्रितपाठः ।

१. तस्यामपि स्यात् आ० मा० ।    २. वाक्येषु इति नास्ति आ० मा० ।

नावधारिता इति समुदायिनां स्वात्मनि क्रियाविरोधस्तदवस्थ एव स्यात् । नैष दोषः । समुदायिवचनेनापि प्रातिपदिकेन समुदायोऽपि लक्षणया गम्यते । ततश्चैकत्ववत् कर्मत्वं समुदायस्य प्रत्येष्यते । न च सामान्यविशेषभेदेनापि भवतः क्रियात्वकर्मत्वे पाकवत्संभवतः । सामान्यविशेषशब्दयोर्भेदेनानुपादानात् । एतच्च पौर्णमासीमित्यत्रापि सिद्धान्ते योज्यम् । तस्मात् तद्वदेव समुदायानुवादत्वम् ॥१४॥

अथोच्येत यथा गुणस्तु श्रुतिसंयोगात् [मी० सू० २।२।५।] इत्यत्र पक्षेऽन्येषां गुणविधित्वाद्रूपलाभ आशङ्कितस्तथात्राग्निहोत्रं जुहोतीत्युत्पत्तिवाक्यत्वेन तण्डुलादिसंयुक्तै रूपलाभ इति । न, तत्र स्ववाक्यगतपौर्णमास्यमावस्यापदनिमित्तत्वादनुवादाशङ्कायाः । न चेह तण्डुलादिवाक्येऽग्निहोत्रशब्दोऽस्ति, यस्त्वस्ति जुहोतिशब्दः स सर्वहोमसाधारणत्वान्नाग्निहोत्रविधिपर एव । ननु च प्रकरणाद्विशेषोऽवगम्यते, अत आह—अप्रकृतत्वाच्चेति । न ह्युत्पत्तिवाक्ये[1] अस्ति कर्मणां प्रकरणम् । फलसंबन्धोत्तरकालत्वेन कथंभावात्मकस्य प्रकरणस्य प्रयोगवाक्याधीन[2]प्रसूतत्वात् । तत्रैतत्स्यात्तदारूढस्यैव द्रव्यदेवतासंबन्धो भविष्यतीति तदुच्यते । अनभिज्ञातरूपस्य फले विधातुमशक्यत्वात् । अतः प्रसिद्धरूपाण्येव तेन ग्रहीष्यन्ते । ननु च 'तस्याघारमाघार्य' 'इन्द्र[3] ऊर्ध्वो अध्वर' इत्याघारमिति च द्रव्यमान्त्रवर्णिकदेवताविधौ नामप्रयोगाद्रूपं विज्ञास्यते । न । आघारशब्दस्य धात्वर्थव्यतिरेकेणाविशेषणकत्वात् । तत्र नाम्ना विशेषः प्रतीयते,

सामान्यविशेषशब्दयोरिति । [1]अग्निहोत्रमित्यस्यापि जुहोत्यर्थनामत्वादिति । ननु तस्याधारमूर्ध्वोऽध्वर इति । विशेषवाचिनामयोगाद् यो द्रव्यविधिर्मान्त्रवर्णिकदेवताविधिश्च, ततो रूपं विज्ञास्यते । विध्योर्नामप्रयुक्तयोः प्रदर्शनं तस्याघार इति । चतुर्गृहीतं वेतद्भूत इत्याज्यं प्रक्रम्य तस्याघारमाघार्येति द्रव्यविधिः । तथा देवतासमर्पकमन्त्रविधिरिन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयतीति मन्त्रस्य सकलस्यापि विधौ पठितस्य प्रतीकं वार्त्तिकेनोपात्तमिति ।

---

१. ह्युत्पत्तिवाक्ये कर्मणां फलसंबन्धो काशीमुद्रितपाठः ।

२. प्रभूतितत्वात् इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

३. ईड काशीमुद्रितपाठः ।

१. अग्निहोत्रमित्यस्यापि ......नामत्वादिति आ० मा० न पठति ।

यत्र कश्चिद्विशेषमुपादाय नामानि प्रवर्तन्ते। अत्र पुनः संनिहितावयवार्थत्वात् समुदायप्रसिद्धिमन्तरेणाघारशब्दः क्षरणमात्रवाचित्वान्न विशेषे वर्तते। ननु च प्रकरणाद्विशेषो लप्स्यते। तत्रापि सूत्रम्। न ह्याघारः प्रकृतः परप्रकरणपातित्वात्; दर्शपूर्णमासप्रकरणमेतत्सकलं नान्यस्य प्रकरणस्यान्यत्रावकाशः। सन्निधेर्विशेषागम इति चेदत्रापि सूत्रम्, न वाक्यबलीयस्त्वेनात्र प्रकृतैरपि संबन्धात्, तदेवं वाक्यप्रकरणयोरविरोधो यदि द्रव्यदेवतासंयुक्तान्येवोत्पत्तिवाक्यान्यभ्युपगम्यन्ते। यत्र यः कश्चिद् रूपलेशोऽस्ति तत्र निरूपिते कर्मणि केनचित् प्रकारान्तरेण गुणान्तराणि कल्पन्ते सर्वेषु चोर्ध्वत्वं तण्डुलादि किञ्चिद्रूपमस्ति न घारमाघारयति, अग्निहोत्रं जुहोतीत्यनयोः। तस्मात्समुदायात्वानुवादौ ॥१५॥

कर्मचोदने स्यातामिति वक्तव्येऽन्तरग्रहणमुपांशुयाजाधिकरणवन्नेयम्। आघारयतिजुहोत्योरनन्याक्षिप्तविधिशक्तित्वात् कर्मप्रयोगविधानमेव शब्दार्थं इत्यवगम्यते। न च प्रकृताघारहोमसद्भावः। प्रकृतवाक्यस्थानां विधीनामप्राप्तद्व्याद्याक्षिप्तायां विधिशक्तौ कर्मानुवादबुद्धचनपायात्। न चेदन्येन शिष्टाः [मी० सू० १।५।६] इति वापवादान्न विशिष्टविधानन्यायः संभवति। तद्दर्शयति—अस्मिन्हि सति विधाने प्रत्यक्षे न संबन्धः शक्नोत्यर्थादाक्षेप्तुमित्यर्थः। अथ वास्मिन्हि सति संबन्धिविधावितरेण गुणविधाने न संबन्ध एव केवल आश्रीयते। तस्मान्नैतद्वाक्यनिरपेक्षैः संबन्धविधिभिरर्थादपरौ कल्पयितुं होमाघारौ शक्येते यद्बलेनानयोरनुवादत्वं स्यात्। भावनाधात्वर्थावुज्झित्वा न विधिर्द्रव्यादिभिः संबध्यत इति चेत्सत्यमेतत्। न विधित्वं भावनात् उत्तार्यते तद् गतेनैव तु गुणः संस्पृश्यते। गुणस्य कारकविभक्त्या भावनामध्यनिक्षेपात्।

अत्रापि सूत्रमिति। सम्बन्धिनामप्रकृतत्वादपोति। नन्वेवमपि प्रकृते विधिरूपलाभः स्यान्नानेन विशिष्टविध्युपपादनान्निराकृतो हि प्रकरणमनपेक्ष्य गुणविधिः श्वेतमालभेतेत्यादिष्वानर्थक्यप्रसङ्गादिति। ततश्च गुणस्य विधिसंस्पर्शनव्युत्पादनस्थानेऽत्र सूत्रभाष्यकाराभ्यां विशिष्ट[1]भावनाविधानवचनव्यक्त्यैव गुणपरतया गुणविधित्वमनुभूयत इति व्युत्पादितम्। तेन यत्र स्थानान्तरे भावनाधात्वर्थानुवादोऽभिधीयते। तत्र

१. °भावना पदमिह आ० मा० न पठति।

तेनैतदुपदिष्टं भवति । सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किं न प्राप्तमित्यन्वेषणायामप्राप्तमात्रविषयोपसंहाराद्विधिर्भावना धात्वर्थयोरनुवाद इत्यभिधीयते । न त्वादित एव तावनूद्य गुणो द्रव्यं वा विधीयत इति कदाचिदपि शास्त्रार्थाभिव्यक्तिः । तत्र पश्चातने व्यापारे मन्दबुद्धिप्रतिपत्त्यर्थं स्थूलेन न्यायेन कथ्यमाने शास्त्रकृता एवैता वचनव्यक्तय[२] इति मन्यमानाः स्वयमिवान्येषामपि भ्रान्तिमुत्पादयितुमष्टौ श्रुतिप्रकारान् परदौर्बल्यवतः केचिद्दर्शयन्ति— प्रथमः किल श्रुतिप्रकारो धात्वर्थविधानं, द्वितीयः सगुणं धात्वर्थविधानं, तृतीयः किञ्चिदुद्दिश्य धात्वर्थविधानं, चतुर्थस्तस्यैव विशिष्टविधानं, पञ्चमस्तु धात्वर्थोद्देशेनान्यस्य विधानं, षष्ठस्तु धात्वर्थेनान्ययोः संबन्धः, सप्तमः पुनर्धात्वर्थविशिष्टेन प्रत्ययेनान्ययोः संबन्धः, अष्टमस्तु मुक्त्वा धात्वर्थमन्ययोरेव संबन्ध इति । तत्र तावद् यदुच्यते 'अग्निहोत्रं जुहोति' इत्येतद्धात्वर्थविधानमिति । तदयुक्तम् । न हि विधिर्भावनामुत्सृज्य धात्वर्थे निपतति, न च भावनां मुक्त्वा ऽन्यत्र पुरुषः प्रवर्तते । सा हि पुरुषस्य स्वव्यापारो धात्वर्थस्तु कदाचित्कर्माश्रितोऽपि भवति । यथायमेव प्रक्षेपो हविरवदानाश्रितः, न चान्यदीयं व्यापारमन्यः शक्नोति कर्तुमित्यवश्यं भावनाविशेषणत्वादेव द्रव्यादिवद्धात्वर्थो विधा-

सर्वत्र [१]विधेरतत्परत्वेन न त्वभिधीयमान एव विधिस्तावुज्झित्वा अन्यत्र प्रतीयत इत्येवम् । तदेतदाह—तेन सर्वत्रैवेति । ततश्च यद्भाष्यकारीयमन्यत्र वचनव्यक्तिवैचित्र्यप्रदर्शनमिव तद्विधिसामर्थ्ये सूक्ष्मे स्थूलं विधित्वमुपचर्य सुखप्रतिपत्त्यर्थमित्यवतिष्ठते ।

केचित्त्वेवमपि वर्णयन्तः स्वयं भ्रान्तास्तद्वदन्येषामपि भ्रान्तिमुत्पादयितुमेवमाहुरिति निराकरणायोपन्यस्यति— तत्र पश्चात्तन इति । धात्वर्थविशिष्टेनेति । अग्नीषोमीयं पशुमालभेतेति द्रव्यदेवतासम्बन्धपरोऽपि वाक्याद्विधायकः पदश्रुत्यवगतमालम्भोपरागं स्वार्थस्य न जहाति । तेन द्रव्यदेवतासम्बन्धविषयोऽपि व्यापार आलम्भोपरक्तो विधीयत इति । नहि विधिर्भावनामुत्सृज्येति । समानप्रत्ययोपादानश्रुतिबलीयस्त्वात् । एवं शब्दतो न धात्वर्थस्य स्वतो विधेयत्वमर्थतोऽप्येवमित्याह—न च भावनां मुक्त्वेति । कदाचित् कर्माश्रित इति । ततश्च नासौ भावनावत् कर्तृव्यापारात्मा [२]विधानयोग्यताशब्दादवसीयते । प्रमाणान्तरात्तु तस्य तथाभावो विधायको वा क्वचित् तद्विषयः सर्वत्र तद्विधानं जहात्येकशक्तित्वादिति । एवं साध्या-

१. विधिपरत्वेन आ० मा० । २. विधेययोग्य आ० मा० ।

तव्यः। इदं च भावार्थाधिकरणेऽभिहितं यथा न धात्वर्थः साध्यत्वेन विधीयत इति। न ह्यकरणभूतोऽसौ साध्यापेक्षत्वाद् वाक्यान्तरेणापि फले विधातुं शक्येत। 'सोमेन यजेत' इत्यत्रापि तद्भूताधिकरणोक्तेन मार्गेण धात्वर्थकारकाणामरुणैकहायन्यादिवत्परस्परेणासंबध्य भावनासंबद्धानामुत्तरकालं परस्परोपकारित्वम्। तथा च सप्तमनवमाद्ययोर्वक्ष्यतीति न विशिष्टधात्वर्थविधानम्। भावनां च प्रति यागस्य करणत्वाद् द्रव्यं प्रति कर्मत्वे सति, 'ऐकशब्द्ये परार्थवत्' [मी० सू० १।४।८।] इत्येतदापद्यत इत्ययुक्तमेतत्। तथा व्रीहीन् प्रोक्षतीत्यत्र न प्रोक्षणेन व्रीहीनिति कश्चित्संबन्धः। तेनोभयोः करोत्यर्थसंबन्धान्न धात्वर्थौ व्रीहिषु विधी-

त्मापि धात्वर्थो न साक्षाद्विधीयत इत्युक्तमिदानीं नासौ साध्यः साध्यभावनाविशेषणत्वेन। ये तु तदनुरञ्जनसमर्था विशेषा इत्यादिना भावार्थाधिकरण उक्तत्वादित्याह—इदं च भावार्थाधिकरण इति। [1]अर्थाभिधाने च भावनाविशेषणत्वेनैव विधेयो न स्वत इति पूर्वमेव साध्यं तत्र हेतुर्न ह्यकरणेति। फले हि विधेयविधिः साध्यस्वभावस्य च व्यापारात्मनो भाव्याकाङ्क्षिणः साक्षात् स स्यादसाध्यस्त्वसौ धात्वर्थो यदि साध्यान्वयिनीं भावनां करणत्वेन न विशिनाष्टि न तदा फले विधातुं शक्यते। तथा हि आख्यातयोगिना तावद्वाक्येन विधेः शब्दतो भावनान्वयान्न शक्यते। [2]भावनाभिधानरहितेनापि यष्टव्यमित्यादिनेति।

अन्या व्याख्या, धात्वर्थ आख्यातादभाव्यनिष्ठः साध्यरूपः प्रतीयते। भावना तु भाव्यनिष्ठेति स्थितिः। तत्र यदि धात्वर्थसिद्ध्यै पुरुषो नियुज्येत स्यादपि तस्य विधिः। इदं तु निराकृतं व्यर्थविध्यसम्भवात्। न चाग्निहोत्रं जुहोतीति साध्यत्वेन विहितस्याग्निहोत्रं जुहुयात् स्वर्गकाम इति वाक्यान्तरेण फलान्वयाद्विध्युपादानं यतो करणभूतोऽसौ स्ववाक्ये साध्यत्वात् साध्यान्तरानपेक्षोपेक्षया चोत्पत्तिविनियोगविध्योरेकवाक्यता। अतो नैवं विनियोगविधिरुत्पत्तेरन्येन समर्पणाद् नियोगमात्रे व्याप्रियते। तस्मात् करणत्वेन विधेयः। करणत्वं च क्रियान्वयित्वमिति।

अन्या व्याख्या, नहीत्यादेः साध्यत्वेन [3]धात्वर्थविधानेन विधानं स्वतस्तस्य किमिति फलेन विधानमित्यत आह—न क्रियां करणत्वेनविशिषन् येन स्वरूपेणासाध्यानपेक्षत्वात् श्रुतफलेनापि वाक्येन विधातुं

१. °अतथाविधाने च आ० मा०।
२. भावनारहितेनापि इति आ० मा०।
३. धात्वर्थविधानेन इति पदं आ० मा० न पठति।

यते। यदि तु भावनाभिप्रायेणान्यत्र विधानमुच्यते तत्सर्वत्राविशिष्टम्। न चास्य विशिष्टविधानाद् दुर्बलत्वमस्तीति तृतीयस्थाननिवेशोऽप्ययुक्तः। पक्षद्वयोक्तमपि निराकरणं 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यत्राप्यापद्यत इत्ययुक्तमन्यत्र विशिष्टधात्वर्थविधिः[1]। दध्ना जुहोतीत्यत्रापि न कदाचिद्दधि होमे करोतीत्ययमर्थः शब्देनोच्यते। न हि होमस्याधिकरणत्वं शब्दाद् वस्तुतो वा सिद्धं, न च दध्नः कर्तव्यता, नित्यं करणात्मकत्वात्। इयमपि च श्रुतिर्द्विविधादपि विशिष्टविधेर्बलीयसी, एकविधिसंभवेऽनेकशक्तिकत्वानुपपत्तेरुभयपक्षभाविनश्च विप्रकृष्टार्थविधेरपर्यनुयोज्यत्वात् संनिकृष्टासम्भवकृतमेव चास्य विप्रकृष्टस्य ग्रहणं, तत्रोभयाश्रयणे युगपद्विप्रतिषिद्धसम्भवासंभवापत्तिरगत्यैव गृह्यतेऽन्यत्र विशिष्टधात्वर्थविधानान्नातिगुर्व्येवेति न पञ्चमे स्थाने निवेशयितव्या। कामं वा शुद्धधात्वर्थविधानात्तस्य वान्यत्र विधेरनन्तरा कर्तव्या। यत्तु 'प्राकाशावध्वर्यवे ददाति' इत्यनेन ददातिधात्वर्थे प्राकाशाध्वर्युसंबन्धो विधीयत इति। तदयुक्तम्। वचनव्यक्त्यविवेकात्। सर्वत्र हि यच्छब्देनानूद्यमानमुपनिबध्य तच्छब्दयुक्तं विधेयमुपनीयते। तदिह यदि तावद्यद्ददातीत्यत्राध्वर्युप्राकाशयोः संबन्ध इति विधीयते ततः सकलदानानुवादात्समस्तदक्षिणाविकारप्रसङ्गः। प्रत्ययस्य चानेकविधिशक्तिकल्पना चोदिते सति कर्मण्यपरिहृतैव। संबन्धो हि विधीयमानः संबन्धिनं तावदाक्षिपेत्, धात्वर्थे तु पुनः स विधातव्य एव संबन्धी। अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात्, न क्रियायाः। तत्रैतत् स्याद्धात्वर्थानुरक्तः

**शक्यते। किं पुनरनेनेति [?]। न चास्य विशिष्टविधानादिति। तत्र हि विशेषणेऽपि काचिच्छक्तिरत्र तु विशेष्य एवेति। पक्षद्वयोक्तमपीति। विशिष्टधात्वर्थस्यान्यत्र विधानमित्यङ्गीकरणादिति। दधि होमे करोतीति। होमे दध्यनुष्ठानं हि विधेयमनुष्ठानविषयत्वाद् विधेः। सेयमनुष्ठेयता करोतिप्रयोगेण दर्शिता, न तु दधिकर्मिका भावना। तदेतद् दूषयिष्यति। नापि दध्नः कर्तव्यता करणत्वेन भावनाविशेषणत्वादिति। अन्यत्र विशिष्टधात्वर्थविधिरिति। स्वरूपेण विधिरन्यत्र विधेर्यदि विशेषणोपादानादपि लघुस्तदेदमुच्यत इति। ननूभयविशिष्टसम्बन्धविधाने कथमनेकशक्तित्वमत आह—सम्बन्धो हीति। यदि सम्बन्धिनौ सन्तौ क्रियां निवर्तयेतामिति विधीयते सम्बन्धस्ततोऽप्राप्तक्रियासम्बन्धयोरध्वर्युप्राकाशयोरसावपि**

---

१. °विधानमिति विधिस्थानेऽत्र पाठः प्रसिद्धमुद्रितपुस्तकेषु।

प्रत्ययो विदधदवश्यमेव तत्र विधास्यतीति । एवं तह्र्युत्तरयोरपि श्रुत्योरत्रैवान्तर्भावाद् भेदेनोपादानं व्यर्थं, न हि 'वायव्यं श्वेतमालभेत' 'दध्नेन्द्रियकामस्य जुहुयात्' इति धात्वर्थाननुरक्तः प्रत्ययः संबन्धं विदधातीति । प्रकृतिलिङ्गमात्रफलश्चालभतिरुच्चार्यमाणो न द्रव्यदेवतासंबन्धित्रिधावात्मानुरञ्जनेन किञ्चिदुपकरोति । न चासौ संबन्ध आलभतिना संपादयितुं शक्यो यागविषयत्वाद् द्रव्यदेवतयोः । यदि चान्यसंबन्धकरणे प्रत्ययोच्चारणसिद्धिव्यतिरिक्तं किञ्चिद् धातुः कुर्यात्तनो दधीन्द्रियसंबन्धविधाने किमिति होमः परित्यज्येत, किमिति वा प्रकरणलभ्योऽभ्युपगम्येत । तस्मान्न धात्वर्थेऽन्यसंबन्धविधिः । पूर्ववच्च धात्वर्थाधिकरणता कारककर्त्तव्यता च निराकर्त्तव्या । न च धात्वर्थ संबन्धस्यापि प्राग्भावनासंगतेर्विधिरित्युक्तम् । एवं तावन्न दानमात्रे संबन्धविधिः । अथाध्वर्युविशिष्टं [1]दानमनूद्यतामध्वर्युर्वा तद्विशिष्टः । एवमपि [2]विशिष्टानुवादाद् वाक्यभेदः । शुद्धाध्वर्य्वनुवादे तु यद्यपि संप्रदानश्रुतेरर्थाद्दानमाक्षिप्यते तथापि संप्रदानसंप्रदेयसंबन्धस्य ददातिमन्तरेणानुपपद्यमानत्वाद् द्रव्यदेवतासंबन्धादिव यजेः कल्पनमिति न धात्वर्थेऽन्यसंबन्ध इति वचनव्यक्तिः संभवति । अवश्यं [3]चात्र दानाध्वर्य्वोश्चोदकेन प्राप्तत्वात् प्राकाशावेव विधातव्यौ । तत्रार्थात् संबन्धविधिरिति न श्रुतित्वोपन्यासो घटते । वक्ष्यति चैतज्जाघन्यधिकरणे यत्रान्यतरद प्राप्तं तत्रैवेतरोद्देशेनेतरविधिरर्थात्संबन्ध उभयप्राप्तावनुभयप्राप्तौ वा केवलसंबन्धविधानमिति । तिसृणामपि च संबन्धविधिश्रुतीनां प्रत्ययविक्षेपसाम्यान्न

**विधेयः । अथ सम्बन्धस्वरूपमेवं विवक्षितं न तथा क्रियानिर्वृत्तिस्तदा तच्छेषत्वं सम्बन्धिनः स्यादिति । एवं [1]तह्र्युत्तरपदयोरपीति । सप्तम्यामेतदेवाभिमतमष्टम्यामप्येतत् प्रयुज्यत[2] इति । नैतदुपपत्तिमत्, तथा हि यत्रैवाभिमतं तत्रैव एवमस्या न सम्भव इत्याह—प्रकृतिलिङ्गमात्रेति । प्रकृतिलिङ्गितामात्रं लिङ्गं लिङ्गिनं वा लिङ्गं तन्मात्रं फलमस्येति । एवं विध्यावृत्तिप्रसङ्गान्नेदं युक्तमित्युक्तं धात्वर्थोद्देशेनान्यस्य विधौ यद्दूषणं तदप्यत्र स्यादित्याह—पूर्ववच्चेति । यच्च धात्वर्थविधौ दूषणमुक्तं नाविधिर्भावनामुक्त्वा धात्वर्थे निपततीति तदुपपत्तिसाम्यात् ।**

**सर्वत्राविशिष्टमित्यत्राप्युक्तमेवेत्याह—**न च धात्वर्थे सम्बन्धस्यापीति ।

---

१. अनूद्येत इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।
२. शिष्टानुवादात् इति काशीमुद्रितपाठः ।
३. प्रतिपत्तव्यम् इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।
१. एवं तर्हि उत्तरयोरपीति आ० मा० ।
२. प्रसज्यत इति आ० मा० ।

बलाबले कश्चिद्विशेषो, नापि समवायविरोधसंभवो यत्र तज्ज्ञानमुपयुज्यत इति मन्दफलं क्रमगणनोपन्यासस्य। तस्मात् प्रस्तुताधिकरणन्यायेन सर्वत्र विशिष्ट-भावनाविधिरेव तत्त्वम्। इतरत्तु तत्र तत्र स्थूलबुद्धिप्रतिपादनोपायमात्रं ***भाष्य-कारेण*** कृतमिति द्रष्टव्यम्। यच्च संनिकर्षविप्रकर्षाभिधानं तद्भावनास्थ एव विधित्वे कारकाणां भावनाविशेषणत्वं प्रतीति [1]मन्तव्यम्। कथं पुनः प्राप्ता सती भावना विधीयते। विशिष्टा न प्राप्तेति तादात्म्येन विधास्यते। फलतश्च तदा विशेषणार्थो विधिरिति व्यपदेक्ष्यते। नन्वेवं सति विशेषणेष्वनवतरन् विधायको भावनाद्वारेणापूर्वविधिवत्प्राप्तकर्मविधानेऽप्यनेकं विधातुं समर्थ इति 'चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत' [मी० सू० २।२।६।] इत्यस्याविषयत्वं प्रसज्येत। नैष दोषः। पश्य—

विधित्वे भावनास्थेऽपि तादर्थ्यं प्रविभज्यते।
विशेषणफले चास्मिन् वाक्यभेदो भविष्यति॥

यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते तदार्थाद्विशेषण-विधौ सति अवाक्यभेदं वक्ष्यामः। यदा तु तद्विशेषणार्थमित्यवधार्यते तदा भावनायाः संनिहितप्रोषितत्वादनेकविशेषणयोगे सति यदर्थं विधित्वमवसीयते तस्यैवैकस्य विधानं नेतरस्य तद्देशस्यापि चक्षुषेव स्पर्शादेरिति वाक्यभेदो भविष्यति। सर्वत्र समानदेशमपि विधित्वं फलतः प्रचलितमिवैकत्रोपसंहृतं

**नापि समवायविरोध इति। नन्वेकस्मिन् वाक्ये द्वयसम्भवः समवायस्तत्र दुर्बलपरित्यागेन बलवत्परिग्रहः फलं, न द्वयोः सम्भवाभावात्। यत्र हि यत् प्राप्तं तत्र तस्य विधिसम्भवो नेतरस्य। नहि दध्ना जुहोतीति बल-वत्वाद् विशिष्टविधिर्भवति। अत्र सप्तमाष्टमयोः [1]श्रुतिप्रकारयोरुक्तमेव दूषणमभिमतं भावनात्यागेनान्यत्र विध्यनिपातः कारककर्तव्यताभाव इत्यादीति न पृथगुक्तमिति।** भावनाविशेषणत्वं प्रतीति। **भावनाद्वारो हि विध्यन्वयस्तद्विप्रकर्षाद् विप्रकृष्यत इति। उक्तमेव व्यनक्ति—सर्वत्र समान-देशमपीति।** यद्यपि भावनादेशं विधित्वं ततश्च तद्देशत्वाविशेषादशेषगुण-स्पर्शि न्याय्यं तथापि विशेषणफलं विशिष्टविधानमिति फलस्याप्राप्तप्राप्ते-र्गुणगतत्वादपि गुणे प्रचलितमिव गुणानाञ्च भिन्नत्वात्सकृदुच्चारणे च तात्पर्यभेदासम्भवादेकत्रैवैतन्नान्यत्रेत्युपपन्नमुपदर्शितमिति।

---

१　श्रुतिप्रकाशयोः इति आ० मा०।

दर्शितम् । तस्मादविरोधः । यस्त्वभ्युदितेष्टिप्राकाशादिविधिष्वनेकार्थविधिदोषः स सर्वपक्षेषु तुल्यः । यथा चास्मत्पक्षे न भविष्यति तथा तदधिकरणेष्वेव वक्ष्यामः । अत्रैदेतद्विशिष्यादिति । यदि साक्षाद् गुणो न विधीयते ततः पुरुषस्य तत्राप्रवर्त्तितत्वात्तत्परित्यागेनाप्यनुतिष्ठतः कृतार्थता स्यादिति मन्यते । तत्र किं भविष्यतीति । वाक्यलक्षणविध्यभिप्रायेण प्रश्नः । अव्याप्रियमाणे इति । स्वाभिप्रायविवरणम् । स एव वा स्वयं कर्म निरूपयति । तेनैवाभिप्रायेण पुनः प्रश्नोत्तरे गुणवचनसन्निधिरिति । तथा कथं पुनरिति । तुल्यं च सांप्रदायिकम् [मी० सू० १।२।८] इत्यभिप्रायेण । असति त्वर्थे किमिति । त्वयैवं क्रियते येन तदानर्थक्यमापद्यते । मत्पक्षे तु सत्यर्थे नानर्थक्यं भविष्यति । एवं तर्हीति । वाक्येन विशिष्टायां भावनायां प्रवर्तमानः श्रौतोऽपि विधिर्वाक्याद् भविष्यतीत्युच्यते । परस्तु यत्प्रसादेन स विधीयते सैव तावद्विधीयतामिति श्रुत्यर्थे सति न वाक्यार्थ इत्याह - सत्यमेतदिति । विधिशक्तिसंक्रान्तिं न चेदन्येन शिष्टा [मी० सू० १।५। ] इति च दर्शयति । कथमिति सानुशयः प्रश्नः स्वोक्तिर्वा । तस्मात्तत्संनिधेर्गुणस्य भावनानुप्रवेशाद्विधेयत्वमथवा गुणसन्निधेः शक्तिसंचरणम्, भावनाधात्वर्थप्राप्तिसंनिधेर्वा श्रुत्यविरोधाद् गुणविधानम् ।

तथा तदधिकरणेष्वेवेति । प्राकाशाध्वर्युविशिष्टं दानं विधीयते तेन वाध्वर्यवानिति सिद्धेस्तत्कार्यस्य प्राकृतस्याध्वर्युभागस्य निवृत्तिः । अभ्युदितेष्ट्यामपि त्रेधा तण्डुलान् विभजेदिति कल्पितस्य तण्डुलभागस्य दधिसहितस्य देवतामात्रं विधीयते । दध्नोऽधिकरणत्वमर्थसिद्धं चरुत्वं च दधिसंयुक्ततण्डुलपाके दधनि चरुमिति । तत्र किं भविष्यतीत्यत्रोत्तरं पूर्वाभिप्रायकथनेन व्याख्यातत्वमित्युपेक्षितमिति । त्वयैवैतदिति । विशिष्टकर्तव्यतावगमफलो हि गुणसन्निधिर्भवेन्न तु गुणस्वरूपविध्यर्थ इति । वाक्येन विशिष्टायामिति । विशिष्टविषयो हि विधिर्विशेषणफलो भवति । वाक्येन च विशेषणान्वयाद्विशिष्टता । तेन श्रुत्यापि विधिभावनान्वयी वाक्यव्यापारमपेक्ष्य गुणफलो भवतीति । विधिशक्तिसंक्रान्तिमिति । शब्दान्तरेण विहितत्वादित्यन्तस्य व्याख्यातत्वान्मध्यगतस्य प्रश्नस्येति सानुशयव्याख्येति गुणस्य भावनानुप्रवेशादिति । अनेन गुणविधानशक्तिरुक्ता । गुणसन्निधेरिति । अनेन विधेस्तादर्थ्यम् । अन्यथा संनिधेरानर्थक्यप्रसङ्गादिति ।

जुहोतेरिति स्पष्टमपि धातूच्चारणमनवबुध्य सकलाख्यातानुवादाभिप्रायेणाह— यदि जुहोतीत्यनुवाद इति । दधिशब्देनेति मा वोचत इति । वाजपेयाधिकरणवद् ग्रन्थच्छाया योजनीया । प्रत्ययो विधिरेव धात्वर्थोऽनुवाद इति विवेकः । यदि विधायकाविति—भावनायां प्राप्तायां कथं विधानमित्यभिप्रायः । वाक्यार्थो यस्तं विधातुमिति । दध्नः पदार्थत्वान्नैव वाक्यार्थत्वं संभवतीत्येतदपि दधिविशिष्टभावनाभिप्रायमेव । तस्मात् कर्मान्तरचोदने इति—उपांशुयाजवदेव व्याख्येयम् । जुहोत्याघारयतिलक्षितासाधारणार्थविषयत्वाच्च संज्ञोपबन्धसिद्धिः । इह विधीयमानत्वेन च कर्मान्तरेभ्यो व्यवच्छेदः । प्रकरणाच्च द्रव्यदैवतं लप्स्यत इति नारूपत्वम् । न चोत्पत्तिवाक्ये कथंभावो नास्ति फलसंबन्धं तु यावत्प्रतीक्षिष्यते । न चाविहितद्रव्यदेवतस्य फलविध्यनुपपत्तिः । होममात्रतया विहितस्य पश्चादपि तद्ग्रहणाविरोधात् । इष्यते चैवमादौ संनिधिवशेनाप्यनुवादः । प्राप्त्यपेक्षो ह्यसौ यथा कथञ्चित्प्रत्यभिज्ञानं[1] प्रार्थयते । न च परप्रकरणे पाठादाघारस्यावान्तरप्रकरणलोपः । तस्यापि ह्याख्यातप्रत्ययवशेन किं केन कथमित्यस्त्यपेक्षा । तेनं शक्यं प्रकरणेन द्रव्यदेवताविधानम् । बहूनि चादृष्टादि त्वया कल्प्यानि । न च तण्डुलादिहोमानामूर्ध्वाद्याघाराणां वा विहिता

**दधिशब्दे सति केन विधीयत इत्याक्षेपो दधिशब्दस्य विधिशक्त्यभावाभिप्रायः । स चैवं व्यञ्जनीय इत्याह—दधिशब्देनेतीति । यदि वाजपेयगुणविधौ यजेतेत्यनुवादः केनेदानीं गुणो विधीयेत । वाजपेयशब्देनेति मा वोचः । नहि नाम पदानां विधिशक्तिरस्तीति तत्र ग्रन्थस्तन्न्यायोऽत्रापि द्रष्टव्य इति । विशिष्टभावनाभिप्रायमेवेत्येवकारेण दर्शितमिदमपि भाष्यं विशिष्टविधिमेव विशेषणफलमाह । न धात्वर्थानुवादेन विशेषणविधानम् । तस्य पदार्थत्वेन वाक्यार्थत्वानुपपत्तेरिति । फलवाक्यं तु यावदिति । फलवाक्येनेयमुत्पत्तिः फले विनियुज्यत इत्यवगम्यापेक्षिते तत्राङ्गानीति । न च तण्डुलादिहोमानामिति । [1]यथासंख्येन होमानां न देवता, आघाराणां देवता, न द्रव्यमिति । न चोर्ध्वाद्याघाराणां तस्याधारमित्याज्यविधेर्मन्त्रविधानाच्च देवताप्राप्तेस्तण्डुलादिहोमानां च 'यदग्नये च प्रजापतये च जुहोतीति' देवताविधेरूप-**

१. प्रत्यभिज्ञानेन प्रार्थ्यते इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

१. यथासंख्येन ... द्रव्यमिति, पङ्क्तिरेका आ मा० न पठति ।

देवतास्ति । न च देवतावद् द्रव्यम् । सर्वे चैतेऽपूर्वकर्मविधित्वान्नान्योन्यं गुणविधयो भवन्ति । ततो यथोक्तमेवास्तु । यत्तु क्रियायाः कर्मत्वनिर्देशो न युज्यत इति । अत्रोच्यते, भवति हि क्रियाणामपि संकल्पादिभिराप्यमानत्वात् कर्मत्वम् । तेन जुहोत्याक्षिप्तसंकल्पाद्यपेक्षयाग्निहोत्रमिति द्वितीयानिर्देशादविरोधः । ननु च 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रातः' इत्यनयोरनेकगुणत्वात्[1] । चोदना वा गुणानां युगपच्छास्त्रात् [मी० सू० २।२।६] इत्येतदापद्यते । तथा नामेति केचित् । एवं च यथापूर्वमाहुती जुहुयात्सायमग्निहोत्रं प्रातरग्निहोत्रमित्येवमादयो भेदव्यवहाराः सिद्धा भवन्ति । न चात्र ज्योतिष्टोमस्येव ग्रहाभ्यासेष्ववयवबुद्धिः । उभयत्रापि साकल्यप्रतीतेः । एवं च दर्शपूर्णमासवदुभयत्र समस्तेतिकर्तव्यतावृत्तिरुपपद्यते । अन्यथा तु पशुतन्त्रविप्रकर्षन्यायेन सकृत्कृतैवोपकुर्यात् । न चैककर्मत्वे किञ्चित्प्रयोजनमस्ति । तस्माद् द्वयोराहुत्योः समुदायानुवाद इति । अत्राभिधीयते—

समुदायानुवादस्य न तावद् दृश्यते फलम् ।
प्रयोगवचनैकत्वं लप्स्यते राजसूयवत् ॥

यथैव हि समुदायानुवादत्वमवयवशिष्टसमुदायैकत्वद्वारेण भवत्येवमेवं

लाभो यतः पूर्वपक्षन्यायसाम्यात्तेषामपि विशिष्टविधित्वमित्याह—सर्वे चैत इति । तेन जुहोत्याक्षिप्तेति । ननु क्रियान्तरकर्मणः कथं जुहोतीति समभिव्याहारः । तदुच्यते जुहोतिपदस्यैवेयं फलभावना नान्तरीयकतया धात्वर्थं कर्म कुर्वती विशेषरूपेण संकल्पप्रयत्नात्मनोक्ता । अर्थाक्षेपोऽपि विशेषरूपनिरूपणे कारणम् । न सामान्यात्मना[1] विधानाभावं बोधयतीति । पशुतन्त्रविप्रकर्षेति । तन्त्रविप्रकर्षात्तावानेकः प्रयोगकालः । तत्कालकृतान्यङ्गानि तत्कालस्य प्रधानस्योपकुर्वन्तीति न्यायस्तन्मध्यगते पुरोडाशे पश्वङ्गोपहितोपकारप्रसवतये अभिहितोऽत्राप्येककर्मत्वे सायंप्रातःकालव्यापिनः प्रधानस्य तावान् कालः । तत्र चेत् कृतान्यङ्गानि न पुनः कर्तव्यानीति । यथैव हीति । समुदायानुवादवाक्यं यथा प्रचयविशिष्टं समुदायमनुवदति । एवं प्रयोगवाक्यगत-

१. गुणविधित्वात् काशीमुद्रितपाठः ।
२. शासनात् काशीमुद्रितपाठः ।
१. °नामभिधानाभावं आ० मा० ।

प्रयोगवाक्यगतम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इति भविष्यति । यथा च 'राजसूयेन स्वाराज्यकाम' इति विनाप्यन्येन समुदायानुवादेन सिद्धिरेवमिहापीति ।

नन्वेवं सत्यापराग्निकानामपि होमानां प्रधानत्वं स्यात् । समुदायानुवादे वा केन तेषामपकर्षः । न हि यथा पौर्णमास्यमवास्याशब्दयोः प्रयाजादिभ्यः कालसंयोगेनावच्छेदस्तथेह केनचित् क्रियते । नन्वग्नये होत्रमस्मिन्निति विशेषणं भविष्यति । न, तेषामप्यग्निदेवत्यत्वात् । अपि चैवं सत्यनिष्टं तव प्रसज्येत । प्रातराहुतेरग्निसंयोगाभावादनग्निहोत्रत्वेनाङ्गत्वं प्राप्नोति । तस्मात्सत्यसति वा समुदायानुवादे न कश्चिद्विशेषः । तथा यद्यापराग्निकानां होमानां भेदो यदि वा सर्वाग्निष्वेकमेवाभ्यस्तकर्म क्रियते सर्वथाग्निहोत्रशब्देन संनिध्यग्निसंयोगहोमत्वाविशेषात् फलसंयोगेन समवधानत्वम् । तथा चैकेषां सर्वसामानाधिकरण्येनाग्निहोत्रशब्दप्रयोगो गार्हपत्यान्वाहार्यवचनयोश्चतस्रश्चतस्रश्च आहुतीराहवनीये च द्वे विधायाह 'य एवं विद्वान्विराट् संपन्नमग्निहोत्रं जुहोति' इति । तस्मादनन्यप्रयोजनत्वादग्निहोत्रं जुहोतीत्ययमेव कर्मविधिः । ततश्च तण्डुलादिवाक्यवदेव गार्हपत्यादिसंयोगस्य गुणार्थत्वान्न कर्मभेदहेतुरस्ति । तदेव हि प्रकृतं कर्म तत्र तत्र प्रत्यभिजानीमः । कस्मात्पुनरेककर्मविषयत्वाद्दध्यादिवदेवाग्नयो न विकल्प्यन्ते । केचिदाहुः । अदृष्टार्थत्वादिति । निराधारस्यापि

मग्निहोत्रपदमपि । ननु समुदायानुवादवाक्यं तत्प्रतिपत्त्यर्थमेव । प्रयोगवाक्यं तु फले प्राक् प्रसिद्धं विनियुञ्जानं न समुदायं बोधयतीत्यपेक्षिते तत्पूर्वप्रतीर्ति तस्येत्यत आह—यथा चेति । राजसूये हि असमुदायीकृतानामेव प्राकृतानां कर्मणां यजिनैकफलान्वयेऽवबोधिते तदुपाधिसमुदायस्यैकत्वं यज्यर्थवाचिनामगतेनैकवचनेनानूद्यते । एवमिहापीति । तस्मात्सत्यसति चेति । सर्वथाऽग्निहोत्रशब्देनेत्यादिनास्य सम्बन्धः । सत्यसति वा समुदायानुवादेऽग्निहोत्रशब्देन फलवाक्यस्थेन परिग्रहात् समप्रधानत्वम् । तथापराग्निकानां भेदे चाभेदे च हेतुना समप्रधानत्वमिति विराट् सम्पन्नमित्यत्र विराडिति दशसंख्याख्येति । संख्यायुक्तेषु त्विति [मी० सू० १२।३।१०] । एकार्थास्तु विकल्पेरन्निति [मी० सू० १२।३।१०।] व्रीहियवादिषु विकल्पेऽभिहिते तदपवादाय तां चतुर्भिरादत्त इत्यावादिदमभिहितमिति । [1]अग्निभ्योऽपूर्वनिर्वृत्तिरित्यनिष्टापत्तिः केवलमुक्ता ।

हि प्रक्षेपस्याप्रतिष्ठेऽपि द्रव्ये संभवाददृष्टार्थोऽग्निसंयोगः । तच्च सर्वमदृष्टं संभावनीयमित्यावर्तते होमः । एवं तु सति पदादिभिरप्याहवनीयो न बाध्येत । अथ तत्र सकृद्धोमश्च वणादावृत्तिभयाद् बाधः, इहापि तत्तुल्यमिति विकल्पप्रसङ्गः । तस्माद्विराट्संपन्नमित्येतस्मादेव वचनात् संख्याविहितेषु[1] तु समुच्चयः' [मी० सू० १२।३।३०] इत्यनेन न्यायेन समुच्चयः । अन्यथा हि

अग्निभ्योऽपूर्वसिद्धिः स्यादाधारत्वोपलक्षिता ।
न चैकेनावरुद्धत्वादाधारान्तरसम्भवः ।।

सत्यप्यग्निसंयोगस्यादृष्टार्थत्वे सप्तमीश्रवणादाधारत्वप्रतिपत्तिद्वारं तदित्यवगमात्तस्य च प्रत्यक्षप्रतीतेरेकेनावरुद्धे कर्मणि नान्यत्संभवतीति विज्ञायते । तेनैकान्तेन विकल्पः प्राप्नोत्येव । कस्मात्पुनः 'तिस्र आहूतीर्जुहोति' इत्यादिवत्संख्यया कर्मभेदो न भवति । न, उत्पन्ने सति कर्मणि संख्योपजननात् । उत्पत्तिस्था हि संख्या भेदिका भवति 'तिस्र आहुतीः' इत्यादिषु । इयं पुनरवधारिते कर्मण्युपजायमाना 'एकादश प्रयाजान्' इतिवदभ्यासेनैव पूर्येतेति न स्वरूपभेदाय प्रभवति । तेनैकमेव सर्वाग्निष्वभ्यस्तं कर्मेति निश्चीयते । यत्तु सायंप्रातर्वाक्ययोरनेकार्थत्वात्कर्मविधित्वमिति । तत्र ब्रूमः, 'सायं जुहोति' 'प्रातुर्जुहोति' इति वाक्यान्तरप्राप्तः कालो देवताव्यवस्थापरे वाक्ये संकीर्त्यते । नन्वेवमपि कालविशिष्टकर्मानुवादाद्वाक्यभेदः स्यात् । न, प्रकरणलब्धे कर्मणि कालमात्रे देवताविधानात् । स तु कालो न स्वरूपेण देवतया संबध्यत इति प्रकरणलभ्यकर्मानुरक्तः संबध्यते । अथ वा विधीयमानसंप्रदानभूतदेवताकाङ्क्षितप्रकृतहोमपर्युपस्थापने न कालस्योपयोगः । न च लक्षणया लभ्यमानो होमो वाक्यं भिनत्ति । न च सायंकालेनान्यत्र स्थितो लक्षितः । तेन सायंहोमस्याग्निप्रजापती भविष्यतः । एवं प्रातर्होमस्य सूर्यप्रजापती इति सिद्धम् । नन्वेवमपि भिन्नपदोपात्ते द्वे द्वे देवते विदधती वाक्ये भिद्येयाताम् । नैककारकत्वादिति केचित् । कारकान्यत्वे हि विधेर्व्यापारभेदो भवति । एककारक-

कथं तु अदृष्टार्थत्वात् सहोभयान्वयो नावृत्तमेव प्रधानं प्रति न प्रतीयत इत्यनेनोच्यत इति । विधीयमानसम्प्रदानभूतेति । सम्प्रदानेन क्रियापेक्षिता न कालस्तेन तत्समुच्चरितः सायमादिशब्दः स्वसम्बन्धिक्रियाविशेषणलक्षण्या तदन्वयमनुभवति । नैककारकत्वादिति । नात्राग्नीषोमवद् व्यासक्तं कारकत्वमावृत्त्या चतुर्थ्या प्रातिपदिकार्थं तत्प्रतिपाद-

१. संख्यायुक्तेषु इति काशीमुद्रितपाठः ।

पूर्वस्यैव गुणादिन्द्रियवत् पशवः फलमिति । किं तावत् प्राप्तं समस्तेनैव पूर्वाधिकरणेन गुणात्फलमिति । तथा हि—

रेवतीवारवन्तीयसंबन्धव्यापृते विधौ ।
श्रूयते फलमत्रापि यागोऽतो न विधीयते ॥
रेवतीवारवन्तीयसंबन्धं च करिष्यति ।
विनैव प्रत्ययावृत्त्या क्त्वा शब्दः पृथक् श्रुतिः ॥

यस्तु रेवतीवारवन्तीयसंबन्धोत्पत्तिविधानात् तस्य च फलं प्रति विधानात्प्रत्ययावृत्तिलक्षणो वाक्यभेद आशङ्क्यते सोऽपि नाशङ्कितव्यः । स्वयमेव वेदेन तत्फलस्योपात्तत्वात् । रेवतीषु वारवन्तीयं कृत्वेति निष्पादिते हि संबन्धे यजेः परेण लिङा फलसंबन्धः केवलः कर्तव्यः । तेन नावृत्तिदोषो भविष्यति । तत्राप्याधारनिर्देशाद्रेवतीनां परार्थता प्राधान्याद् वारवन्तीयं फलं प्रति विधीयते । गुणोपादानवशेन धात्वर्थादुत्तारितो विधायकः फलाय गुणं विदधद् यदन्यत्राज्ञातशेषत्वं विधत्ते । रेवत्यश्च सप्तमीनिर्देशाद् वारवन्तीयशेषभूतत्वात्प्रयोजनान्तरमनपेक्षमाणा न फलेन संबध्यन्ते । तद्गुणकं तु

**यस्तु रेवतीवारवन्तीयेति । यजेतेत्येकोऽयं करोत्यर्थवचनः प्रत्ययो द्वौ च करोत्यर्थौ एका रेवतीषु वारवन्तीयक्रिया तयोः सम्बन्धापादिका । अपरा च सम्बन्धिना संबन्धेन वा फलक्रिया । तयोरेकेन शब्देन[1] विधित्सायामावृत्तिः स्यात् । नहि दधिवद्यागवच्चोभयसम्बन्धः पदार्थो यस्य फलसम्बन्ध एव वाक्यार्थः स्यात् । किन्तु सोऽप्यपरो वाक्यार्थ इति । स्वयमेव वेदेनेति । आवृत्त्यैव वेदेन करोत्यर्थोऽभिहितो न च वाक्यभेदः । क्त्वाशब्दगृहीतस्य सम्बन्धस्येतरशेषत्वेनावगमात् स्वरूपविधिरप्यस्य फलसम्बन्धविधिशेषस्यार्थाक्षेपादिति ।**

**सम्प्रति सम्बन्धसंबन्धिनां कस्य फले विधिः कस्य वा तच्छेषत्वमिति निरूपयति—तत्राप्याधारनिर्देशादिति । ननु यागवद् वारवन्तीयस्यापि प्राप्तत्वाद् रेवतीसम्बन्धातिरेकपरो विधिस्तासामेव फलान्वयं कुर्यात् । अथ यागे प्राप्तिर्न फले तेन तत्र विधिर्यागस्यापि स्यात् । सत्यं, यदि प्राप्तेरविधिं ब्रूमः किन्तु विशेषणोपादानादेकशक्तिविधायकोऽपेक्षितधात्वर्थानुवादो गुणपरो भवतीति क्त्वाशब्देन चेद् विशेषणोपनयनं**

1. शब्देन आ० मा० न पठति ।

वारवन्तीयं द्वितीयानिर्देशादवगतप्राधान्यं करोत्यविहितां भावनां प्रति धात्वर्थस्थानीयं प्रतीयमानं प्रयोजनापेक्षत्वात्फलवत्तां प्रतिपद्यते । अथवोभय-तिरस्कारेणात्रापि संबन्ध.देव फलमिति वक्तव्यम् । एवं च सति विपरि-वृत्तिप्राप्तो यजिः प्रकृतार्थावलम्बी वैतच्छब्दः । तस्माच्च यजिसमाना-धिकरणात्परा षष्ठी फलवता गुणेन सह प्रकरणात्प्राप्तमाश्रयाश्रयिसंबन्धं वदन्ती प्रमाणाभावाच्चाश्रयान्तरासंबन्धात् तन्निवृत्तिरूपप्रवृत्त एवकारः, पूर्वो-च्चरितन वचनान्तरेण च प्राप्तमग्निष्टोमसामसंबन्धविशिष्टं वारवन्तीयमित्यादि सर्वमकर्मान्तरत्वान्नित्यप्राप्तमनूद्यमानं न प्रत्ययमायासयिष्यति । कर्मान्तरपक्षे तु सर्वमप्राप्तत्वाद्विधातव्यम् । न च तल्लभ्यते । कुतः ?

एकशक्तिः स्वभावेन सर्वदैव विधायकः ।
अल्पार्थविधिसंतुष्टो नानेकार्थविधिक्षमः ।।

तेन कृत्वाशब्देन रेवतीनां वारवन्तीयसंबन्धमात्रं लिङा च फल-संबन्धमात्रं विधीयत इति ज्यायान् गुणविधिपक्षः । सर्वे चैतेऽनुवादा यज्य-नुवादेनैव तन्मूलत्वात्प्रदर्शिता भवन्तीति न *भाष्यकारेण* प्रत्येकमुपवर्णिताः । तस्मान्न कर्मान्तरमिति प्राप्तेऽभिधीयते ।

आश्रयत्वेन गृह्णाति यो गुणः प्रकृतां क्रियाम् ।
तत्संबन्धानुवादत्वात्तत्र भेदो न गम्यते ।।

इदं तावद्वाक्यमेतस्यैव रेवतीष्वित्यादि यजिमच्छ्रूयते । स च यजि-र्यादृगत्र श्रूयते तादृग्यदि कुतश्चित्प्राप्तस्ततः शक्यमकर्मान्तरत्वमध्यवसातुम् ।

**स च रेवत्यधिकरणातिरेकवारवन्तीयस्य स्वयं विधाय तास्तदर्थाः कृत्वा वारवन्तीयमेव द्वितीयानिर्देशात् प्राधान्येनोपादायाख्यातार्थविशेषणी-करोति । ततो विशेषणपरेणाख्यातेन इतरत् प्रति प्रधानस्य धात्वर्थ-स्यैवाकाङ्क्षितप्रयोजनस्य वारवन्तीयस्य फले विधिरिति । विपरिवृत्ति-प्राप्तो यजिरिति । वारवन्तीयस्य दधिवदायागकारकस्य कृत्वाशब्दो-पात्तेन पौर्वापर्येण तदन्वितस्याख्यातोपात्त[1]विधिविधेयत्वं यागश्चाश्रयत्वेन विपरिवृत्तितः प्राप्तोऽनूद्यते । पौर्वापर्यमपि तेन सह प्राप्तमेव । ततश्च वारवन्तीयं पशुकामः कुर्यादित्या[2]ख्यातप्रत्ययार्थो रेवतीषु वारवन्तीयं कुर्यादिति करोतेः । अस्य चोपसर्जनत्वाद् रेवतीषु कृतेन वारवन्तीयेन पशुं भावयेदिति वाक्यार्थः सम्पद्यते । तद् यथा दधिहोमसंबन्धादिति । दधिहोमयोः प्रमाणान्तरादेव सम्बन्धादिन्द्रियकामवाक्ये यथा न कर्मा**

१. विधिविषयत्वम् आ० मा० ।
२. त्याख्यातेत्यारभ्य कुर्यादिति यावत् आ० मा० न पठति ।

तद्यथा दधिहोमसंबन्धलाभादिन्द्रियकामवाक्ये । श्रुतफलसंबन्धमात्रे वाक्येन विधीयमाने प्रकरणादेवाश्रयापेक्षायां[1] लब्धो होमसंबन्ध इत्यनूद्यते । शक्नोति हि दधिसाक्षादेव होमं निर्वर्तयितुं न तु रेवतीगुणकं वारवन्तीयं यागनिर्वृत्तिसमर्थमद्रव्यदेवतात्मकत्वात् । तथा हि—

देवताद्रव्यकर्तृभ्यो नातिरिक्तमपेक्षते ।
यागः साधनमित्येवं साम्ना नैवैष साध्यते ।।

तस्मात्प्रकरणवशेन बुद्धावुपप्लवमानोऽपि यागः सामाश्रयत्वमयोग्यत्वादप्रतिपद्यमानो न रेवतीवारवन्तीयवाक्ये शक्योऽनुवदितुम् । प्राप्तिप्रमाणाभावात् । यत्तु वारवन्तीयस्य साध्यत्वेनाश्रयत्वप्रतिपत्तिक्षमं स्तोत्रं न तस्य प्रकरणम् । आतिदेशिकत्वादग्निष्टुदिति स्तोत्राणाम् । आह च

स्तोत्रसाधनभूतत्वं साम्नो योग्यतया स्थितम् ।
स्तोत्रं च प्रकृतं नास्तीत्याश्रयो न प्रतीयते ।।

अथोच्येत यथानेन शक्यते यागः कर्तुं तथा कुर्वंदाश्रयिष्यति । यथा च शक्नोति याग आश्रयत्वं प्रतिपत्तुं तथा प्रतिपत्स्यते । सर्वाख्यातसहकारिशक्त्यनुसारेणावगमात् । 'आनर्थक्यात्तदङ्गेषु [मी० सू० ३।१।१८]' इत्यनेन न्यायेनाङ्गभूतस्तोत्रद्वारेणाश्रयाश्रयिसंबन्धः सेत्स्यतीति । तदनुपपन्नम् । उक्तं ह्येतत्

तन्नामाङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम् ।
प्राधान्यावस्थितं यत्तु तदङ्गं नोपसर्पति ।।

न्तरत्वमध्यवसितं नैवमत्रेति सम्बन्धस्ततो दृष्टान्तविवरणं श्रुतफलसंबन्धमात्र इति । आतिदेशिकत्वादग्निष्टुदिति । ननु प्रकृतिवच्छब्दसन्निधापितप्रयाजाद्यनुवादेन विकृतिषु गुणविधयो दृश्यन्ते । सत्यं यत्र स्वरूपानुवादो वाक्येन तत्र गुणस्य तत्सम्बन्धे तत्प्रकरणादेव तत्सम्बन्धः । स च स्वशब्देनैकस्य प्रक्रमे भवतीति । उक्तं ह्येतदिति । औदुम्बराधिकरण एतदुक्तं यदङ्गत्वेन चोदितं तस्य शाब्दः शेषभावोऽवश्योपपाद्यः । साक्षादसंभवन् परम्परयाश्रीयते । असंभवति च परम्परयाप्युपकारकत्वमात्रेण । अत्र तु योग्यत्वादन्वयो नायोग्ययोः सिद्ध इति । कस्योपपत्तये परम्पराश्रीयते । न च तयोपपद्यते व्यापरत्वजनिका हि क्रियाश्रयः यस्यां

1. आश्रयापेक्षया इतिमुद्रितपुस्तकटिप्पणीधृतपाठः ।

'सप्तदशारत्निर्वाजपेयस्य यूपः' इति सप्तदशारत्नित्वं गुणत्वेन चोद्यमानं साक्षाद् वाजपेयस्यासंभवाद् यथा शक्नोति तथोपकरिष्यतीत्यध्यवसानात् तदङ्गपशुयूपाङ्गत्वेनावधार्यते । यदि तथैव वारवन्तीयमपि यागाङ्गत्वेन चोद्येत ततस्तत्रासंभवात्तदङ्गानि स्तोत्राण्युपसर्पेत् । इदं पुनः फले विहितं गुणभूतां क्रियामाश्रयत्वेनापेक्षमाणां यदि योग्यां लभते ततो गृह्णाति । अथ न लभते ततो वाक्यादर्थान्तरत्वं प्रतिपद्यते । न चैतदन्यथाऽनर्थकं भवति । कर्मान्तरविधाने सुतरामर्थवत्त्वात् । अत्यन्तभेदाच्च यागस्तोत्रयोर्न स्तोत्रे साधिते यागः साधित इति शक्यं वक्तुम् । तत्र यथैव क्रत्वन्तरे श्रुतं क्रत्वन्तरे क्रियेत तादृगेवैतत् स्यात् । वाजपेयस्येति तु सामान्यसंबन्धमात्रवाचिनी षष्ठी पारम्पर्याद् यागेऽप्यविरुद्धेति वैषम्यम् । यद्यपि स्तोत्रद्वारेण क्रतोराश्रयत्वं स्यात्तथापि सर्वस्तोत्रेषु प्रसज्यमानेष्वग्निष्टोमसोमेत्यनर्थकं भवेत् । तत्राग्निष्टोमसाम्नि वाक्येनैवाश्रये कल्प्यमाने वाक्यभेदः, पुनरपि च वाक्येनाग्निष्टोमसाममात्रसंबन्धेऽवगम्यमाने यद्यैतस्यैवेति विशेष्यते ततोऽपि वाक्यभेदः । एतस्यैवेति च[1] पूर्वं संबन्धे तथैव सर्वतदीयस्तोत्रसंबन्धापत्तेरग्निष्टोमसामेति विशेषणात्स एव वाक्यभेदः । ऋक्सामसंबन्धकरणकृतं चातिगौरवं स्थितमेव । ननु चास्मिन्नग्निष्टुत्याश्रयत्वेन लब्धे पूर्वविधिनैव शेषमवाप्स्यते । वारवन्तीयं हि क्रतुमाश्रयद्यत्र स्थाने स्थितं साधयद् दृष्टं न ततोऽन्यत्र भविष्यति । क्रतुरपि च तत्रान्यस्तोत्रगामित्वेनापेक्षिष्यते प्रकृतक्रत्वग्निष्टोमसामसंबन्धिवारवन्तीयातिक्रमकारणाभावाच्च न क्रत्वन्तरस्तोत्रान्तरसंबन्धाशङ्का । नैतदेवम् । यदि हि वारवन्तीयाग्निष्टोमसाम-

च यत्कारकं तत्तयः व्यापारवन्न क्रियान्तरव्यवहितयोपकार्यतामात्रेण स्थितयेति । ऋक्सामसम्बन्धेति । वारवन्तीयकरणिका फलभावना विधीयमाना स्वविशेषणं विधापयेत् । न च रेवत्यस्तद्विशेषणमविशेषेणोभयोः करणत्वापत्तेः । न ह्यत्र धात्वर्थवदेकं विशेष्यते येन तदेव करणमितरत् तदर्थं स्यात् । तेन वारवन्तीये रेवतीविधिस्तत्र विध्यावृत्तौ गौरवं वारवन्तीयवैरूप्यं चेति । किञ्च वारवन्तीयमविशेषशब्दः प्रकरणाद् यथा विज्ञातविशेषमेव तदवलम्बत इति कुतोऽन्यगताशङ्केत्याह— प्रकृतक्रत्वग्निष्टोमेति । तदेतद् दूषयति—नैतदेवमिति । अपेक्षितो हि प्रकरणादाश्रीयते विशेषो न च वारवन्तीयफलविधिरेवंविधविशेषापेक्षा

1. चापूर्वसंबन्धे इति काशीमुद्रितपाठः ।

विधिवाक्यं रेवतीवाक्येनापेक्ष्येत तत एवं विज्ञायेत । न तु तदपेक्षाऽस्ति । गुणादिवाक्यानां परस्परसंबन्धाभावादित्युक्तं प्राक् । पूर्वसंबन्धविलक्षणश्चायं क्रतोर्वारवन्तीयेन संबन्धो न तत्कल्पितस्थानविषयत्वं प्रतिपत्स्यते । कर्माङ्गभूतस्य हि तस्यैतत्क्रत्वग्निष्टोमसामत्वं विज्ञातम् । इदानीं पुरुषार्थभूतत्वाद् वेदस्तावन्न तदेव स्थानं कल्पयति । सामान्यतो दृष्टकल्पनायाश्चैवं जातीयकेष्वप्रमाणत्वमुक्तम् । आह च

फलाय विहितं साम स्वतन्त्रं रूपमात्रतः ।
वेदस्त्वाध्यायमेवैकमुत्पत्त्यर्थमपेक्षते ॥

यदि वारवन्तीयमग्निष्टुत्येव प्रथममुत्पाद्येत ततो गत्यन्तराभावादनुक्तमपि तद्विषयं विज्ञायेत । इदं पुनः समाम्नायमात्राधीनोत्पत्ति तत एव गृहीत्वा फलाय चोद्यते । तत्र क्रत्वन्तरस्तोत्रान्तरैरेतत्क्रत्वग्निष्टोमसाम्नो न कश्चिद्विशेषः । यदि च वारवन्तीयसंस्कारः कश्चिद् विधीयेत ततः कथञ्चिद् व्रीहिप्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेत् । न चैवमस्ति । तस्मान्नाग्निष्टोमसामसंबन्धसिद्धिः । ननु च पुरुषार्थमपि सदेतत्क्रतुमसाधयन्न शक्नोति पुरुषार्थं भवितुमिति प्रासङ्गिक्यां क्रतुसिद्धौ पूर्वक्लृप्तं स्थानं लभ्य[1]ते । यथेज्यार्थे दधिपयसी प्रणीताधर्माननुपलभेते । तत्रैवैतद् भवति

न च सन्निधिस्तुल्यजातीयगुणान्तरव्यवधानात् । सोऽयं न्यायोऽनन्तरातीतेऽधिकरणे उक्त इति । फलाय विहितं सामेति । वेदो विधिरुत्पादकमेव केवलमपेक्षते स्वाध्यायं नाधिकं, यतः स्वतन्त्ररूपमात्रेण सामफलाय तेन विहितमिति । यथेज्यार्थे इति । दर्शपूर्णमास्ययोरामावास्ये कर्मणि यस्य हविर्निरुप्तं चन्द्रमा अभ्युदियात् स त्रेधा तण्डुलान् विभजेदित्युक्त्वा तण्डुलविभागयोर्दधिपयःसहितयोर्देवतासंबन्धः कृतः । तत्र प्रणीतानामपां कार्यं पाकनिर्वृत्तिरिज्यार्थाभ्यां दधिपयोभ्यां प्रसङ्गात् भवतीति । प्रणीतानां तु धर्मास्तयोः कार्या उत नेति सन्देहे पूर्वः पक्षः । कार्योपयोगिनस्ते यत् तस्मै कार्याय प्रवृत्तं तेन प्रयुज्यन्ते नातदर्थेन । अतोऽतदर्थेन दधनि पयसि च न कर्तव्येति । सिद्धान्तस्तु कार्येण स्वनिवृत्त्युपयोगिनि संस्काराः प्रयुज्यन्ते । अस्ति च दधिपयसोरतदर्थयोरपि तन्निवर्तकत्वं यदाश्रितास्तदुपोगिनो भवन्ति । तस्मात्

1. लप्स्यते इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

यत्र गुणभूता धर्मा भवन्ति। न चेहाग्निष्टोमसामत्वं नाम वारवन्तीयस्य गुणः। प्रकरणग्रहणे हि सति गुणत्वमपि स्यात्। तदेव त्वद्याप्यसिद्धावस्थम्। यदि तु केनचित् प्रकारेणाग्निष्टोमसामसंबन्धोऽवगम्यते ततस्तद्धर्मास्तस्य प्रणीताधर्मवन्नैव कश्चिद् वारयिष्यति। तस्मान्नैषोऽपि परिहारो भवतीत्य-पूर्वकर्मविधिनैवैकवाक्यत्वमुपपादनीयम्। तथा सति हि यद्यपि सर्वमप्राप्तं तथापि विशिष्टविधिना शक्यं विधातुम्। किं पुनर्यदा निकायित्वात् पूर्वा-ग्निष्टुद्धर्मेष्वत्रादिश्यमानेषु बह्वेव प्राप्तम्। एतच्छब्दस्तावद्धर्मलक्षणयानुवादो भविष्यति। न चानुवादे लक्षणादोषः। प्रस्तूयमानकर्मवचनत्वेन वा 'अथैष ज्योतिः' इत्यादिवन्मुख्यरूपेणैव वर्तिष्यते। तदा[1] वारवन्तीयं क्रत्वर्थभूत-मतिदेशेनैव प्राप्नोतीति तदप्यनुवदिष्यते। क्रत्वाशब्दकल्पितरेवतीवार-वन्तीयसंबन्धविशिष्टयागमात्रविधानात्तु लाघवं विधेः। नन्वग्निष्टोमसाम्नो रेवतीवारवन्तीयसंबन्धो यागश्चात्र विधीयत इत्यन्यैर्विशिष्टविधिभिर्वैषम्यं विधायकस्य स्यात्। तथा हि—

नैकप्रयत्नसाध्यत्वं क्रियान्तरविशेषणे।
तेन क्रियां विधायान्यस्तत्र कार्यः पुनर्विधिः॥

कर्तव्येति। यत्र गुणभूता इति। अतदर्थसाधनसम्बन्धिनो धर्मा येऽभि-मतास्ते यदि साधनस्य गुणभूता भवन्ति। न चाग्निष्टोमसामत्वं क्रतु-साधनस्य साम्नो गुणभूतं किन्तु विपरीतमग्निष्टोमस्तोत्रस्यैव सामगुण-भूतं तद्द्वारेण क्रत्वङ्गमिति। अभ्युपेत्यापि गुणभावमुच्यते—प्रकरणग्रहणेति। गुणत्वमपि वारवन्तीयं प्रत्यग्निष्टोमसामत्वस्य भवत्प्रकरणेन क्रत्वाश्रये वारवन्तीये प्रसङ्गात् क्रतूपकारकत्वे सिद्धे स्यान्न च साक्षात् क्रतुसिद्धार्थ-योग्यस्याग्निष्टोमस्यान्वयात् प्राक् तदेव सिद्धम्। ततश्चेतरेतराश्रयमिति। न्यायं तु भवदुक्तं न वारयाम इत्याह—यदि तु केनचित् प्रकारेणेति। निकायित्वादिति। सन्ति निकायिनः क्रमाम्नाताः साहस्रा साद्यस्का इत्येकैकेन शब्देन संहत्योक्तास्तेषां पूर्वो धर्मानुत्तरेऽधर्मकाः। तेष्वव्यक्त चोदनात्वाज्ज्योतिष्टोमधर्मातिदेशप्रसङ्गे वक्ष्यते। निकायिनां च पूर्वस्य परेषु धर्माणामतिदेशः। अस्ति निकायित्वेन प्रत्यासत्तिविशेष इति। नन्वग्निष्टोमसाम्न इति। अतिदेशप्राप्तस्य वारवन्तीयगुणकस्याग्निष्टोम-स्तोत्रस्यानुवादेन रेवतीषु वारवन्तीयमग्निष्टोमसामेति तदङ्गविधि-

1. तदत्र इति काशीमुद्रितपाठः।

यान्येकक्रियाविशेषणानि भवन्ति तानि तया विधीयमानयार्था-दाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने तया क्रियया संबन्धरहितयानाक्षिप्यमाणेऽवश्यं विधायकस्यावृत्तिरेष्टव्येति वाक्यभेदः प्राप्नोत्येव । नैष दोषः ।

क्रत्वा शब्दार्थमेवैकं गृह्णीते भावनोत्तरा ।
सोऽपि स्वगोचरप्राप्तं ग्रहीष्यति विशेषणम् ॥
नवेन क्रतुना पश्चादृक्सामग्रहणे कृते ।
क्लृप्तस्थानेन साम्नैव रेवतीस्थानकल्पना ॥

रेवतीवारवन्तीयसंबन्धं निष्पाद्योत्तरभावनापेक्षोऽवस्थितः स्वविशेषण-विशिष्टः क्रत्वाशब्दार्थः क्रतुना गृह्यते । अतश्च स्वविशेषणाक्षेप एव क्रतोः । स तु तत्संबन्धं साक्षादनुपजीवन् गुणभूतत्वादङ्गेषु निक्षिपन्नतिदेशविज्ञातस्थान-वारवन्तीयवशेन रेवतीरपि तद्विषयाः कल्पयति । तेन यद्यप्यत्र वाक्येऽग्नि-ष्टोमसाम न विधीयते तथापि क्रतुविशेषणमपि तत्र संक्रामतीत्यदोषः । अतश्च प्रकृतयागसंबन्धस्त्वत्पक्षे वारवन्तीयस्य नास्ति । पश्य—

रसावयागविशेषणविषयो विशिष्टयागविधेरर्थादप्रसिद्ध्यन्[1] प्रत्यया-वृत्तिं प्रयोजयतीति । क्रत्वा शब्दार्थमिति । क्रत्वा शब्दसमर्पितो रेवती-वारवन्तीयसम्बन्धः क्रतुना गृहीतस्तद्विशेषणतया विशिष्टविधिना विधीयते अङ्गेषु चानर्थक्यात् तदङ्गन्यायस्योपपादितत्वात् साक्षाद सम्भवात् स्तोत्रद्वारेण भवति । तत्रैकस्य सम्बन्धिनो वारवन्तीयस्या-तिदेशेनाग्निष्टोमस्तोत्रस्थानत्वमवगतमेवेत्यज्ञातस्थाना[2] रेवत्यस्त-द्वशेन तत्स्थानाः भवन्ति । सैवमग्निष्टोमसामवाक्येऽस्मिन्ननूहिताग्नि-ष्टोमसामक्रत्वेति । अतश्चेति । अस्मादपि कारणादित्यर्थः । कथं तर्हि यो वृष्टिकामः स सौभरेण स्तुवीतेति प्रकृतस्तोत्राश्रयत्वं सौभरस्य । तदुच्यते, स्तुवीतेत्याख्यातस्थो विधिः कारकविभक्त्या स्तोत्रविशेषणी कृते सौभरे सङ्क्रान्तस्तत्फलार्थं करोति । तत्र स्तुतितत्सम्बन्धयोः प्रकरणप्राप्तयोरनुवादो वक्तव्यः । सौभरेणेति तु पदार्थो विधीयते । न चासौ क्रियान्तरमनपेक्ष्य कारकं भवतीति तदपेक्षा । अत्र तु करोत्यर्थ-व्यापारसामान्यकर्मतयोपात्तं वारवन्तीयं विधिविषयीभवति । तच्चाविरुद्धमसंबद्धस्यापि क्रियान्तरेण स्वतन्त्रस्याक्षु मीयमानस्येति ।

---

1. बप्रसिद्धः आ० मा० । 2. अज्ञातस्था आ० मा० ।

आत्मना ह्यक्रियारूपैर्गुणैराश्रीयते क्रिया ।
वारवन्तीयगीतेस्तु क्रियया किं प्रयोजनम् ।।

दधिगोदोहनादीनि क्रियया विना करणत्वमलभमानानि तामपेक्षन्ते । वारवन्तीयं पुनर्गायतिधातुवाच्यक्रियात्मकत्वाद् विनैव क्रियान्तरेण यागवत्फलभवनसमर्थमित्यनपेक्षत्वाद्यागेनासंबध्यमानं स्वतन्त्रमेव रेवतीषु गीयमानमग्निष्टुत्प्रयोगाद्बहिरेव फलं साधयेत् । ततश्चैतस्यैवेति चाग्निष्टोमसामेति च क्त्वाशब्दश्च यजेतेति च सर्वमसंबद्धं स्यात् । तस्माद् यागात्फलम् । स च पूर्वविलक्षणविशेषणविशिष्टत्वात्कर्मान्तरम् । समेष्विति—अयोग्यत्वाद् यागगुणयोराश्रयाश्रयिसंबन्धानपेक्षत्वाभिप्रायम् । क्रियात्मकत्वाद्वा क्रियान्तरानपेक्षत्वमुच्यते । भिन्नवाक्येष्विति । पक्षद्वयेऽपि गुणफलसंबन्धस्य यागान्तरविधानस्य वार्थान्तरत्वात्सेत्स्यत्येव लक्षणतो वाक्यभेदे पूर्वक्रतुसंबन्धे भवत्येव किञ्चिदेव वाक्यरूपम् । क्रत्वन्तरसंबन्धे त्वत्यन्तभेद इत्यभिप्रायः । न ह्येतस्य रेवत्यः सन्तीत्यानन्तर्यात्तावदेषा वचनव्यक्तिः प्रतिभाति, एतस्य या रेवत्यस्तासु वारवन्तीयं कृत्वेति । तत्र यद्यपि प्रकरणलभ्यत्वादेतस्यैति विशिष्टानुवादो न वाक्यं भिनत्ति तथापि रेवतीस्वरूपकर्तव्यतैव तावदप्राप्तेति नानूद्यते । तत्र रेवत्यः प्रयोक्तव्याः तासु च वारवन्तीयमित्येको वाक्यभेदः, [1]तच्छब्दवैयर्थ्यं च । अथ त्वेतच्छब्दानुग्रहार्थमेतस्य रेवत्यः कर्तव्याः, तासु च वारवन्तीयं, तच्च फलायेति विधीयते यजिश्चानूद्यत इति तथाप्यर्थत्रयानिमित्तवाक्यभेदाभ्युपगमेनाग्निष्टोमसामसंबन्धो

न ह्येतस्य रेवत्य इत्यादि *भाष्यमनुभाष्य* व्याचष्टे—न ह्येतस्य रेवत्य इति । प्रकरणलभ्यत्वादिति । सतीषु तस्य रेवतीषु न विशिष्टानुवाददोषः । किन्तु एता एव न सन्ति । अथ विधीयन्ते ततो वारवन्तीयं प्रति विधानादेतस्येति । क्रतुसम्बन्धाभिधानमर्थशून्यमित्याह—तच्छब्दवैयर्थ्यं चेति । अथ प्रथमं तत्सम्बन्धस्ततो वारवन्तीयसम्बन्धस्ततोऽर्थत्रयविधानम् । तदप्यङ्गीकृत्योक्तं *भाष्ये*—तथाप्यग्निष्टोमसामेति । नावकल्पत इति । ततो *भाष्यम*थाग्निष्टोमसाम्नः कार्ये भविष्यतीत्युच्यते । एतस्यैवेत्यविवक्षितं स्यात्, उभयस्मिन् निवक्ष्यमाणे वा वाक्यभेद इति । तद्व्याचष्टे

१. अजिता संमतपाठः । प्रकाशितपाठस्तु एतच्छब्देति ध्येयम् ।

विधातुमनुवदितुं वाशक्यत्वादुभयथापि नावकल्पते । अथ सोऽपि विधीयेत तथा सति पूर्वस्माद्विध्यपगमाद[1]ग्निष्टोमसाममात्रप्रसङ्गादेतस्यैवेत्यनर्थकं, विधीयमाने वाक्यभेद इत्येका ग्रन्थयोजना । अथवा—यथाक्रमावस्थित एवैतच्छब्दो रेवतीविशेषणं स तथाभूत एवाभ्युपगम्यते । ततश्चैवं वचनं व्यज्यते—एतस्य या रेवत्यस्तासु वारवन्तीयमग्निष्टोमसाम कृत्वेति । तत्तु[2] कस्य क्रतोरित्यविशेषणादेतच्छब्दस्य च रेवतीविशेषणत्वेनोपक्षीणत्वादेतस्या-ग्निष्टोमसामेति न लभ्यते । तद्विवक्षायां वा पुनरपि वाक्यभेदः । इहैव सर्वाः पूर्वपक्षवचनव्यक्तीर्निराकृत्य सिद्धान्ते कथमवाक्यभेद इति प्रष्टव्ये पूर्वपक्ष-वादी विस्मितः पृच्छति । तथा नाम [3]संप्रति विहिते सति अनेनाकाश एवे-यन्तो वाक्यभेदा इन्द्रजालवदेव दर्शिताः । ततः पृच्छामि तावदेतस्य कथम-वाक्यभेद इति । सिद्धान्तवादी त्वप्राप्तकर्म विधीयते । विशिष्टविधानो-पपत्तौ सत्यामेकार्थत्वादित्याह । नन्वर्थभेद इति—वृत्तान्ताख्यातोपात्त-भावनाद्वयैकवाक्यत्वासंभवाभिप्रायेण । नेति ब्रूम इति—गुणभूतैकभावना-विशिष्टप्रधानभूतभावनान्तरविधानाभिप्रायम् । रेवतीनां वारवन्तीयस्य च संबन्धो न विहितः स्यादिति—विशेषणविशेषणानामविधेयत्वाल्लिङ्गा तावन्न विधीयते । कृत्वाशब्दश्च नैवं विधौ स्मर्यते । तेन यद्यपि संबद्धा भावना-

**अथ सोऽपि विधीयत इति । वाक्येनाग्निष्टोममात्रसम्बन्धः स्यान्न चैतच्छब्दस्य रेवतीविशेषणतां विहाय अग्निष्टोमविशेषणत्वादतिप्रसङ्गाभाव इति वक्तव्यम् । अग्निष्टोमसंबन्धविधावनेकार्थविध्यशक्तेः पूर्वस्मादेतच्छब्दात् विध्यपगमादनिष्टप्रसङ्गे च सत्येतस्येत्यनुवादासंभवादर्थशून्यम् । तस्यापि विधौ वाक्यभेद इत्येका *भाष्ययोजना* । अथ वा रेवतीविशेषण-त्वेनोपक्षीणस्याग्निष्टोमं प्रत्यविवक्षेत्युक्तमेतस्येत्यविवक्षितमिति । न च रेवतीभ्योऽपह्नवस्याग्निष्टोमविशेषणता शङ्क्या विधानाशक्तेरित्याह —अथ वेति । यदि तु रेवतीविशेषणस्याग्निष्टोमविशेषणत्वमप्युच्यते । तत्र *भाष्य*मुभयस्मिन्निति । तद् व्याचष्टे—तदविवक्षायां चेति ।**

**विशेषणविशेषणानामिति । विधेयभावनाविशेषणं कृत्वा शब्दार्थस्तद्-विशेषणमृक्सामसम्बन्धः तस्या विधेयत्वासंबद्धस्य भावना न विहिता स्यात् ।**

१. अग्निष्टोममात्रप्रसङ्गात् इति काशीमुद्रितपाठः ।

२. तत्र इति काशीमुद्रितपाठः । ३. सुप्रतिविहिते इति काशीमुद्रितपाठः ।

भिधीयते तथापि विध्यधीनप्रवृत्तित्वात्पुरुषः सतीमपि तामसतीमिव प्रतिपद्यते । तेन[1] यागभावनामात्रविशेषणत्वाद्रेवतीवारवन्तीययोस्तदबहिर्भावमात्रेण प्रयोक्तव्ययोरन्यनियमप्रमाणाभावादेकस्तोत्रविषयत्वे तदेकदेशनियमे चासति रेवतीषु ऋक्ष्वन्यान्यपि गायत्रीसहिमवादीनि सामानि प्राप्नुवन्ति । सामापि वारवन्तीयमन्यास्वावापभूतासु गायत्रीबृहत्यनुष्टुप्सु प्राप्नोति । तत्र रेवतीषु वारवन्तीयमिति संबन्धप्रतीतिर्व्यर्था स्यात् । अतो वारवन्तीयमेव यथावधृतस्थानमुद्दिश्य रेवत्यो विहिता इति । नैष दोषः ।

विधित्वं यद्यपि श्रुत्या न क्त्वेति ब्रवीत्ययम् ।
तथाप्येवंविधे तस्य विधित्वं फलमिष्यते ॥

सर्वत्रैव यत्रेदं कृत्वेदं कुर्यादिति श्रूयते । तत्र यदि तावत् क्त्वान्तधातुवाच्या क्रियान्यत एव प्राप्ता ततो निमित्तार्थं श्रवणं भवति । अथ तु न प्राप्ता तत उत्तरस्याः करणं पूर्वनिर्वृत्त्युत्तरकालत्वेन विहितं तामननुष्ठाय यथाकर्तुं न शक्यत इत्यर्थादवश्यं कर्तव्या सती विहितवद्विज्ञास्यते । न चेह रेवतीवारवन्तीयसंबन्धः प्राग्विधेः कुतश्चित्प्राप्तो येन निमित्ततयाश्रीयेत । तस्मादनुष्ठेय एव विज्ञायते । यदि तर्ह्यनुष्ठेयत्वेन संबन्ध उपपन्नः कथमुत्तरयानुष्ठेयत्वोपात्तयैव सह संबध्यते । तदर्थमाह—द्वावप्येतावर्थौ क्त्वेत्येष शब्दः शक्नोति वदितुमिति । कथमेकेनानेकार्थावगतिरिति चेदत आह—दृष्टा हि क्वचिदियमपि गतिः । यथा शोणमान-

**भावनामात्रेण तु न किञ्चिद् विहितेन । ततश्च प्रधानभावनैकवाक्यतया तदङ्गत्वमात्रेण प्रतीतयोरनेकस्तोत्रके प्रधानेऽन्यत्र रेवत्योऽन्यत्र वारवन्तीयमित्यपि स्यात् । एकस्तोत्रनिवेशे वा नाना सोमके तस्मिन् ऋक्सामयोर्न नियमः सिद्ध्येत् । तथा हि पूर्वयागधर्मातिदेशादेकविंशमग्निष्टो[1]मस्तोत्रमावापेनर्चामत्र सम्पाद्यम् । [2]सर्वत्र चावापो गायत्र्यनुष्टुब्बृहतीनां वचनात् । तत्र तासु वारवन्तीयरेवतीषु चान्यानि सामानीत्यपि स्यादिति । सर्वत्रैवेति । क्त्वेति तावत् स्वार्थविशेषपरमुपाधिव्यङ्ग्यत्वाद् विशेष्यस्य गृहीतऋक्सामसंबन्धमेव स्वार्थमालम्बनीकरोति । तत्र विशिष्टभावनाविधिरतद्विशेषणत्वात् करोत्यर्थविशेषणं सा विदधातु । तदुत्तरकालीनतां तु स्वविषयस्याश्रयति । सा च तदनुष्ठाने**

१. तेन प्रतिपद्य यागभावनेति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

१. °मग्निष्टोमसामेति आ० मा० । २. पूर्वत्र आ० मा० ।

येति। प्रमाणान्तरप्राप्तेऽप्यानयतो रक्तोऽश्वश्चोद्यमानो न रक्ताश्वशब्दाश्यामिवाभिहितो वाक्यभेदं जनयति । तथाक्त्वाशब्दोपात्ता निवृत्तिः पूर्वकालत्वं चेति। अथ वा

तत्रैव न विधीयेत विशेषणविशेषणम् ।
यत्र द्रव्याङ्गभूतं तन्न कर्माङ्गं प्रतीयते ॥

**तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् [मी० सू० ४।१।११]**

इति द्रव्यविशेषणानां[1]विध्यसंस्पर्शो वक्ष्यते, रेवतीवारवन्तीयसंबन्धस्तु करोतेर्विशेषणम् । सामान्यभूतत्वाच्च करोत्यर्थस्तद्रहितोऽननुष्ठेयत्वं प्रतिपद्यते। तेन मृष्यामहे हविषा विशेषणमितिवद्यजिभावनाविशेषणस्य करोत्यर्थस्यावश्यं रेवतीवारवन्तीयसंबन्धविशिष्टताभ्युपगन्तव्या । तथा च क्रियाविशेषणानामपि प्रयाजादीनां विशेषणानि द्रव्यदेवतादीनि दर्शपूर्णमासादिषूपयोक्ष्यन्ते । तस्मान्निष्पन्नसंबन्धविशेषितायां भावनायामृक्सामयोर्नियमः सेत्स्यति। क्त्वाशब्दश्चात्र प्रतिपत्तिक्रमनियमनिवृत्त्यर्थ एव द्रष्टव्यो नानुष्ठाननिवृत्त्यर्थः। अग्निष्टोमसाम्नः प्राग्यागादप्रयोगात् । अतो नैवं विज्ञायते रेवतीषु वारवन्तीयं प्रयुज्य यष्टव्यमिति । किं तर्हि, एवं करिष्यामीति परिकल्प्य यागः प्रक्रमितव्य इति। नन्वेवमपीति । यावदभिधेयं विधिकल्पनादनेकवाक्यत्वमिति मन्यते । नैष दोष इति। न तावदभिधेयनानात्वेनानेकार्थत्वं भवतीत्युक्तम्। अथ प्रयोजनभूतविधेयनानात्वमेव मन्येथाः। तत्रोच्यते।

श्रूयन्ते बहवोऽत्रार्था एक एव विधीयते ।
विशिष्टा भावना सा च याग इत्युपलक्षिता ॥

ननु रेवत्योऽपि विधीयन्त इति। यदि श्रुतमात्रानुपात्येवानेकार्थत्वं भवेत्तत एष परिहारः स्यात्। एते तु सर्वे विधीयमानत्वात् प्रयोजनभूतास्तस्मादनेकार्थत्वमस्त्येवेति। उच्यते

**भवतीति । तस्याप्यनुष्ठेयता विज्ञायते । एवं विधेयभावना विषयानन्तर्गतस्यापि विधेयत्वमुपपाद्य सम्प्रति तदन्तर्गतिमेवाह—तत्रैव न विधीयेतेति । अन्तर्भूतविशेषणस्यैव क्त्वाशब्दार्थस्य विशेषणत्वं न केवलस्य द्रव्यवदनिरूपणात् । यस्य हि विशेषणमविधेयं गृह्यते यथाग्निषोमीयं पशुमालभेतेत्यत्र पशुद्रव्यस्य तच्छब्दमविशेषितमपि स्वरूप-**

1. विध्यसंभव इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

विधेयमात्रमप्यत्र नार्थ इत्यभिधीयते ।
प्रधानविधियुक्तोऽर्थः स चैकोऽत्र विधीयते ।।

तदाह न[1] ह्यत्रानेकस्य प्रयोजनत्वेनाभिप्रेतस्यानेकं पद विधायकमिति । तथा ह्यवान्तरव्यापारत्वात् तत्क्रियाणां न प्राग्यजिभावनातः पर्यवसानम् । विशिष्टविध्युत्तरकालं तु न किञ्चिदपेक्ष्यते । तस्मात् सिद्धमेकार्थत्वादेक वाक्यत्वम् । गुणविधित्वे चोक्ता वाक्यभेदाः । अथोच्येत इति एतच्छब्द-समर्थनार्थम् । सिद्धेऽपि कर्मान्तरत्वे कर्मयुक्तफलपक्षात्पक्षान्तरमिति निराक्रियते । तत्रैषा वचनव्यक्तिः रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा, एतस्याङ्गत्वेन यजेतेति । किमेवं भविष्यति । प्रकरणं तावन्न बाधिष्यते । एतस्यैवेति च प्रकृतग्राहिसमीपस्थितसंबन्धिपदमनुग्रहीष्यते । तत्रोच्यते । न पशुकामपदानर्थक्यप्रसङ्गात् । तदुपरित्यागे वाक्यभेदप्रसङ्गः । न ह्येकस्य[2] क्रतुं फलं च प्रति युगपद्दोषान्तराभिधित्सया पुनरुपन्यस्य रेवतीषु कृतेनेति । प्रथमो-पन्यस्तमेव पक्षं विधानमवकल्पते । अथैवमुच्येत रेवतीषु कृतेनेति । प्रथमो-पन्यस्तमेव पक्षं दोषान्तराभिधित्सया पुनरुपन्यस्यतीति केचित् । अथवा नैवम् ।

कथं तर्हि गुणकामेषु याज्ञिकानां द्वयी प्रतिपत्तिः, केषांचिन्मीमांसक-वदेव गुणात्फलम् । अपरेषां तु गुणः क्रत्वर्थ एव तद्वतस्तु क्रतोः फलान्तर-संबन्धः । अत्रैषा वचनव्यक्तिः, नित्यं तावदनेन ब्रह्मवर्चसकामो यजेत । यदि तु पशुकामः स्यात्ततोऽनेनैव रेवत्यादिविशिष्टेनेति । तथा सति च—

प्रत्ययः सन्निकृष्टार्थविधिं तावत् करिष्यति ।
न चान्यपर उत्पत्ति विधानाच्च विशिष्टता ।।

मात्रेण विशेषणत्वेन प्रत्येतुम् । यत्तु येनाविशिष्टं न संबन्धुं योग्यं तत्त द्विशिष्टमेव संबध्यते । यथा यस्योभयं हविरार्तिमार्च्छेदित्यत्रार्तेः निमित्तभूताया अपि[1]मृष्यते हविषा विशेषणमिति । अवान्तरव्यापारत्वा-दिति । रेवतीष्विति । नैतद्धारणव्यापृतरेवतीव्यापृतप्रतिपादनपर्यवसितं रेवत्यो धारयन्तीतिवत् कर्तृत्वप्रसङ्गादुद्भूतयाजमान[2]व्यापारावान्तर व्यापारीकृताभिभूतस्वव्यापारास्तु रेवतीर्यागभावनाधिकरणत्वेन बोधयन् न ततः प्राक् पर्यवसातुमर्हतीति । कथमयागकारकस्य यागं प्रति तृतीया निर्देशो भाष्ये तत्राह—स्तोत्रद्वारेणेति । स्वाभिप्रेतमनेकार्थविध्यनुपपत्तेः

---

१. ह्यवान्तरकर्मत्वात् तत्क्रियाणामिति मुद्रितोऽत्र पाठः अजितानुकूलस्तु मूले धृतः पाठः । २. 'न ह्येकस्य यागस्य' इति मुद्रितपुस्तकटिप्पणी धृत पाठः ।

१. क्षम्यते आ० मा० । २. ०रावारवन्तीयकृताभिभूत आ० मा० ।

यागं हि फले विदधत्प्रत्ययो न विप्रकृष्यते । न चानुत्पत्तिपरः सन्नुत्पत्तिमपि कल्पयिष्यति । अनेकार्थविधानं च यथैवोत्पत्तिविधौ कर्मविधाननिमित्तं लभ्यते, तथा फलविधावपि फलोद्देशेन कर्मविधानादित्येवं मन्यमानो वदति—अथ रैवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति । स्तोत्रद्वारेण यागसाधनत्वोपपत्तेः करणतृतीयैवैषा । अथ वेत्थंभूतलक्षणा । अनेनैवेत्थंभूतेन पशुकामो यजेतेति । तत्रोत्तरम् । नैवं शक्यम्, ऋगन्तरप्रमाणाद्विशेषहानाद्वैगुण्यमिति । यदि तदेवेदं कर्म ततस्तस्य वायव्यास्वग्निष्टोमसाम विहितं तदृगन्तरे रेवत्याख्ये गीयमानं पूर्वविहितवायव्याख्यविशेषहानाद्विगुणं भवेत् । नन्विदानीमेवास्मीये पक्षे भवतैव तत्र रेवतीषु ऋक्ष्वन्यान्यपि सामानि प्राप्नुवन्त्येवं पर्यनुयुक्तेनाभिहितम् । नैष दोषः । कृत्वेति निर्वृत्तः संबन्धो यागा[1]योच्यते । द्वावेतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमिति । सिद्धान्तवादी त्वपूर्वकर्मविधावनेकार्थविधानं शक्यं नान्यत्रेति मन्यमान आह—सति वचने मत्पक्षे शक्यं भवत्पक्षे त्वसति वारवन्तीयग्रहणमात्रेण लभ्यमानासु रेवतीष्वशक्यमिति । परः पुनराह—वचनं तर्हि भविष्यतीति । तेनैवाभिप्रायेण । फले विशिष्टकर्मविधानात्कृत्वाशब्दस्य चाविधायकत्वात् । यजिरनुवाद इति च सत्यपि फलं प्रति विधातुमुत्पत्त्यविधानाभिप्रायेण । सिद्धान्तवादी स्त्राभिप्रेतानेकार्थविध्यन्यथानुपपत्तिफलं कथयति यदि वचनं सिद्धं तर्हि कर्मान्तरं न पूर्वस्यैवाग्निष्टुतो गुणविधानमिति । ननु ततो यजेतेति यागानुवादादिति वचनेनानिराकृतत्वादद्यापि स्वपक्षमेव बलीयांसं मन्यते । नैवं शक्यमिति सिद्धान्तविवरणम् । यदि हि रेवतीगुणकं वारवन्तीयं यागं प्रति गुणत्वेन विधीयते ततोऽवश्यं स उद्देष्टव्यः । ततश्चोद्दिश्यमानत्वादेव फलपदं न तेन गुणेन वा संबध्यत इत्यनर्थकमेव स्यात्संबध्यमानं वा वाक्यं भिन्द्यात् । गुणविशिष्टकर्मविधाने वाप्रत्यभिज्ञायमानत्वादेकान्तेन कर्मान्तरत्वम् । न च यत्पशुकामो यजेतेत्यप्राप्तत्वादनुवादः संभवति । एतेन रेवतीवारवन्तीयविधि प्रत्यस्य निमित्तत्वं प्रत्युक्तम् । अतश्च न वारवन्तीयं केनचिद् बलवत्तरेण प्रमाणेन रेवतीभिः संबद्धमिति विशेषहानाद् विगुणं भवेत् । अथ यागसंबन्धोऽनुवाद इति । गुणादेव फले सति प्रकरणादवगतं यागाङ्गत्वमस्मिन् वाक्येऽनुवदिष्यत इति । कः पुनराश्रयाश्रयिसंबन्धात्पूर्वनिराकृतादस्य विशेषो येनोपन्यस्यते ।

१. यागस्य इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

स उच्यते। तत्र हि 'आनर्थक्यात्तदङ्गेषु [मी० सू० ३।१।१८।] इत्येतन्निराकृतम्। अङ्गत्वज्ञाने तु तत्संभवादग्निष्टोमसामसंबन्धः सुलभ इत्यभिप्रायः। तन्निराकरोति—प्रकरणाद्धि वाक्यं बलवत्तरमिति। आश्रयाश्रयिसंबन्धानुगुणत्वात् संभवन् गृह्यते। स तु न संभवतीत्युक्तम्। अङ्गाङ्गिसंबन्धस्तु क्रतुकथंभावग्रहणात्स्यात्। तच्च नास्ति। असंयुक्तं प्रकरणात् [मी० सू० ३।३।११।] इति वक्ष्यति। संयुक्तं चैतत्फलेन। तस्मादविरोधाद् गुणफलविशिष्टकर्मान्तरविधानम्। तत्रैतत् स्यात्। सत्यपि कर्मान्तरत्वे तदनुगृहीताद् गुणादेव फलमिति। तद्विकल्प्य भावार्थाधिकरणन्यायेन प्रत्ययसंनिकर्षेण यागफलसंबन्धावगमान्निराकरोति। तस्मात्कर्मविधिः। अथ पुनर्विशिष्टे यागे विधीयमाने क्रियान्तरस्याग्निष्टोमसाम्नो विशेषणेन कथं संबन्ध इति। तत्रोत्तरं वचनादिति। प्रागुक्तन्यायेनातिदेशिकं वचनं द्रष्टव्यम्। अग्निष्टोमसाम्नः कार्यं इति। न किञ्चिदग्निष्टोमाख्यं सामावस्थितं विद्यते यस्य वारवन्तीयं कार्यापन्नमिति कल्पते। तेन प्राकृतयज्ञायज्ञीयकार्यापत्त्यभिप्रायेणोक्तम्। अथ वाग्निष्टोमसाम्न इति स्तोत्रस्यैव कार्ये तादर्थ्येन वर्तिष्यत इत्यर्थः। तस्मात्समेषु कर्मयुक्तं फलं स्यादिति सिद्धम् ॥२७॥

## सौभराधिकरणम्।

ज्योतिष्टोमे सौभरमुक्थ्यानां ब्रह्मसाम विहितम्। पुनश्च तदेव 'यदि रथन्तरसाम' यदि बृहत्साम' इति च निमित्तयोर्विहितम्। ततः पुनः 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इति नित्यस्यैव सतः फलत्रयसंबन्धः कृतः। तथा च वक्ष्यति एवं जातीयकेषु स

फलं यदनेकार्थविधिना सिद्धे नान्यथानुपपत्त्या स्वोपपादकमपूर्वकर्मविधानं बोध्यत इति। प्रागुक्तेनेति। क्लृप्तस्थाने साम्नैवेत्यनेनोक्तमिति। न किञ्चिदग्निष्टोमेति। यदेव तत्साधनं तदेवाग्निष्टोमसाम। तेन वारवन्तीयमप्यग्निष्टोमसामैवेति। स्तोत्रस्यैवेति। सामेति स्तोत्रं लक्ष्यते तत्कार्ये च परम्परासाध्ये तादर्थ्येन रेवतीवारवन्तीयस्य वृत्तिरिति। पर्यायेण वृष्ट्यादिफलत्वेन सौभरस्यायं विचारो भवेत्। तदर्थमस्य न्यायसिद्धं क्रत्वर्थस्यापि वृष्ट्यादिफलत्वं, तच्च पर्यायेणेति दर्शयति—सौभरमुक्थ्यानामिति।

नित्यस्य समत्वात् [मी० सू० ३।६।४३।] इति। क्रत्वर्थपुरुषार्थं चैवंजातीयकं भवतीति वक्ष्यति एकस्य तूभयत्वे संयोगपृथक्त्वम् [मी० सू० ४।३।५।] इति। एतदपि वक्ष्यति यथा विकल्पेनैतान्यस्य फलानि भवन्ति 'योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात् [मी०सू० ४।३।२८।] इति। तदेवंरूपं सौभरं प्रकृत्य पुनः श्रूयते 'हीषिति वृष्टिकामाय निधनं कुर्यात्' ऊर्गित्यन्नाद्यकामाय' 'ऊ इति। स्वर्गकामाय' इति। निधनमिति चान्त्या सामभक्तिरभिधीयते। तत्रैतद् विचार्यते। किं सौभरं निरपेक्षं फलानि साधयति, इमानि वृष्ट्यादीनि पृथगेव भवन्ति, उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनं नियम्यत इति। यद्यपि चात्र कर्मभेदाभेदौ न स्तस्तथापि प्रसङ्गादुपन्यस्येते। अथ वा कर्मभेदाभेदवत्फलापूर्वभेदाभेदावपि लक्षणार्थाविति संबन्धः। एवं चानुष्ठानेऽपि विशेषो भवति। यदा वृष्टिकामेन सौभरं प्रकान्तं तदेतरयोरपि निधनयोः स्वफलप्रार्थनावशेन प्रयोगः। अपि च वृष्टिप्रार्थनयोरपि भेदः कर्तव्यो यदि निधनापरं फलम्। अथ तु निधननियमस्ततो हीषेव प्रयोक्तव्यमेकैव वृष्टिः प्रार्थयितव्या। एवमन्नाद्यकामस्वर्गकामयोरपि दर्शयितव्यम्। कुतः संशयः। केचित्तावद् *भाष्यकारकृतेन* वचनव्यक्तिद्वयप्रतिभानेन वर्णयन्ति किं हीषादिशब्दानां वृष्टिकामादिपदैः संबन्धोऽथ निधनपदेनेति। यद्यपि चोत्तरयोर्निधनमिति न श्रूयते तथाप्याकाङ्क्षावशेनानुषज्यमानं सर्वसंबन्धित्वेन कथ्यते। किं तावत्प्राप्तम्—

पुनर्विधानसामर्थ्यात्स्वार्थत्वाच्च फलश्रुतेः।
फलभूयस्त्वलाभाच्च हीषादेरपरं फलम्॥

यदि हि सौभरफलान्येवै[1]तान्यभविष्यंस्ततः पुनर्वचनमनर्थकमापत्स्यत। न हि विधेयं तस्य तदा किञ्चिदपि लभ्यते। हीषादीनां शाखान्तरेषु

योगेति। सर्वेभ्यो दर्शपूर्णमासाविति श्रुतेः विचारः किमेकस्मिन् प्रयोगे सर्वाणि फलानि पर्यायेण वेति। तत्र कर्मणः सर्वत्र शक्तेः कामनायाश्चैकदा सर्वत्र संभवादेकस्मिन् प्रयोगे सर्वाणि फलानीति प्राप्तेऽभिधीयते। योगेन युक्त्या पर्यायेण फलानां सिद्धिर्यतः प्रयोगोत्पत्तये सर्वेऽर्थाः न प्रयुज्यन्ते। यदि हि कर्मानुष्ठाने फलान्युपादीयन्ते तदा संहृत्य संबध्यन्ते। फलानि तूद्दिश्य कर्मप्रयोगो विधीयते। स प्रतिफल-

१. फलान्येतानि इति काशीमुद्रितपाठः।

ौभरनिधनत्वेन पाठादेव प्राप्तत्वात् । नियमार्था श्रुतिरिति चेन्न। श्रुति-ाप्तानां नियमेन निवर्तयितुमशक्यत्वात् । सर्व एव तावन्नियमोऽन्यव्यावृत्ति-फलत्वादन्याश्रयः। तथापि तु यथार्थाक्षिप्तावस्थानि वस्त्वन्तराणि भवन्ति तत्रैकश्रवणवशेनेतरन्नि[१]वर्तते । न त्विह हीषादीनामर्थात्प्रयोगः, येनैक-विधानादितरनिवृत्तिर्गम्येत । सौभरश्रुत्या हि तानि प्राप्यन्ते। तत्र न शक्यं विधिमात्रप्रवृत्तया पुनःश्रुत्या गत्यन्तरे संभवति बाधनं कर्तुम् । अस्मत् पक्षे तु काम्यत्वादन्यत[२]रद्वचनं क्रत्वर्थप्राप्तेतरबाधेनैव भविष्यति । वाक्यान्तरा-विहितं च वृष्टिहीषादिसंबन्धं विदधद्वाक्यमर्थवद् भवति । वृष्टिकामशब्दश्च स्वार्थत्वेन संभवन्न निधनव्यवस्थापरे वाक्ये सौभरविशेषणार्थः कल्पितो भविष्यति। पुरुषार्थभूयस्त्वं च विध्यात्मके वेदे पुरुषप्रवर्तनसौकर्यादिष्यते। तस्मान्निधनादपरं फलमिति ॥२८॥

उच्यते—निधनश्रुतिवैयर्थ्यान्न हीषः फलसंगतिः ।
निधनेन तु संबन्धे फलशिष्टं विशेषणम् ॥

हीषा दृष्टिं कुर्यात्तां च निधनभूतेनेति वाक्यभेदः। तदसंबन्धे वानर्थ-क्यम् । अस्मत्पक्षे न किञ्चिदनर्थकम् । सर्वस्य सौभरस्य वचनान्तरैरुक्त-वृष्टयादिकामत्वेन तत्पदानां च प्राप्तत्वाद्धीषादिसंबन्धमात्रे विधीयमाने वाक्यभेदाभावः। न च वचनमनर्थकं, निधनविशेषनियमार्थत्वात् । विनापि च गुणकामत्वेनास्त्येवात्र सामान्यविशेषलक्षणो बाधः, सौभरशब्दस्य सर्व-भक्तिसामान्यवचनत्वात् सौभरश्रुत्या हि परोक्षवृत्त्या निधनान्तरं प्राप्नोति। इदं पुनः प्रत्यक्षं, तस्माद्बलीयः। यथा चार्थादाक्षिप्यमाणं श्रौतेन निवर्त्यते

मावर्तते। अतः पर्यायेण फलसिद्धिरिति । तदसंबन्धे वेति । निधनपदेना-संबन्धे वानर्थक्यं निधनपदस्येति। तत्पदानां वेति । सौभरगीत्याश्रयाणां च पदानां प्राप्तत्वाद्धीषादिनियममात्रेऽस्य व्यापार इति ।

फलं तथैव हीषादिति । यमाश्रित्य फलं साध्यते स फलसिद्धावाश्रय इति। कथमपि विशेषणीयमिति । अनुपात्तत्वात् सौभरस्य प्रकरणात् तल्लाभः। स यद्यपि सिद्ध्येत् तथापि मतिक्लेशस्तावदस्तीति । उक्तं ताव-दलौकिकानां यथा विज्ञातस्थानानामेवोक्थ्यादित्वमिति । यद्यप्यत्रापि

१. इतराणि निवर्त्यन्ते इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।
२. °दन्यतरद्बलवद् इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

तथा परोक्षवृत्त्यापीति । अथ वा सौभरशब्दवाच्याया गीतेनैव किञ्चिद्वाध्यते । अक्षरविधानेनाक्षरान्तरमात्रबाधनात् । यदि हि गीत्यन्तरावयवो विधीयेत ततः सौभरावयवोऽपि बाध्येत । स्तोभाक्षरबाधस्त्वयं निधनविषय इत्यदोषः । तस्मान्निधननियमार्था पुनः श्रुतिरिति । एवं तु व्याख्यायमानेऽस्ति किञ्चिद्वाच्यम् । तदुच्यते

न तावत्संशयो युक्तो वचनव्यक्तिभेदतः ।
हीषो निधनसंबन्धो नेष्टो हि व्यवधानतः ॥

हीषिति निधनमिति व्यवहितकल्पनादोषादनिष्टः संबन्धः तथोत्तर-पक्षेऽपि—

निधने हीष्विधानं चेद् वृष्टिकामविशेषिते ।
विशिष्टार्थानुवादत्वाद् वाक्यभेदः स्फुटो भवेत् ॥

निधनानुवादेन हीषादिविधाने फलपदमनर्थकं पुनः श्रुतिवैयर्थ्यं च स्यात् । सौभरग्रहणेनैव हि निधनमात्रसंबन्धः प्राप्त इति न तन्मात्रवचनेनार्थः । तत्र यदि वृष्टिकामाय[1] यद्यत्सौभरं तस्य यन्निधनमिति विशिष्टमनूद्य तत्र हीष्पदं प्रयुञ्जीतेति विधीयते ततोऽनेकसंबन्धकरणाद् वाक्यं भिद्येत । यद्यपि वृष्टिकामसौभरतन्निधनानि प्राप्तानि तथाप्यनेकेषामपि संनिधि-रस्तीति व्यवच्छेदार्थमवश्यं यत्नः कर्तव्यः । ततश्चानेकार्थत्वमिति दुर्बलः सिद्धान्तः । पूर्वपक्षनिराकरणमपि न सम्यक्कृतं, समाम्नायादेव हीषादीनां निधनत्वसिद्धेः । तस्मादेवं वर्णनीयम् ।

वृष्टिकामपदेनैव संबन्धे सति संशयः ।
फलेन साधनेनेति वाक्यसामर्थ्यवीक्षणात् ॥

अत्र हीषिति वृष्टिकामायेत्येवमेवावस्थिते सन्देहः किं साक्षात्फलेन हीषः संबन्धोऽथ फललक्षितेन साधनविशेषेणेति । तदा च हीषिति निधनमिति, एतत्फलं भवतीति वचनव्यक्तिरिव *भाष्यकारेण* दर्शिता । [1]वृष्टिकामायेति सौभरविशेषणमिति सौभरस्य निधनवाक्ये स्वपदेनानुपादानाल्लक्षणारूपेणैव विशेषणत्वम् । न हीषासंबन्ध इति फलस्वरूपासंबन्धाभिप्रायेण । तत्र तथैवंविधिपुनःश्रुत्यपेक्षं व्याख्यानं, प्रयोगवचनसामर्थ्यादेव सिद्धं स्यादिति, अपरा व्याख्या । यदि हि स्वार्थप्रवृत्तस्यैव सौभरस्य निधनमात्रं नियम्येत

१. वृष्टिकामो इति काशी मुद्रित पाठः ।

ततस्तत्प्रयोगवचनेनैवोपनीतमात्रहीषादिविधिसिद्धेर्विध्यानर्थक्यं भवेत् । फल-संबन्धपक्षे तु न प्रयोगवचनः समर्थ इत्यर्थवत्ता । किञ्च—

वृष्टिकामपदेनात्र श्रुत्यैवाभिहितः पुमान् ।
साधनापेक्षिणस्तस्य हीषादिपदसंगतिः ॥

अन्यथानेन सौभरं प्रकरणावगतमपि वृष्टिसाधनशक्तियुक्तं लक्ष्येत । न तदाश्रयणे किञ्चित्प्रयोजनमस्ति । तथा श्रुतिलक्षणाविषये चेति ब्रुवतो ***भाष्यकारस्या***प्येतदेव व्याख्यानमभिप्रेतमिति गम्यते । सिद्धान्तस्तु—

सौभरस्य समस्तस्य यः कामोऽभिहितः पुरा ।
नियन्तुं निधनं तस्य स एवायमनूद्यते ॥

सर्वस्यैव सौभरस्यायं कामसंयोगः पूर्वोक्त एव प्रत्यभिज्ञायमानः कीर्त्यत इति नापूर्वफलप्रतिपत्तिः । किमर्था तु प्राप्तस्य पुनः श्रुतिरित्यत आह—निधनार्था पुनः श्रुतिरिति । कस्मात्पुनः श्रुत्युपात्तेन फलेनैव हीषादयो न संबध्यन्ते । तत्रोच्यते

यथैव वारवन्तीयं नेष्टमाश्रय[1]माप्नुयात् ।
फले तथैव हीषादि नाप्नोत्याश्रयमीप्सितम् ॥

हीषा वृष्टिं साधयेदिति हि गृह्यमाणेऽवश्यं किमाश्रितेनेत्यपेक्ष्यते । तत्र यत्सौभरं प्रकृतं तत्तावन्न शक्तमाश्रयत्वं प्रतिपत्तुम् । समस्तं हि साम सौभर-शब्देनोच्यते । न च तद्धीषा साधयितुं शक्यं, यथा दध्ना होमः । तद्धि सकलं होमं व्याप्तुं शक्नोति । न तु हीषा सौभरं व्याप्यते । बह्वक्षर-साध्यत्वात् । न च तदसाधयत आश्रयाश्रयिसंबन्धोऽवकल्पते । यत्तु तेन व्याप्त्या साधयितुं शक्यते निधनं, न तस्य प्रकरणमस्तीति न वाक्याद्विना-श्रयत्वं प्रतिपद्यते । तत्र यदि वाक्येनैव फलसंबन्धस्तेनैव चाश्रयलाभस्ततो वाक्यं भिद्यते । तथा निधनमात्रानुवादेन हीषादिसंबन्धे प्रकरणं बाधित्वा सर्वसामसंबन्धप्रसङ्गे पुनः सौभरस्य यदिति कथमपि विशेषणीयं, तत्रापि पुनर्मतिः क्लेशनीया । किञ्च—

यद्यप्यवयवद्वारं भवेत्सौभरसाधनम् ।
तथापि भक्त्यनेकत्वात्क्व हीषिति न गम्यते ॥

---

१. आप्तवत् इति काशीमुद्रितपाठः ।

न तावत्सौभरावयवेन निधनेन साधितेन प्रकरणलभ्यसौभरं साधितं भवति। अवयवस्य सौभरत्वेनाप्रतीतेः। न च यथा शक्नुयात्तथाश्रयेदित्येषा कल्पनास्तीत्युक्तम्। उपेत्यापि त्वाश्रयत्वमनेकप्रस्तावादिभक्तिनि सौभरे कतमस्यां भक्तौ हीषादयः प्रयुज्यन्तामिति नैव ज्ञायते। **'मुख्यं वा पूर्वचोदनाल्लोकवत्'** [मी० सू० १२।२।२३] इति प्रस्तावे वा प्राप्नुवन्ति। तत्र निधनमित्यनुवादो नावकल्पते। अथोच्येत यथोक्थ्यादीनां फलाय चोदितानां प्रकरणाज्ज्योतिष्टोममाश्रयतामसमस्तव्यापित्वेनानेकावयवत्वेऽपि सति वाक्यान्तरवशेनान्ते निवेशो भवति। एवमत्रापि फले विहितानां हीषादीनामाश्रयत्वेन सौभरमुपसर्पतां समाम्नायवशेन लब्धस्थानानां निधनत्वमनुवदिष्यत इति। तदयुक्तम्। कुतः—

अनन्यविषयत्वेन स्थानमुक्थ्यादिषु स्थितम्।
हीषादिस्तु बहुस्थानः क्व स्यादिति न गम्यते॥

युक्तमुक्थ्यादीनां प्रदेशान्तरेष्वदृष्टेरलौकिकत्वाच्च क्रत्वन्तरानिवेशित्वम्। न हि तेषां स्थानान्तरं दृष्टपूर्वम्। न चाविज्ञातस्थानविशेषाणां रूपावधारणं फलसंबन्धो वा। न चान्यत्र वर्तमानानां स्वरूपप्रयुक्त उक्थ्यादिव्यपदेशसंभवः। योऽपि वचनान्तरेण स्थानविशेषलाभः सोऽपि पृथक्क्रत्वर्थत्वाविज्ञानादनयैव फलचोदनया गृह्यत इति तदर्थ एव विज्ञायते। हीषादीनां यः पुनः समाम्नायप्राप्तः स्थानविशेषसंबन्धः स तावत् सौभरविधानेन क्रत्वर्थत्वेन सौभर[1]फलार्थत्वेन चोपयोजितः[2]। इदानीं तु फलं प्रति स्वतन्त्रस्य हीषो विधानाल्लोकवेदसामान्तरभक्त्यन्तरप्रकृतभक्तिवर्तित्वादिविशेषो न ज्ञायते क्वावतिष्ठताम्। यदि हि प्रकृत एव विहित इति विज्ञायेत ततस्तस्य ज्ञातस्थानत्वात् सन्देहो न स्यात्। ननु चैकत्वाच्छब्दस्य य एवायं प्रकृतः स्यात्स एव लोकादिष्वपीति तद्गतग्रहणेऽपि तदेव विशेषस्थानं भविष्यतीति। नैतदेवम्। कुतः—

एकत्वेऽपि हि शब्दस्य शक्तिभेदः प्रयोजने।
तत्र कार्यान्तरस्थानं न स्यात् कार्यान्तरेष्वपि॥

भवेत् तथाप्यक्रतुत्वार्थानां फलमात्रसाधनानां स्थानं फलसिद्धावेवाङ्गं भवत्यतो नान्यत्र स्थितानां साधनत्वमित्याह—योऽपि वचनान्तरेणेति। हीषादीनां पुनरिति। सौभरान्तर्गतानां स्थानविशेषपाठः सौभराङ्गत्वेन ज्ञाय[1]मानः सौभरकार्योपयोगेन पर्यवसितव्य इति।

१. सौभरपदं काशीमुद्रितपुस्तके नास्ति।
२. चोपयुज्यते इति मुद्रितपुस्तकटिप्पणीधृतपाठः।
१. प्रतीयमानः अ० मा०।

न शब्दैकत्वेन यत्किञ्चित्कार्ये स्थानं दृष्टसामर्थ्यं तदेवान्यत्रापीति शक्यते वक्तुम्। न हि यद् देवदत्तस्य युध्यमानस्य स्थानमवगतं तदेव भुञ्जानस्यापि भवतीति गम्यते। कार्यप्रयुक्ता हि स्थानविशेषादयो न स्वरूपप्रयुक्ताः। स्वरूपस्य स्थानान्तरेऽप्यविभागात्। अतः कार्यान्यत्वादेकस्यापि स्थानभेदप्राप्तिः। न च यत्सौभराङ्गभूतस्य हीषः स्थानं तदेव पुरुषार्थस्यापीत्यवधारणं शक्यम्। प्रासङ्गिकसौभरसाधनत्वादिति चेत्, न। तस्यैव स्थानविशेषलाभात् प्रागसिद्धत्वात्। इतरेतराश्रयं हि स्यात् सौभरसाधनत्वेन स्थानविशेषस्तस्माच्च साधनत्वमिति। ननु यथाभ्युदितेष्टयां मध्यमादितण्डुला उपादीयमानत्वेऽपि प्रकृता गृह्यन्ते तथात्र हीषादयो ग्रहीष्यन्ते। युक्तं तत्र प्रकृतगामिविभजतिवाक्यापेक्षितानां देवतासंयोगवाक्यानां तद्विषयत्वाद्यच्छब्दोपबद्धमध्यमादिविभागस्य च प्रकृतप्रत्ययानतिरेकादन्येषामग्रहणम्। इह तु न हीषादीनां तादृक्कारणमस्तीति न लौकिकप्रत्ययो निवर्तते। तस्मान्नैवं वाक्यार्थः संभवतीत्ययमपरः परिगृह्यते। यदा सर्वप्रकारमन्विष्यमाणोऽपि श्रौतः फलसंबन्धो न लब्धः, तदा मा बाधितरां श्रुतिरिति प्रकृतसाधनलक्षणा विज्ञायते तत्रैषोऽर्थो भवति। प्रकृताय वृष्टिसाधनाय हीषशब्दोऽङ्गमिति। प्रकृतगामी च वृष्टिशब्दस्तत्साधनभूतं सौभरमेव लक्षयति नान्यत्। न चान्यसाधनभूतमप्रतीतेः। सत्यामपि च हीषादीनां प्राप्तौ नियमार्थत्वादर्थवद्वाक्यमित्युक्तम्। ते च हीषादयो यथाभूताः सौभरेणाक्षिप्तास्तथाभूता एव नियम्यन्त इति विनापि निधनशब्दसंयोगेन सिद्धं निधनत्वमनूद्यते। तद्दर्शयति—वृष्टिकामाय सौभरमस्त्येवेत्यादि।

युक्तं तत्रेति। तण्डुलान् विभजेदित्युद्दिष्टतण्डुलस्तावत् विभागविधिः प्रकृतगामी तदपेक्षितोपयोगप्रतिपादनपरत्वाच्च देवतासंयोगवाक्यानामपि प्रकृतगामित्वं व्यक्तीकृतं च तेषां प्रकृतगामित्वं—ये मध्यमा इति। यच्छब्दप्रयोगेणेत्याह—यच्छब्दोपबन्धेति। प्रकृतप्रयोगापेक्षितार्थप्रतिपादनाद् योऽर्थो भवति न तदतिक्रमो विभागस्य यच्छब्दोपबन्धस्येति। लक्षणसङ्गतिरुक्ता।

तदेतदधिकरणं गुणक्रियाफलप्रतिपादनपरयोरनन्तराधिकरणयोरप्यपवादभूतम् । वृष्ट्यादिशब्देनैवेदं फलं साधनलक्षणयेति प्रतिपादनात् । यस्तु वाक्यभेदश्चोदित आसीत्स निधनसंबन्धे सति श्रुत्या वा सौभरे विशेषणत्वेनोपादीयमाने भवेत् । न त्विह तदुभयमप्यस्ति । वृष्टिकामपदेनैव सबन्धात्, प्रकरणलभ्यत्वाच्च सौभरविशेषणत्वस्य । न च प्रकरणलभ्या विशेषा वाक्यं भिन्दन्ति । तस्माददोषः । इदं त्विह विचारयितव्यं भवति । किं यत्र क्वचन शाखायामधीतस्य सौभरस्य वृष्ट्यादिसाधनभूतस्य हीषादयो नियम्यन्त उत यत्र हीष्निधनकं पठ्यते तच्छाखागतं वृष्टिकामस्य प्रयोक्तव्यम् । एवमूर्ङ्निधनकम्, ऊनिधनकं चेति सदृशो विचारः । तत्रानियमेन सहस्रशाखागतसौभरप्रयोगविकल्पे सति वृष्टिकामादिनिमित्ते हीषादिमात्रनियम इति प्राप्तेऽभिधीयते । यत्र तन्निधनकं पठ्यते तच्छाखागतैव वृष्टिकामादेः समस्ता गीतिरुपादातव्येति । कुतः ।

प्रपद्यते रूपविनाशभीतेर्गीतिर्न गीत्यन्तरभक्तियोगम् ।
अतः समस्तैव विकल्प्यमाना यथासमाम्नायमसौ नियम्या ॥

सामरूपं हि समाम्नायादवगम्यते तच्चाल्पेनान्यत्वेनाप्रत्यभिज्ञानादन्यदेव भवति । तत्र यदि शाखान्तरीयायां गीतौ शाखान्तरीयनिधनं प्रयुज्येत ततो रूपान्यत्वं स्यात् । न च वचनादृते ऐरवद्विकारः । तच्छाखागतगीतिग्रहणेनाविरोधोपपत्तेः सर्वत्रासंभवाद्विकाराश्रयणम् । अस्ति चात्र गतिः । विकल्पप्राप्तौ चायं नियमः । समस्तस्य च साम्नः पदार्थत्वाद्विकल्पप्राप्तिर्नियवानाम् । अतो नान्यदीयनिधनविधानम् । अत एकदेशनियमे सति कांस्यभोजिन्यायेन समस्तनियमः । एषोऽपि चात्र वाक्यार्थः संभवति । उभयोः

अनन्तरसङ्गतिमाह—तदेतदधिकरणमिति । किञ्च यत्र क्वचन शाखायामिति । सौभरगीत्यविशेषेऽपि प्रतिशाखाभवान्तरगीतिविशेषस्तन्निबद्धाश्च हीषादयस्ते किमप्यस्माद् वचनाद् विशेषान्तरेऽपि शाखान्तरीये प्रयोक्तव्या उत हीषाद्यनुरोधेन तद्वान् यः सौभरविशेषः स एव प्रयोक्तव्य इति । एषोऽपि चात्रेति । यदि वृष्टिकामाय सौभरमिति यथासिद्धं सौभरमुद्दिश्यते तदा तस्य नानाशाखीयस्यावगमात् सर्वत्र हीषो विधानं[1] स्यात् । अत्र तूभयोः प्राप्तत्वादुद्देश्योपादेयविशेषाभावान्नैषा

१. हीषो विधानज्ञानम् आ० मा० ।

प्राप्तयोः संबन्धमात्रं विधीयते । यद् वृष्टिकामाय सौभरं यच्च हीषित्येवं निधनं तदेकत्र संपादनीयमिति । तस्मात्समस्तगीतिनियम इति सिद्धम् ॥२९॥

*इति श्री भट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने*

*तन्त्रवार्त्तिके द्वितीयाध्यायस्य द्वितीयः पादः ॥*

**वचनव्यक्तिपदद्वयमपि प्राप्तार्थ[1]सम्बन्धप्रधानं स च विधीयते । यथा प्राप्तस्य हीषः सौभरस्य वा परस्परान्वितयोः प्रयोगो यथा भवति तथा सम्पादनीयेत्यर्थो हीषो निधनसौभरविशेषोपादाने चैतद् भवतीति । तदुपादानसिद्धिरिति ।**

इति श्रीमहामहोपाध्यायपरितोषमिश्रविरचिते

अजिताख्ये तन्त्रटीकानिबन्धने

द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

१. °र्थमन्वयप्रधानं अा० मा० ।

*द्वितीयाध्यायस्य तृतीयः पादः*

## रथन्तराधिकरणम् ।

ज्योतिष्टोमे प्रथमं वृहद्रथन्तरे वैकल्पिके [1]पृथक् पृष्टसाधनत्वेन चोदिते ततः पुनः श्रूयते 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' 'यदि बृहत्सामा शुक्राग्रान्' इति । तत्र सगुणं कर्म श्रूयमाणं सन्दिह्यते किं कर्मान्तरं ज्योतिष्टोमादुत तस्यैव ग्रहाग्रताविशेषविधानं[2] प्रति रथन्तरावच्छिन्नस्य निमित्तार्थं श्रवणमिति । तत एतत्सिद्धयर्थमिदं विचारयितव्यं किमयं कृत्स्नक्रतुसंयोगो रथन्तरस्य अथ सत्तामात्रसंयोग इति । तत्सिद्धयर्थमप्येतच्चिन्तनीयम्, किं क्रतुविशिष्टं रथन्तरमुत रथन्तरविशिष्टः क्रतुरिहाश्रीयते । ननु च यदिशब्दोपबन्धादिह निमित्तं प्रतीयते तस्य चोद्दिश्यमानत्वाद्विशेषण विशेष्यभावो नावकल्पेत । भवेन्निमित्तार्थत्वमेतस्य यदि यादृगयं प्रत्येष्यते तादृशस्य कुतश्चित्प्राप्तिर्विज्ञायेत । अप्राप्तिपक्षे तु बलाद्विधानमापद्यते । निमित्तत्वमपि च यादृशस्येह श्रूयते यदि तादृशो ज्योतिष्टोमभवेन्निमित्तार्थत्वमिति । तस्योपात्तस्याविवक्षा भवति यस्यानुवादेनोपपत्तिरितरस्य तु [1]प्रमादासम्भवादुपादानबलाद्वचनव्यक्त्यन्तराश्रयणेन विधिरङ्गीक्रियते । तेन विचार्यमाणो रथन्तरसामशब्दार्थो यदि प्राप्तवत् प्रत्येष्यते, तदा यथासिद्धान्तं निमित्तता[2] प्राप्त्यभावे तु यदि शब्दपरित्यागादिना विधानमापद्यते न तु विशेषणयोगेन[3] निमित्तत्वमेव[4] । तस्माद् विचारणीयमेतत्[5] । यस्यापि नियमेन निमित्तता तेनापि अनुवाददर्शनादर्थाद् विधानमप्राप्तिपक्षेऽङ्गीकर्तव्यं, न तु विशेषणस्य प्रमादपाठ इत्याह—निमित्तत्वमपि चेति । किञ्चास्त्येवंविधस्य निमित्तेऽन्तर्गतिर-

---

१. पृथगिति नास्तीति मुद्रितपुस्तकटिप्पणी ।

२. विशेषं प्रति इति काशीमुद्रितपाठः । विधानपदमिह नास्ति ।

१. पाठासम्भवात् आ० मा० प्रमादपदं नास्ति । प्रमादपाठासम्भवादिति पू० मा० । २. निमित्तार्थता आ० मा० ।

३. विशेषणत्यागेन आ० मा० । ४. निमित्तार्थत्वमेव आ० मा० ।

५. यमेवैतत् आ० मा० ।

स्ततस्तयैव गुणार्थत्वेन श्रवणमिति संगस्यते[1]। यदि तु तादृङ् न भवति ततस्तादृशत्वमापाद्य निमित्तीकर्तव्यः। यत्संबन्धाच्च प्राङ्निमित्तत्वमेव नोपजायते भवति तन्निमित्तस्यापि विशेषणं, यथार्त्यधिकरणे वक्ष्यते 'मृष्यामहे हविषा विशेषणमिति' तस्मान्न विशिष्टानुवाददोष इति। किं तावत्प्राप्तं प्रकरणाद्रथन्तरसामत्वस्य बृहत्सामत्वस्य च वचनान्तरेण प्राप्तेर्यदिशब्देन च प्राप्त्यपेक्षत्वनिमित्तत्वप्रतीतेर्ग्रहाग्रताविशेषस्य च प्रयोगवचनेन ग्रहणाद्बलीयसा च विरोधिना गुणान्तरेणानवरोधात्, 'तत्संनिधेर्गुणार्थेन पुनः श्रुतिः [मी० सू० २।२।१५।]' इत्यकर्मान्तरत्वम्। एवं सिद्धान्तं प्राप्तं तु शब्देन व्यावर्त्य सौत्रः पूर्वपक्षः परिगृह्यते कर्मान्तरमिति। कुतः।

समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे।
विशेषणं व्यवच्छित्तृ ज्योतिष्टोमे च नास्ति तत्॥

'गुणश्चापूर्वसंयोगे [मी० सू० २।२।२३] इति पूर्वकर्मासंबद्धो गुणो

---

वाक्यभेदेनेत्याह—यत्सम्बन्धाच्चेति। [1]अन्नार्त्तिमेवाभिप्रेत्य भवेन्निमित्तार्थत्वमिति। निमित्तत्वमपि चेत्युभयमुक्तम्, नानुवादानुपपत्तिम्[2]। यस्योभयं हविरार्तिमाच्छेंत[3] इत्यत्र निमित्तस्योद्दिश्यमानत्वान्नोभयत्वेन विशेषणमिति। सिद्धान्ते हविषापि तद्वन्न स्यादित्याशङ्क्याह[4] *भाष्यकारो*-मृष्यामहे हविषा विशेषणमिति। नह्यार्तिमात्रं नित्यत्वाद्यस्यार्तिः स्यादित्युपादानमर्हति। किन्तु यस्य हविरार्तिः स्यादिति। यदवत्तेन चात्र निमित्तता। तस्माद् हविषो[5] निमित्तेऽन्तर्भाव इति। प्रकरणादिति। सन्निधिलक्षणात्प्रकरणात् सामान्यवाची सोमशब्दे ज्योतिष्टोममवलम्बते इति। गुणश्चापूर्वसंयोग [ मी० सू० २।२।२३ ] इति। रथन्तरसामशब्दस्य प्रकृतेनासंयोगाद्ग्रहाग्रतायास्तत्र निवेशन[6] वाजिवाजिनवद्विपरीतम्। अतो रथन्तरमेव गुणः कृत्स्नक्रतुसंयोगाद्भेदकः[7]। अथ वा विधित्सितो भेदः। न चास्य

---

१. गम्यते इति मुद्रितपुस्तकटिप्पणीधृतपाठः।

१. अथवैतदेवा० आ० मा०। २. नानुवादानुपपत्तिः आ० मा०।

३. ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् इत्यधिकं आ० मा० पठति।

४. इत्याशङ्क्य भाष्यकारेणोक्तं दूष्यमाह हविषा विशेषणमिति आ० मा०।

५. निमित्तत्वेऽन्तर्भाव इति आ० मा०।

६ निवेशः न वाजि इति आ० मा०। ७. संयोगभेदकः आ० मा०।

भेदक इत्युक्तम् । इह च बहुव्रीह्यर्थसद्भावस्य यदिशब्दोपबन्धेन निमित्तत्वं गम्यते न रथन्तरसत्ताया उपसर्जनत्वात् । न च क्रतुविशिष्टं रथन्तरमिह प्रतीयते । येन तदेव निमित्तं कल्प्येत । न च तत् क्रतुनावच्छेत्तुं शक्यते, अन्यत्रापि विद्यमानत्वात् । एवं हि तदवच्छिद्यते यदि रथन्तरमस्यैव सामेति, न त्वेवं संभवति । तस्मादवश्यमेवं कर्तव्यं यदि रथन्तरमेवास्य सामेति । न चैवमात्मकत्वं ज्योतिष्टोमस्यान्यस्य वावगतं, यन्निमित्तं भवेत् । अतो निमित्तप्रतीतिं परित्यज्य तदन्यथानुपपत्त्यैव केवलरथन्तरसामकर्मान्तरविधिरध्यवसीयते । शक्यं हि तदपूर्वं कर्तुम् । न च रथन्तरसत्तामात्रं विशेषणमव्यापकत्वात् । न विशेषणादृते सामर्थ्यम् । न च सामर्थ्येन विना समासोऽवकल्पते । दृश्यते वासावत्रेति पूर्वस्यात्राप्रत्यभिज्ञानम् । अथ कस्मात्स एव केवलरथन्तरसामकः पक्षो न क्रियते न शक्यमेवं कर्तुम् । साक्षाद्विहितस्तोत्रसंबन्धिसामान्तरविरोधात् । इदं हि क्रतुसंबन्धेन श्रुतम् । 'आनर्थक्यात्तदङ्गेषु' [मी० सू० ३।१।१८।] इत्यनेन न्यायेन स्तोत्रेष्ववतरति' गायत्र्यादीनि तु स्तोत्रेषु साक्षाद्विधीयन्ते तस्माद्बलवन्ति । क्रत्वन्तरे तु प्रत्यक्षशिष्टं रथन्तरं तेभ्यश्चोदकप्राप्तेभ्यो बलवत्तरं भवतीत्यदोषः । एवं चान्यपदार्थविधानात्तत्प्रधानो बहुव्रीहिरनुग्रहीष्यते । अन्यथा ह्युपसर्जनपरत्वं लोहितोष्णीषादिवाक्यवदगत्या

स्वतो विधित्वावगमः । तेन ग्रहाग्रता गुणस्य रथन्तरसामान्वितस्य विधीरथन्तरसामशब्दस्य विधित्वं प्रसुवानो भेदकारणमिति ग्रहाग्रतैव गुणो भेदक इति । इह चेति । रथन्तरे गुणे साक्षादस्यैव[1] पूर्वकर्मासम्बन्धोपपादनं ग्रहाग्रतायां तु परम्परयेति । अथोपसर्जनत्वमेव सिद्धं तत्राह— न च क्रतुविशिष्टमिति । न च विधित्वमपि निमित्तत्ववदनुपपन्नं यदि शब्दपरित्यागादिना सम्भवादित्याह—शक्यं हीति । अव्यापकत्वादिति । बहुव्रीहिर्विशेषणविशेष्यभावेन सामानाधिकरण्यं तत्र च विशेषणस्य पूर्वं प्रयोगस्तेन रथन्तरविशेषितं साम समासार्थमवच्छिनत्ति । सर्वत्र चाप्राप्ते[2] विशेषणे शब्दतात्पर्यम् । तेन यस्य क्रतोः साम रथन्तरमिति विग्रहवाक्ये क्रतोः सामेत्यनुवादो रथन्तरता तु प्राप्यते । क्रतोः सामेति च यावद् । क्रतौ सामकृत्यं तदुपयोगि सामप्रतीयते । तस्य सर्वस्य रथन्तरतां रथन्तर-

---

१. वस्त्येव आ० मा० । २. चान्ते आ० मा० ।

परिगृह्येत। यदि च ग्रहाग्रताविधानेन सहैतदेकं वाक्यं ततस्तच्चापि रथन्तरविधानं चानेकत्वादपूर्वभावनाविधिनैव निस्तीर्यते । सोमः स्यादिति चानन्तर्यात् तत्कर्तव्यतैव विज्ञायते, रथन्तरसामत्वकर्तव्यता तु व्यवहितकल्पनयैव स्यात्। सोमशब्देन च प्रकृतिलिङ्गेन ज्योतिष्टोमप्रकृति-रेवायं भविष्यति। तस्मात्कर्मविधिः । इदमेव भाष्यकारो दर्शयति—यदि रथन्तरसामेत्यस्य कोऽर्थ इत्यादिना । ग्रहाग्रताविशेषश्चास्यैव क्रतोर्वाक्येनावान्तरप्रकरणेन वा भविष्यति ।

यद्यपि महावाक्येष्ववान्तरवाक्यान्यप्रमाणं तथाप्यर्थासंभवादविवक्षिते महावाक्येऽवान्तरवाक्याश्रयणाद्विधिशक्तेरबाधः। परित्यागाद्वरमध्याहृत्य पूरणमिति मत्वा । अथ वा यदि रोचेतेति दर्शयति । तत्कर्तव्यताङ्गत्वाक्षिप्तायाश्च रुचेः प्रमाणवानेवाध्याहार इति न स्वमनीषिकामात्रमभिहितम् । अध्याहारादपि स्वपदवृत्तिरेव व्यवहितकल्पनया लघीयसी धर्ममात्रबाधादिति मत्वा यदि शालि भुञ्जीतेत्युदाहृत्य पक्षान्तरं कल्पयति। परस्तु दृष्टान्तस्यैवासिद्धेः कथं पुनरिति पृच्छति व्यत्ययेन संबन्धः, कामप्रवेदने हि लिङ् इच्छां प्रत्याययतीति सिद्धान्तविवरणम्। तत्रैष वाक्यार्थो भवति। यद्यैन्द्रवायवान् ग्रहान् ग्रहीतु-मिच्छेद्रथन्तरसामानं क्रतुं कुर्यादिति । ततश्च यदिशब्दरहितं सोमः स्यादिति-

शब्दः प्रापयति । तेन यद्यपि परिसंख्यारूपेणेतराभावं न बोधयति। स्वसत्तया तु सर्वसामकार्यव्याप्तिं बोधयति । न च सा ज्योतिष्टोमे अस्तीति । यदि च ग्रहाग्रताविधानेनेति । यदि शब्दपरित्याग''ध्याहारयोर्भिन्नवाक्यता तदितरयोरेकवाक्यतेति । यत् किञ्चिदध्याहारेण सम्बन्धोपपत्तौ विशेष-निरूपणे मूलाभावादवैदिकत्वं चेदत आह—कर्तव्यताङ्गत्वेति । विहितमपि सत्यां रुचौ क्रियते नहि विधिरनिच्छतो बलात्प्रवर्त्तयति । तेन विधि-बोधितायां कर्तव्यतायामनुषक्तोऽयमर्थो यदि रोचेतेति । । सोऽयमेकदेश-प्रयोगेणानुदित इति पक्षान्तरं विकल्पयतीति । पूर्वस्माद् विध्यन्तरोपेतं कल्पयतीत्यर्थः । व्यत्ययेन सम्बन्ध इति । किं खलु व्यत्ययस्य प्रयोजनम् । उच्यते—फलेच्छया तद्धेतौ प्रवृत्तिर्भोजनेन च शेषिणांगं[1] दध्युपसेचनं प्रयुज्यते । तेनोपसेचनविशेषमिच्छतस्तच्छेषिभोजनानुष्ठानेऽभिमता-

१. ङ्गमुपसेचनम् आ० मा० ।

पदद्वयं विधायकं, ग्रहान् गृह्णीयादित्येतत्तु यद्यप्यविधायकं तथापीच्छार्थत्वाद् यो हि यदिच्छति स तत्करोतीत्येवं विधिफलं लप्स्यते। अथ वा इच्छामात्र युक्तमुपात्तं ग्रहाग्रत्वं स्यादित्येवैव लिङ् विधास्यति।

विनैव व्यवहितकल्पनयाप्ययं पक्षो भवन् बलवत्तर इति मन्वानोऽथ वा हेतुहेतुमतोर्लिङित्युपन्यस्यति। तत्र सोमः स्यादिति हेतौ लिङ्, गृह्णीयादिति विधावेव। तेनैतदुक्तं भवति रथन्तरसामसोमहेतुकानैन्द्रवायवाग्रान् ग्रहान् ग्रह्णीयादिति। न चाक्रियमाणेऽसौ हेतुत्वं प्रतिपद्यत इत्यर्थाद्विहितो भविष्यतीति। अथ वा हेतुमति गृह्णीयादिति लिङ्, सोमः स्यादिति विधावनुक्तमपि च सोमस्य हेतुत्वं हेतुमदाक्षेपात्संनिधेश्च भविष्यति। तत्राप्येषोऽर्थो ग्रहाग्रताविशेष कारणभूतः सोमयागः कर्तव्य इति।

यदिशब्दपरित्यागो रूढ्यध्याहारकल्पना।
व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङ्॥

इति पक्षविकल्पसंग्रहश्लोकः। सर्वं चैतदवैष्ट्यधिकरणसिद्धान्त एवोपयोक्ष्यत इत्यत्र प्रपञ्चितम्। किञ्च—

निष्पन्नेन निमित्तेन निष्पाद्यं प्रतिभूयते।
न रथन्तरसत्ता च निष्पन्ना क्रतुसत्त्ववत्॥

प्रातःसवने हि ग्रहाग्रता भवति माध्यन्दिने रथन्तरम्, न चानिष्पन्नस्य निमित्तता युक्ता। कारणपर्यायत्वान्निमित्तशब्दस्य, मम तु नैव किञ्चि-

सिद्धिर्न विपरीतम्। [1]तदुपसेचनेन भोजनं प्रयुज्यतेति। यो हि यदीच्छतीति। यथा यागानुष्ठानादेव स्वर्गः कृतो भवति नैवं ग्रहाग्रत्वं किन्तु पृथक् [2]तस्मिन् प्रवृत्तौ तेन [3]तदिच्छातो यागक्रियोपदिश्यत इति। तदेतत्कथं भवति। यदि यागे प्रवृत्ते तस्मिन्नपि प्रवर्तयितव्यं भवतीति। अथ वेच्छामात्रयुक्तमिति ग्रहाग्रताक्रियामिच्छतो यागोपदेशो यागप्रयुक्ततां तस्य बोधयन्नङ्गभावं गमयतीति। ततश्च साङ्गयागविधिना विधिरिति गृह्णीयादिति। विधावेवेति। अत्रानुक्तमप्यस्य हेतुमत्वहेत्वाक्षेपात्सन्निधेश्च भविष्यतीति। अथवा हेतुमतीति। कथमिदानीं यदि शब्दः। तदुच्यते विहितस्य परामर्शकः। यद्येवं तदा ग्रहाग्रतेति। अथ वा क्रतुरित्यङ्गित्वादङ्गानुष्ठाने निमित्तमिति।

१. न ह्युपसेचनेन आ० मा०।   २. कस्मिन् आ० मा०।
३. तमिच्छतो आ० मा०।

न्निमित्तम् । अथ वा क्रतुः, स चादित एव विद्यते । जगत्सामा च न ज्योतिष्टोम इति जगत्साम्नि साम्नाभावात् [मी० सू० १०।५।५८।] इति वक्ष्यते । अतश्च तत्सामान्यादितरेषु तथात्वम् [मी० सू० १।२।२३।] इति कर्मान्तरत्वमिति ।।१।।

पूर्वोक्तैरेव हेतुभिर्ज्योतिष्टोमस्य गुणविधिरयं न कर्मान्तरम् । एकस्यैव हि तेन लिङ्गेन रथन्तरसामत्वेन बृहत्सामत्वेन च ग्रहाग्रताविधिप्रयोजनार्थमुच्चारणं क्रियते । गुणवाक्यत्वाच्चाकर्मान्तरप्रत्यये सत्येकत्वं विज्ञायते । अथ वा रथन्तरादिविधानाज्ज्योतिष्टोमस्य गुणवाक्यैरेवमात्मकत्वं चोदितमिति नार्थान्तरत्वं प्रतीयते । ततश्च कर्मैकत्वम् । यत्तु विशेषणाभावात्सामान्तरसापेक्ष विशेषणत्वाद्वा रथन्तरसामेति समासो नावकल्पत इति । तत्र ब्रूमः ।

इष्यते पाक्षिकं वस्तु सत्तयैव विशेषणम् ।
विग्रहे यद्विशेष्यत्वं तस्य चेह निमित्तता ।।

यदि हि रथन्तरं नित्यं ज्योतिष्टोमेऽन्यसहितं वा स्यात्ततो न व्यवच्छिन्द्यादपि, यतस्त्वरथन्तरोऽपि ज्योतिष्टोमप्रयोगोऽस्त्येव ततस्तद् व्यवच्छेदमुखे-

जगत्सामेति । यदि जगत्सामा आग्रायणाग्रानिति किं प्रकृतौ विधानमुत विकृताविति सन्देहे प्रकृताविस्युच्यते । जगत्साम यस्य स जगत्सामा । न चवा संज्ञा कस्यचित् साम्नोऽस्ति । तस्माज्जगत्यामुत्पन्नं[1] साम जगत्साम तद्यस्य स जगत्सामा विषुवानेवातस्तत्राग्रयणाग्रता प्रकरणं बाधित्वा वाक्येन विधीयत इति । यत्तु विशेषणाभावादिति । रथन्तरेण क्रतोर्विशेषणं सामान्तरव्यवच्छेदे न स्यात् । सति तु सामान्तरे विशेषणस्याभावः । अथ सत्तया विशेषणं तत्राह—सापेक्षेति । क्रतोः सामकार्यं यावत्तावद्रथन्तरेणेतरसहितेन व्याप्यते न केवलेन । व्याप्तिश्चात्र सत्तायाः प्रतीयत इत्युक्तमिति । सत्तयैव विशेषणमिति । इतरव्यवच्छेदव्याप्त्योरेवकारेण व्यवच्छेदः । सामान्तरे सत्यपि असत्यामपि व्याप्तौ सत्तामात्रेणेति । इतरव्यवच्छेदाभावे विशेषणत्वमुपपादयति—यदि हि रथन्तरं नित्यमिति । प्रथमं शब्दः स्वार्थसत्तां सम्बन्धयति । ततस्तद्विरुद्धस्यार्थात्तदभावस्य व्यवच्छेदोपदर्शनेन पूर्वस्य प्रयोजनवत्ता व्यज्यते । यदि ह्यसौ सिद्ध एव ततो विशेषणसत्तापि सिद्धैव किं विशेषणशब्देन । यदा तु स्वार्थसत्ता प्राप्तो

१. मुत्पन्नं मा० मा० ।

[1]नादित विशेषणफलम् । यदि चैवकारं विना विशेषणबुद्धिर्न भवति तत एव-मसौ दर्शयितव्यो, यदि रथन्तरं सामास्यास्त्येवेति । बहुव्रीहेश्च मत्वर्थवर्ति-त्वान्मतुपश्चास्तित्वयोगविषयत्वान्नैवकारस्याश्रुतसत्तासंबन्धकल्पना । यद्वा यदि रथन्तरं सामैवास्य भवतीति । तत्र कोऽर्थ एवशब्दस्य । तद्धि रथन्तरं यद्यपि सर्वदा साम तथापि यदा क्रतौ न भवति तदा तं प्रति सामकार्या-सत्त्वादसामैवेति । सत्तापक्षे रथन्तरं सामेति वक्ष्यते । अवश्यं च क्रत्वपेक्ष-मेवैतत्सामत्वं वक्तव्यम् । रथन्तरस्वरूपे सामत्वस्य नित्यं पौनरुक्त्यात् । न च रथन्तरस्य सापेक्षत्वं ज्योतिष्टोमे, येन समासो न स्यात् । द्वन्द्वनिर्दि-ष्टेषु ह्येकस्तोत्रविषयेषु चैतद्भवति । केवलेषु तु भिन्नस्तोत्रविषयसाधनेषु

भवति तदा तत्रानुपयुज्यमानः परिसंख्यारूपेणेतराभावपरः स्यात् । इह च वैकल्पिकत्वेऽसिद्धा नियमेन सत्तेति स्वार्थसत्ता सम्बन्ध एव विशेषणपदार्थो भवतीति । नन्वेवकारेण विशेषणपदप्रयोजनोपदर्शनं क्रियते । स च सामान्तरव्यवच्छेदमुपदर्शयति कथमभावव्यवच्छेदस्तत्राह—यदि चैव-कारेणेति । विशेषणपदार्थ एवकारेण दर्शनीयो न विपरीतः । स यदि दर्शयितुं तेनाशक्यः, प्रकारान्तरेण कथ्यतां किमेवंकारेणेति यदि शब्देन दर्शितमिति । सामास्यास्त्येवेति । तदुक्तं विशेषणमात्ररथन्तरसत्ता विशे-षणाच्चैवकार इति । ननु विशेषणत्वेन नोपात्ता सत्ता कथं च अश्रुतया तयैवकारस्य सम्बन्धस्तत्राह बहुव्रीहेश्चेति । यदि रथन्तरं सामैवास्येति । नन्वेवं साम रथन्तरस्य विशेषणं स्यात्, तत्र को दोषः ? साम्नः पूर्वनिपातः । तत्रोच्यते—विशेष्यमेवात्रापि साम । फलं ह्येवकारेण व्यज्यते न शब्द-वृत्तम् । अस्ति च विशेषणविशेष्ययोरन्योन्यानतिक्रमेणेतरव्यावृत्तिः । यथैव हि सामलक्षितं तत्कार्यं रथन्तरसत्ताव्यवच्छेदादसत्ताव्यावृत्तमेवं रथन्तरमपि तत्र सामस्त्येनोपसंहारात् तत्रौदासीन्यात्तथाभूतास्यां [2]नान्य-पदार्थो व्यवच्छिद्यते । तत्र विशेषणगतेनैवकारेण सजातीयसामान्तर-व्यवच्छेदेनापि नाभिमतस्यासत्ताव्यवच्छेदस्य व्यक्तिरशक्येति विशेष्यगतेन व्यज्यते । शब्दवृत्तं तु यस्य सामकार्ये रथन्तरमस्ति स नास्ति । रथन्तरं सामेति । द्वन्द्वनिर्दिष्टेषु हीति । यदि सामशब्देन यावत्सामकार्यं तत्समा-

१. °नास्ति विशेषण° इति काशीमुद्रितपुस्तकपाठः ।
१. चान्यपदार्थो आ० मा० ।

प्रत्येकनिरपेक्षमेव साधनत्वमिति सामर्थ्यं न विहन्यते। यद्वा पौनरुक्त्यादेव सामशब्दस्तत्साध्यस्तोत्रलक्षणार्थः सन् रथन्तरपर्युपस्थापितं पृष्ठं लक्षयति। अथ वा बृहद्रथन्तरयोरवान्तरप्रकरणादवान्तरकार्ययोगाच्च विरोधिनोः स्पर्धमानयोर्यथावस्थितानुवादसारूप्यात्सामान्तराण्यनपेक्ष्य परस्परावच्छेदेनैव विशेषणत्वसिद्धिः। तेनोपपन्नं रथन्तरविशिष्टस्य क्रतोर्निमित्तत्वम्।

हृत्योपात्तं तदा सर्वव्याप्तिः प्रतीयते। तत्र चान्यतरापेक्षं रथन्तरं करोति न केवलमिति स्यात्। प्रत्येकं त्वेष वर्तते। ततश्चैकस्मिन्नपि सामकार्ये रथन्तरसाध्ये रथन्तरं साम तत्सामा च सोमो भवति कार्यं चास्य स्तोत्रम्। तेनैकस्तोत्रसाधनयोरेव सापेक्षता। तत्रापि न व्रीहियववत् प्रत्येकं साधनत्वं, किन्त्वग्नीषोमवद् द्वन्द्वनिर्देशेन समुदितयोरिति। यद्वा पौनरुक्त्यादेवेति। रथन्तरविशिष्टेन साम्ना क्रतुरुपलक्ष्यते। तत्र [1]शोणशब्दादि अश्वस्य रथन्तरशब्दादेव [2]सामभावे व्यर्थं सामाभिधानम्। अतस्तत्कार्यं स्तोत्रं लक्षयति। पूर्वमप्येवैव कार्यलक्षणासम्भवव्यभिचारयोश्च सतोर्विशेषणम्। तौ च पृष्ठसंज्ञस्तोत्रे नेतरेष्वसम्भवात्। एवं पृष्ठत्वस्य लक्षितत्वात् स्तोत्रान्तरसाधनसामान्तरापेक्षा दूरनिरस्तेति परिहृता सापेक्षता। सम्प्रति सजातीयसामान्तरव्यवच्छेदेनैव विशेषणत्वमुपपादयति। अथ वा बृहद्रथन्तरसामनोरिति। बुद्धौ सन्निधापितं व्यवच्छेद्यं व्यवच्छेदकेन व्यवच्छिद्यते। सन्निधानञ्च सम्बन्धात्। ज्योतिष्टोमप्रकरणवर्तितया च साहचर्यात्....प्रकरणवर्तितया साहचर्यमन्तरङ्गं बृहद्रथन्तरयोः। [3]अतस्तेनोपस्थापितमेकेनेतरद् व्यवच्छिद्य कृतार्थमेवकारो न विलम्बितागतं व्यवच्छिनत्ति। किं च विशेषणपदव्यापार एवकारेण व्यज्यते। तच्च स्वार्थसम्बन्धं बोधयत्तद्विरोधि व्यवच्छेदमेव केवलं शक्नोति कर्तुं, नाविरोधिनः। स्वार्थप्राप्तौ तु परिसंख्यया कुर्यादपि तेनात्र विरोधिव्यवच्छेदेनैव विशेषणत्वम्। विरोधित्वं चैककार्यत्वाद् बृहद्रथन्तरयोरेव। अतस्तयोः परस्परमेव व्यवच्छेदः। एवं च यथावस्थितेन यथावस्थितस्य चानुवादेन सरूपता भवति। यदि रथन्तरसामेत्युक्त्वा। यदि बृहत्सामेत्युच्यमानं पक्षान्तरमवलम्बते, तत्रैतावदेव शब्दाद् भाति। तत्रोक्तं रथन्तरं

१. शोणशब्दादि आ० मा०। २. सामलाभे आ० मा०।
३. योरन्यतरयोरन्यतरेणोपस्थापितम् आ० मा०।

अथ वास्तु रथन्तरं क्रतुविशिष्टं निमित्तमिति । ननु च तदेव न प्रतीयते । उच्यते । सत्यं न प्रतीयते किं तु यदा समस्तक्रतुसंयोगाभावाद्रथन्तरविशिष्टः क्रतुर्न गृहीतस्तदा विगृह्यमाणे समासे यो विपरीतो विशेषणविशेष्यभावः प्रतीयते रथन्तरमस्य सामेति स ग्रहीष्यते ।

षष्ठ्यन्तत्वाच्च क्रतुर्विशेषणमेव समासाभिव्यङ्ग्यविशेष्यत्वभावात्तथा विवक्षिष्यते । यद्यपि च क्रत्वन्तरेष्वपि वस्तुस्वरूपेण रथन्तरमस्ति तावद् विद्यते तथाप्यत्र तावन्मात्रेण च विशेषणत्वोपपत्तिः । स्ववाक्ये चासाधारणत्वं विशेषणकारणं न वस्तुलक्षणं मा भून्नीलमुत्पलं देवदत्तस्य गौरित्येवमादीनां विशेषणत्वोच्छेदः । तथा हि—

न लोके देवदत्तस्य गोसंबन्धोऽस्ति केवलम् ।
उत्पलस्य च नीलत्वं तस्यैवोच्येत येन तत् ॥

यदि च वस्तुत एवासाधारणत्वं भवेन्नैव शब्देन विशेषणमुपादीयेत । न ह्यत्र विशेषणफलमस्ति अग्निरुष्ण इति । तस्मादवश्यं वाक्यगतमेवासाधारणत्वमाश्रयितव्यम् । अस्ति चात्रापि तत्, ज्योतिष्टोमगतस्यैव रथन्तरस्य निमित्तत्वेनेष्टत्वात् । प्रथमतरप्रतीतं च रथन्तरं निमित्तत्वेनोत्सृज्य न निमित्ता-

नास्ति। अत्र चोक्तं बृहत्तत्रेति । श्लोकस्योत्तरार्द्धं व्याचष्टे—अथ वास्त्विति । यदा समस्तक्रतुसंयोगाभावादिति । यदा भवन्मते रथन्तरविशिष्टः पूर्वसिद्धो[1] लब्धव्यः तदा किं निमित्तप्रतीतित्यागात् कर्मान्तरकल्पना वाङ्गीक्रियतां उतार्थसिद्धं क्रतुना रथन्तरस्य विशेषणत्वम् । तत्रोत्तरं लघु इत्युच्यते अस्ति च तत् । तथा च विग्रहवाक्ये समासार्थोपपादकत्वेन तदुपात्तमिति । उत्पलस्य च नीलत्वमिति । नीलस्योत्पलविशेषणत्वमभिप्रेत्यैतत् । अथ वोत्पलस्य न नीलत्वं केवलं किन्तु रक्ताद्यपि । ततश्च कथं नीलस्यैवोत्पलमुच्येतेति । [2]उपपन्नं चैतदेव रथन्तरं निमित्तमिति । तथा हि—निमित्तवति वाक्ये नैमित्तिकविधिपरे तद्विधानं निमित्तस्य यथासिद्धस्य प्रतीतिमात्रमपेक्षते न तस्येतरेणान्वयं तत्र यदि शब्दान्निमित्तप्रतीतिः प्रक्रान्ता प्रथमावगतरथन्तरग्रहणकृतार्था तस्य [3]गुणप्रधानतावधीरणेन नैमित्तिकविधिना गृह्यते इत्याह—प्रथमतरप्रतीतं चेति ।

---

१. °सिद्धो न लब्धः आ० मा० । २. उपपन्नं चैतदेव रथन्तरं निमित्तमिति आ० मा० इत्यत्र नास्ति । ३. तावधारणेन आ० मा० ।

न्तरकल्पनायां प्रमाणं विद्यते। तस्मादुभयथाप्यदोषान्निमित्तमिति न यदिशब्द-परित्यागादीनामाश्रयणं युक्तम्। न च कामप्रवेदनहेतुमत्प्रतीतिस्तावद् भवति यावन्निमित्तत्वमेव न प्रतीतम्। तत्संभवे च नाप्रतीतग्रहणं युक्तम्। भूतभविष्यद्-वर्तमानानां चानियमेन लोके वेदे च निमित्तत्वं दृष्टमिति रथन्तरभविष्यत्व-मचोद्यम्। अपि च यदेकान्तेनावधारितं तन्निष्पन्नमेव। ज्योतिष्टोमप्रक्रमे चावधारितमेकान्तेन रथन्तरं प्रयोज्येत इति सर्ववैकल्पिकानां क्रतुप्रक्रम एवा-वधारणादवश्यमृत्विग्यजमानैरेवमिदं कर्तव्यमित्यवधार्य प्रवर्तितव्यम्। तद्वशेन प्रयोगकौशलाभ्यासादिसिद्धेः। न च निमित्तं नैमित्तिकस्य रूपसंनिधानेनोप-करोति कथं तर्हि ज्ञायमानत्वेन। तस्मादप्रयुक्तमपि संकल्पितत्वाद्रथन्तरं निमित्तम्। यदा त्वेकदेशस्थेनापि तेन विशेषितः क्रतुर्निमित्तं तदासौ वर्तते एवेत्यविरोधः। न च लिङः कालविशेषसंबन्धेनोत्पत्तिर्येनान्यतरविषयमेव निमित्तं ब्रूयात्। सर्वथा हि शक्यं दर्शयितुं यदि रथन्तरसामा सोमो भूतो भवति भविष्यति चेति। तत्रेहार्थवशेनैवं विज्ञायते यदि रथन्तरं भविष्यतीति।

यत्तु जगत्साम सामान्यतो दृष्टमुक्तं, तदयुक्तम्। तस्यैवंजातीयके-ष्वप्रमाणत्वात्। अथ वा प्रकरणे द्वित्वबहुत्वयुक्तप्रतिपद्विधानादिव जगत्सामत्वा-संभवात्तदिति वैषम्यम्, अपि च तत्रापि नैवापूर्वकर्मोत्पत्तिः, किं तर्हि, अप्रकृ-तस्य विषुवतो निमित्तत्वेन ग्रहणम्। तस्मान्निमित्तार्थानि सर्वाणि श्रवणा-नीति ॥२॥

न च कामप्रवेदनेति। नोपाधिरहितो लिङादिविधितोऽन्यत् बोधयति। उपाधिश्च यद् यदि अस्मिन् सत्येतदित्याह तावता निमित्तत्वम्। असम्भवति तु निमित्तत्वे यथासम्भवं कामप्रवेदनादिनिक्षेपो [1]यद्यन्वयेन क्रियत इति। निष्पन्नमेवेति। निष्पन्नस्य तत्कार्यकरणं तत्करणं च प्रति-पत्त्युपयोगादिति वक्ष्यति। न च निमित्तं नैमित्तिकस्येत्यादिनेति प्रयोगकौशलाभ्यासादीति। प्रयोगस्य कौशलेन पुनः पुनर्निर्वर्तनमेवं स्यादन्यथा किमिदं कुर्यामिदं वेति प्रयोगमध्ये दोलायमानमतेः कालविक्षेपा-दकौशलमेव[2] स्यात्। तच्चेदं पुनः पुनरपि भवेदित्यभ्यासशब्देनोक्तम्।

१. यद्यर्थे आ० मा०। २. दकौशलमिव स्यात् आ० मा०।

## अवेष्ट्यधिकरणम् ।

[1]'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यस्य प्रकरणे 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्यादिभिर्द्रव्यदेवतासंयोगैरवेष्टिसंज्ञकामिष्टिं विधाय श्रूयते 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत्' 'यदि राजन्य ऐन्द्रं' 'यदि वैश्यो वैश्वदेवमिति । तत्र पूर्ववदेव सन्देहः किं राजसूयमध्यस्थाया एवावेष्टेर्वर्णविशेषसंबन्धं प्राप्तमेव निमित्तत्वेनोद्दिश्य तत्र नैमित्तिकं विधीयते उताप्राप्तमेव ब्राह्मणादिसंबद्धं प्रयोगान्तरमुद्दिश्यत इति । तत्सिद्ध्यर्थं चैतद् विचारयितव्यं किं राजसूयेऽधिकारस्त्रयाणामपि वर्णानामुत क्षत्त्रियस्यैवेति । तत्सिद्ध्यर्थमधिकारिविशेषणभूतो राजशब्दस्तथैव विचारणीयः । ततोऽप्येतद्विचारयितव्यं किं क्षत्रियत्वनिमित्तो राजशब्द उत राज्यकरणनिमित्त इति । ननु च 'एतयाऽन्नाद्यकामं याजयेत्' इति वर्णविशेषणासंबद्धं पृथग्राजसूयप्रयोगं वचनादेवावेष्टेर्वचनमस्तीति वर्णत्रयस्यापि प्राप्तस्य

अथ वा साधनभेदादस्ति तत्कृतः साङ्गप्रधानप्रयोगभेदः । तत्र प्रयोगप्रक्रमे वैकल्पिकमनवधारयतां न कश्चित्प्रयोगः प्रक्रमस्य साधितः स्यात् । अवधारयत एव तु निरूपितैकप्रयोगसिद्धिः । कौशलेनाभ्यासो यथोक्तः । आदिशब्देन वैकल्पिकसम्बन्धेष्वनुष्ठानेषु बहूनां सम्प्रतिपत्तिरुक्ता । तद्यथा अत्रैव रथन्तरावधारणे तन्निमित्तायामैन्द्रवायवाग्रतायामध्वर्यूद्गातृहोतॄणां प्रगृहीतृस्तोतृयाज्यानुवाक्याप्रयोक्तॄणामिति । अधिकारविशेषणभूत इति । जातिवचनत्वाद्राजशब्दो नाधिकारविशेषणं सम्भवति । तथा हि अप्रवृत्तप्रवर्तको विधिरुदासीनमनागते प्रवर्तयति । तेन कादाचित्की कर्तव्यता विध्यर्थः । सम्प्रति प्रवर्तते सैवंरूपा कादाचित्केन निमित्तेन सम्बध्यते, न नित्येन अधिकारविशेषणमपि च तस्मिन् सत्यधिकारान्निमित्तेऽन्तर्भवति । यथा जीवनं प्राणधारणक्रियाप्रतिक्षणमुपजायमाना प्रत्येकं निमित्तं भवति । एवं जातिः प्रतिक्षणं न[1] जायते नास्ति वा । जन्ममरणान्तराले वर्तमानत्वात् । तस्मादेवं व्याख्या । कर्तृविशेषणं राजपदं राजकर्तृकस्तु प्रयोगो जातेरनुपादेयत्वान्न राज्ञा शक्यते कर्तुम् । अशक्तस्य चानधिकारः । तेनार्थाद्राज्ञेऽवगमादधिकारविशेषणं राजशब्द इत्युच्यते । तदेतद् व्यक्तीकरिष्यति । राजकर्तृकत्ववशेन [2]भोक्तृविशेष इति । [3]ननु चैतयेति कथं प्राप्तानां कर्मणां फलसम्बन्धं कर्तृसम्बन्धं चैकं

१. प्रतिक्षणं जायते अस्ति वा आ० मा० ।

२. भोक्तृत्वं विशेषण इति आ० मा० । ३. ननु चैतयेति आ० मा० न पठति ।

निमित्तार्थमेव श्रवणं भवेत्। नैतदेवम् । तदा हि निर्ज्ञातक्षत्रियकर्तृकायाः कर्त्रन्तरे वचनान्तरेणाविधीयमानायाः पृथक् प्रयोगकारणाभावाच्च राजसूयमध्यस्थाया एव 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' [मी० सू० ४।३।५।] इत्यनेन न्यायेन साधारणं च स्वाराज्यं फलं प्रात्यात्मिकं चान्नाद्यं विज्ञायते।

पृथग्वा राजन्येनैव फलार्थिना प्रयुज्यते न वर्णान्तरसंबन्धः । तद्यथाध्ययनाधानयोर्निर्ज्ञातत्रैवर्णिककर्तृकत्वात्तदधीनसिद्धीनां कर्मणामर्थिमात्रसंबन्धावगमेऽपि सति अपशूद्रविषयत्वमेवावतिष्ठते। यथा चात्रैव स्वाराज्यकामाविशेषेऽपि राजकर्तृकत्ववशेन भोक्तृविशेषो भविष्यति । तस्माद्राजसूयाधिकारेणैवैभिर्वा वचनैः प्राप्तिरिति द्वावेव पक्षौ । किं तावत्प्राप्तम् । पूर्वाधिकरणेनैव निमित्तार्थानि श्रवणानीति । राजसूयाधिकारश्च सह राजशब्देन त्रयाणामपि वर्णानाम्, राज्यकरणं च शब्दप्रवृत्तिनिमित्तमिति। तथा हि—

कर्ता राज्यस्य राजेति सर्वलोकेषु गीयते।
महाविषयतैवं च शास्त्रस्यापि भविष्यति ॥

वाक्यं कुर्यादिति चेत्, उच्यते, प्रयोज्यानां प्राप्तानामपूर्वप्रयोगविधिरयम्। तत्र [1]यत्प्रयोगासम्बन्धं प्रयोज्येऽन्तर्भवति, न तद्विधातुं शक्यम्। कर्ता तु प्रयोगापेक्षितस्तेन सम्बन्धप्रयोज्यानां कर्मणामङ्गं भवति । तेनानुष्ठितान्यपूर्वं साधयन्तीति। तेन प्राप्तानामपि कर्मणामपूर्वः प्रयोगो विशिष्टकर्तृकः फलाय विधीयत इति । [2]तदा हि विज्ञातक्षत्रियकर्तृकाया इति। फलपदं स्वाराज्यकाम इति । कर्तृपदं राजेति। तयोः कर्मणा सम्बन्धो न परस्परम् । न चैकसम्बन्धेऽपरं विशेषणम्। एतत्फले कर्मण्येष कर्तेति। एतत्कर्तृके वा फलमेतदिति। तेन राजपदाद् राजकर्तृकावेष्टिरित्येतावदवगतमेतयान्नाद्यं साङ्ग्या साधयेदिति च विध्यन्तरं यथा विज्ञातावेष्ट्यङ्गग्राहीतराङ्गवच्छाखान्तरीयप्रयोगवचनोपसंगृहीताङ्गवच्च राजानमप्युपादत्ते । तत्रापि फलोपादानाद्विनियोगव्याप्तमनेक[3]व्यापारपरता गौरवादन्यतः प्रयोगमपेक्षमाणं लभत एव तमिति पृथक् प्रयोगकारणाभावाद्राजसूयमध्यस्थामेव फले विनियुंक्ते। यदि तु साधारणासाधारण [4]विशेषप्रयोगप्रत्यभिज्ञाभावादन्नाद्यकामवाक्यं प्रयोगमप्यनुवादसम्भवाद् दधीत तदा पृथक् क्रियेत । उक्तेन तु न्यायेन राजन्येनैव । न चान्नाद्यकामशब्देनोपादानाद्वर्णान्तरस्यापि केवलराजसम्बन्धबाध इत्यत्र दृष्टान्तः। तद्यथा-

१. यत् प्रयोज्य सम्बन्धं प्रयोगेऽन्तर्भवति आ० मा०। २. तथा हि आ० मा०।
३. °मनेकपरता आ० मा०। ४. °विशेषणप्रयोगे आ० मा०।

उभयसंभवे तावत्त्रैवर्णिकविषयता युक्ता कल्पयितुम् । एवं हि निमित्तप्रतीतिस्तत्प्रकरणादीनि च न बाध्यन्ते । राजसूयाधिकारश्रुतिश्चानल्पविषयत्वेन स्वरसात्प्रवर्तमाना न निवर्तिता भविष्यति । तस्माद्राज्यं कुर्वन्तः सर्वे त्रैवर्णिका राजानः । तच्च राज्यं जनपदपरिपालनं नाम सर्वलोकप्रसिद्धम् । ततश्चोद्धरणं राज्येऽपि कण्टकोद्धारणमभिप्रेतम् । आर्यावर्तनिवासिन इति—**शास्त्रस्था वा तन्निमित्तत्वात्** [मी० सू० १।३।८।] इत्यस्य प्रदर्शनार्थम् । राज्ञः कर्म राज्यमित्येतदभियुक्ता उपदिशन्तीत्येतद् ब्रुवता ननु राजशब्दस्यैव प्रकृतिभूतस्य स्वातन्त्र्यमभ्युपगतं भवति । तथा हि—

नैवौदमेघिसंबन्धादुदमेघः प्रसिद्ध्यति ।
स्वतन्त्रेणोदमेघेन स एव त्वनुगम्यते ।। उच्यते—
राजा निर्ज्ञात एवेह स्वातन्त्र्येण चिरन्तनैः ।
तद्योगात्कल्पितं राज्यमस्माकं तु विपर्ययः ।।

यथैव गामानयेत्यभिहिते यद्यपि व्यवहर्तृभिः यो गौः स आनेतव्य इति वचनं कल्पितं तथापि पार्श्वावस्थितस्य यस्य गोत्वमप्रसिद्धमानयनं च प्रसिद्धं स छेदनादिभ्य इव यूपमेव प्रतिपद्यते य आनेष्यते स नूनं गौरिति । तथैवात्र यद्यपि मन्वादिभिः पाणिनिप्रभृतिभिश्चैवं स्मृतं यो राजा, तेन जनपदादिरक्षणं कर्तव्यम्, यश्च राजा तस्य कर्म राज्यमिति ।

ध्ययनाधानयोरिति उत्तरार्धयोजना । उभयसम्भव इति । उक्तं तावत्सार्वलौकिक्या बलीयस्त्वादितरबाधकत्वमुभयसम्भवेऽप्युच्यते । [1]अधिकारप्रतीतिप्रसाराय सा प्रतीतिरत्राश्रयणीयेति । ततश्चोद्धरणमिति । साधुपालनवद [2]साधुनिग्रहोऽपि तस्य लोकानुग्रहाय कर्तव्यः । स्मर्यते—तत्कुर्वतो वृत्तिरेषा । राज्ञे बलिदानं कर्षकैर्दशममष्टमं षष्ठं वेति । यथैव गामानयेत्यभिहित इति । विशेषस्त्वेतावानेव आनीयमानानामेकमव्यभिचारि सामान्यं लभ्यते । तेन तस्यैव तत्र वाच्यत्वम् । इह पुनः क्षत्रियत्वादेरव्याप्तेर्मनुष्यत्वस्यातिव्याप्तेरवाच्यत्वाद् राज्यकर्तृकत्वेनैव[3] राजशब्दः । तत्र तु मन्वादिभी राज्यस्य विधेयत्वात् करिष्यमाणे राज्ये या शक्तिः

---

१. अधिकारिप्रतीतिप्रसरासङ्कोचात् सैव प्रतीतिरत्रा आ० मा० ।

२. °दसाधु निगृहीतोऽपि आ० मा० ।　　३. कर्तृत्वेनैव पु० मा० ।

तथापि वयं संदिग्धराजकाः प्रसिद्धराज्याश्च सन्त एवं प्रतिपद्यामहे येनैवं स्मतृ̆भिरुक्तं तेन नूनं बन्धनसमर्थे द्रव्ये यूपवत्, राज्यकरणसमर्थद्रव्यालम्बन एव राजा तैर्निरूपित इति। तच्च राज्यमविशेषेण चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते। तस्मात्सर्वे राजानः। तत्र तु न्यायान्तरेण ब्राह्मणादिषु चरितार्थायां राजश्रुतावध्ययनादीनामभावे सति कामं शूद्रः पर्युदस्येत न त्वितरपर्युदासे हेतुरस्तीति त्रयाणामप्यधिकारः। ननु च क्षत्रियसंबन्धेन राज्यं विहितमन्यायेनेतरौ कुर्वाणौ न राजानौ स्याताम्। नैष दोषः। सर्वथा तावद्राज्यकारणात्ताभ्यामपि राजत्वं लब्धं तावता च राजसूयचोदनायाः प्रयोजनम्। यौ तु न्यायान्यायौ तयोः पुरुषधर्मत्वान्नैकोऽपि क्रतुना गृह्यत इत्यविशेषः। ननु जनपदपुरपरिरक्षणवृत्तिमनुपजीवत्यपीति सिद्धान्तबीजोपन्यासः। उक्तं ह्येतद्बर्हिराज्यादिशब्देषु यथैकदेशेऽपि जातिनिमित्तत्वे लभ्यमाने निमित्तान्तरं न कल्पनीयमिति। परः पुनर्यौगिकग्रहणमत्रोपकारकमिति प्रदर्शयति— प्रकरणवशाद्यदिशब्दसमभिव्याहाराच्चेति। न कर्मान्तरं विधायिष्यते इति— प्रयोगान्तराभिप्रायेण। अथ वा यदा यदि शालिं भुञ्जीतेत्यादयो वचनप्रकारा गृह्यन्ते तदैकेनैव वाक्येन ब्राह्मणसंबन्धो बार्हस्पत्याभिघारणं च न शक्यते कर्तुमिति मुख्यमेव कर्मान्तरत्वम्। एवं तावदुभयप्रसिद्धिं प्रमाणीकृत्योक्तम्। इदानीं तु राज्यरहिते प्रयोगः प्रमाणमेव न भवतीति प्रस्तूयते सार्वलौकिकेन प्रयोगेणासार्वलौकिकस्य बाधात्। अपि च विप्रगीता इति। तदेव प्रत्ययिता— प्रत्ययितत्वेन पुनरुपन्यस्तम्। न हि सर्वलोकासर्वलोकविदितत्वव्यतिरेकेण विप्रगीताविप्रगीतत्वे विद्येते। यद्वा पूर्वेण प्रसिद्धेः सदसद्भावमात्रमुत्तरेण तु विप्रतिपत्त्यविप्रतिपत्ती। भवति चाज्ञानविपर्ययज्ञानयोर्भेद इत्यपौनरुक्त्यम्। तथार्यावर्तनिवासिनामिति शास्त्रस्थबलीयस्त्वं पूर्वोपक्षिप्तं दर्शयति।

समीचीनतर आचार इति शब्दप्रयोगोऽभिधीयते। तस्मात्प्राप्तानामेव ब्राह्मणादीनां निमित्तार्थं श्रवणम्। अपि च 'यदि राजन्य ऐन्द्रम्' इत्यसंदिग्धंनिमित्तार्थमतश्च तत्सामान्यादितरयोरपि तथात्वमित्येवं प्राप्ते ब्रूमः।

**सा राजशब्दविषयत्वेन आश्रितेत्युक्तम्।** राज्यकरणसमर्थेति। **भवति ह्येवं प्रयोगः ऋत्विग्भिरग्न्यन्वाधानादि कर्तव्यम्। ऋत्विजां कर्म चार्त्विजमिति। [1]प्रकरणवशाद् यदिशब्दसमभिव्याहाराच्चेति। विधौ संदिग्धार्थे राजशब्देऽनुवादेन निश्चीयते[2] तदनुवादश्चायमित्युक्तमनेनेति।**

१. प्रकरणाद् यदि आ० मा०। २. निर्णीयते आ० मा०।

क्रतुसंबन्ध एवायं ब्राह्मणादेर्विधीयते ।
अप्राप्तत्वान्न राजा हि राज्ययोगात्प्रतीयते ॥

क्षत्त्रियवचन एवायं राजशब्दो न यौगिकः । स हि राज्ययोगाद्वा भवेद्धात्वर्थानुसारेण दीप्तियोगाद्वा । उभयथापि चानुपपन्नः । तद्रहितरूढिशब्ददर्शनात् । एकदेशस्थापि रूढिरवयवप्रसिद्धिं बाधते । न चावयवप्रसिद्धिरप्यत्रैकान्तिकी विद्यते, न हि दीप्यमानेष्वग्न्यादिषु राजशब्दो विद्यते । न चानभिषिक्ते जनपदपरिपालनव्यापृतेऽप्यायुक्तके । ननु चायुक्तकस्य परप्रयुक्तकारित्वादृत्विज इव यजमानत्वं न राजत्वं भविष्यति । नैवं शक्यम् । पराधीनेष्वपि केषुचित् पृथिवीश्वराभिषिक्तेषु माण्डलिकेष्वपि प्रयोगदर्शनात् । तेन तद्व्यभिचारात्स एवाभिषेको निमित्तं प्राप्नोति । नैवं भविष्यति । कुतः

अभिषेकोऽपि धर्मज्ञैः क्षत्त्रियस्यैव पठ्यते ।
सहासौ राजशब्देन तेन नाक्षत्त्रिये मतः ॥

ततोऽभिषेकस्य निमित्तत्वं ज्ञायते । यद्यस्य स्वातन्त्र्यं भवेत् । अयं तु क्षत्त्रियजातावेव स्मर्तृभिर्नियतो विधानवेलायामेव लवनादिवद् बर्हिःशब्देन राजशब्देन संयुज्यते । तेनैव चोभयनिमित्तत्वं समुदायशब्दन्यायेनैतस्यानिष्टम् । यदि हि जात्यभिषेकयोरत्यन्तसमुदितयोरेव प्रयुज्यते न तु केवलायां जातौ जात्यन्तरे वाभिषेको विधीयते, तत उभयं निमित्तमिति कल्प्येत । स त्वभिषेकात्प्रागेव तत्संस्कार्ये प्रयुक्तः 'राजानमभिषेचयेत्' इति । तस्माद्राजजातावेव प्रज्ञायते । न च भाविसंज्ञाविज्ञानं भूतत्वेनैवोपपद्यमानत्वात् । अगत्या हि सान्यत्राश्रीयते । न चैकस्मिन्निमित्ते सिद्धे निमित्तान्तरं कल्पयितुं शक्यम् । विनापि तत्कल्पनेन प्रयोगोपपत्तेः । अभिषेकनिमित्तत्वेऽपि च न्यायानुसारिणां नैवाक्षत्त्रियविषयत्वं सिद्ध्यति । यस्तु धर्मशास्त्रादिक्रमेण क्रियते न तस्य

तेनैव चोभयनिमित्तत्वमिति । प्रत्येकव्यभिचारे हि [1]समुदितविषयो मिथुनादिशब्दवत् स्यात् नाव्यभिचारे । व्यभिचारश्चैवं भवतीत्याह—यदि हि जात्यभिषेकयोरिति । न केवलायां जाताविति । पूर्वोक्तव्यतिरेकोऽनेनोच्यत इति । जात्यन्तरेऽपि वाभिषेक इति । अनेनाभिषेकव्यभिचारोऽप्येवं प्रतीयेतेत्युच्यत इति । भूतत्वेनैवोपपद्यमानत्वादिति । न चेयमनुपपत्तिः । यद्ययं जातिवचनः

१. समुदायविषयो आ० मा० ।

निमित्तत्वं स्यात्। यथा शुद्रकृतस्याधानस्य नाहवनीयादिप्रयोगनिमित्तत्वम्। अपि च,

नित्याः शब्दार्थसंबन्धा यथावस्थितगामिनः।
नाश्रयन्त्यध्रुवं हेतुं स्वच्छन्दपरिकल्पितम्॥

नित्यस्य हि राजशब्दस्य नित्येनैव निमित्तेन भवितव्यं नित्यानित्ययोः संयोगाभावात्। सा च नित्यता वस्त्वपेक्षया वा विध्यपेक्षया वा निरूप्यते। तत्र न तावदभिषेको वस्तुरूपेणैव जातिवत् केषुचित्समवेतो दृश्यते। तेनावश्यं विधानापेक्षमेव निरूपणमाश्रयणीयम्। न च विधानमक्षत्त्रिये राजशब्दस्यास्तीति जात्यव्यभिचार एवापद्यते। ततश्च सैव निमित्तम्। एतेन राज्यनिमित्तत्वं प्रत्युक्तम्। तदपि हि विधानात्प्रभृति, अभिषेकवदेव क्षत्त्रियत्वं संबद्धम्। दृष्टश्चानभिषिक्तेऽपि, अपालयति च जनपदं, क्षत्त्रिये राजशब्दप्रयोगः। तद्वत्यपि वान्यजातीयेऽनभिधानं द्रविडानाम्। तस्मादपि न त्रैवर्णिको राजा। तथा च राज्ञोऽपत्यं राजन्य इत्यैकान्तिकक्षत्त्रियजातिवचनस्य राजन्यशब्दस्य राजशब्दप्रकृतित्वमेवान्वाचक्षते। अन्यथा त्रैवर्णिकानां राजत्वात्सर्वेषां त्रैवर्णिकानामपत्येषु राजन्यशब्दप्रयोगः स्यात्। कुतः!

राजन्यः क्षत्त्रिये रूढो राजानः सर्व एव चेत्।
अपत्यापत्यवद्योगे वैषम्यं वद कीदृशम्॥

**किमिति राजन्यमात्रे न प्रयुज्यते। यतो नावश्यमेकनिवेशिभिः सर्वैर्व्यवहारो येन केनचित्सिद्धेः। अतो नाप्रयोगादवाचकत्वानुमानं प्रमाणाभावात्तु वाचकत्वाभावः स्यात्। दर्शितं तु प्रमाणमेकस्मिन् देशेऽभिषेकविधौ च जातिमात्रे प्रयोग इति। यथा शूद्रकृतस्येति। यथा आधानं न प्रसिद्धं धात्वर्थ[1]सामान्यमात्रमपि तु वसन्तादि वाक्योत्पादितः कर्मविशेष एवमभिषेचनमपीति। नित्याः शब्दार्थसम्बन्धा इति। सम्बन्धग्रहणकालोपजातैकप्रतीतिविषयीकृतं भूतभविष्यद्वर्तमानेष्वर्थेष्वव्यभिचारि रूपं नित्यमित्युच्यते, न कूटस्थम्। [2]अभिषेकश्चाभिषिक्तमात्रे राजशब्दप्रयोगान्न धात्वर्थसामान्यात्मना निमित्तमित्युक्तम्। येन [3]पाकादिवत्सूपकारसमवेतं दृश्येत। तस्मादेवं सम्बन्ध-**

१. धात्वर्थमात्रम् आ० मा०।
२. अभिषेकश्च सिक्तमात्रे राजशब्दाप्रयोगात् आ० मा०।
३. येन पाकादिवत् कारकसमवेतं तं दृश्यते, आ० मा०।

नन्वेवमप्यनुपपन्न एवायमपत्यप्रत्ययः । तथा हि—

प्रकृतौ तदपत्ये च जातिशब्दस्य तुल्यता ।
तेन राजैव सर्वत्र राजन्योऽभिधीयताम् ॥

यथैव काकस्यापत्यं काक एवं राज्ञोऽपत्यं राजेत्येव स्यात् । नैष दोषः । पर्याय एव हि राजशब्दस्य राजन्यशब्दोऽनेन प्रकारेणान्वाख्यायते, स त्वेकजातिविषयत्वे सति तथान्वाख्यातुं युज्यते नान्यथा । ननु 'राज्ञोऽपत्ये जातिग्रहणम्' इति वचनात्क्षत्रियजातिवचनो भविष्यति । नैतदेवम् । इहान्यतमजात्यनुपादानाद्राजवन्मनुष्यजातिमात्राधिकारात्तद्वचनत्वं स्यात् । ननु च राजराजन्यशब्दयोस्तत्र तत्र कर्मभेदोपदेशेन स्मृतिविदां याज्ञिकानां च भेदेन प्रसिद्धिर्दृष्टा । सत्यं दृष्टा सा तु ब्राह्मणपरिव्राजकन्यायेन राजन्यशब्दस्याभिषिक्तविशेषगामित्वेन सामर्थ्यलभ्यत्वात् । यत्तु प्रसिद्धिद्वयसंभवे राज्यनिमित्तत्वं प्रकरणादिभ्यो विज्ञास्यत इति तन्निराक्रियते । तथा हि—

नैव तावदुभौ शब्दौ स्वातन्त्र्येण प्रसिद्ध्यतः ।
क्लृप्तायामेकशक्तौ हि द्वितीयो यौगिको वरम् ॥

तदेतद्दर्शयति—यदि तावज्जातिशब्दो राजेति ततस्तस्य कर्म राज्यमित्यवयवप्रसिद्धिसंभवान्न तन्निरपेक्षं शक्त्यन्तरकल्पनमुपपद्यते । विनैव तेनार्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ तु प्रथममेव राज्यमिति प्रतिपालनं

ग्रहणम् । यदेतद्वाक्यविषयीकृतं कर्म द्वारराजेति । [1]यत्तु स्वच्छन्देनावैधं क्रियते, तद्विधीनामुपलक्षितत्वादध्रुवमनिमित्तं शब्दप्रवृत्तेरिति । कथं सामान्यसम्बन्धेऽभिषिक्तविशेषगामित्वमिति चेदत आह—[2]सामर्थ्यलब्धत्वादिति । राजन्यानां युद्धम् उपदिश्य विशेषवचनं न राजा राजानं हन्यादिति । तद्राजशब्दस्य विशेषगामित्वे विशेषणञ्च संस्कारविशेषस्तद्विधौ घटते राजशब्दस्य तत्साहचर्यदर्शनाद्राजंशब्दवदिति । यत्तु प्रसिद्धिद्वयेति । यदुक्तं भवेदेव जातिशब्दोऽयं यौगिकोऽपि तत्र च यौगिकग्रहणमत्रेति । नैव तावदुभाविति । राज्यशब्दस्य रूढित्वे स्यादपि तद्योगात्स एव तु यौगिक इति । तद्धितस्य कित इति विहितः प्रत्ययस्वरोऽत्र प्रतीयते

१. यत्तु व्यवच्छेदेनावैधं क्रियते आ० मा० ।
२. सामर्थ्यलभ्यत्वादिति आ० मा० ।

रूढिरूपेणाभिधीयते । ततस्तच्छक्त्यनुसारेणैव तत्कर्तरि राजशब्दप्रयोगसिद्धे शक्त्यन्तरकल्पनमन्तरेणैव द्राविडानां राज्याधिकारयोग्येषु क्षत्त्रियेषु प्रयोगो न विरोत्स्यते । दाक्षिणात्यत्वसामान्येनान्ध्राणामिति *भाष्यकारेणो*क्तम् । तस्मान्न तावदुभावपि रूढिशब्दौ नापि यौगिकौ । अन्यतररूढित्वे तु राजशब्दस्य तत्कल्पना युक्ता । कुतः !

आचार्योरसंबन्धे सन्देहे सति निर्णयः ।
सन्निबन्धनया स्मृत्या बलीयस्त्वादवाप्यते ॥

राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्त्रियस्येति मन्वादयः स्मरन्ति । पाणिनिप्रभृतयोऽपि राज्ञः कर्मेदं राज्यमित्येवं व्युत्पादयन्ति । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च [पा० सू० ५।१।१२४]' इत्यधिकृत्य स्वतन्त्ररूढाद्राजप्रातिपदिकात्प्रत्ययविधिः । तत्र ष्यञ्प्रत्ययं विदधतीत्यत्र वदन्ति । पत्यन्तपुरोहितादिपाठाद्राजशब्दस्य विशेषविहितेन यका भवितव्यम् । तथा च यक्प्रत्ययस्वर इहोपलभ्यते नाद्युदात्तत्वम् । तस्माद्राजशब्दाद्राज्यशब्दव्युत्पत्तिर्न तु विपरीतेत्येतावन्मात्रपरमेव *भाष्यं* द्रष्टव्यम् । राज्यशब्दाद्धि राजनि व्युत्पाद्यमाने यलोपाम्नानं वा राजशब्दादेशात्मकं वा स्मरणं स्यात् । तस्मादियमेव वचनव्यक्ती राज्ञः कर्म राज्यमिति न त्वर्थापत्त्या राज्यस्य कर्ता राजेति

न तु नित्यार्दिर्नित्यमिति [पा० सू० ६।१।१९७] विहितम् । प्रकृतावाद्युदात्तत्वमिति । तथा हि यूपादेरज्ञानाद्विपरीतवचनव्यक्तिकल्पना । अत्र तु ज्ञात एव वचनेनापेक्षितः पूर्वप्रसिद्धो राजेत्याह—देशान्तरे विज्ञातत्वादिति । कल्पितायामपि चार्थापत्ताविति । ननु जनपदरक्षणादिरूपं लौकिकमेव राज्यं [1]नाधानादिवत् स्वच्छन्दकल्पितं चाराज्यं भवति । तेनान्यायकृतमपि शब्दप्रवृत्तिनिमित्तमुचितम् । अत्रोच्यते—राज्ञः कर्म राज्यमित्यस्यान्वाख्यान[2]वचनस्याप्रसिद्धत्वाद्राज्ञो विपरीता वचनव्यक्तिः राज्यकर्ता राजेति । तदनेन वचनेन राजानमुपलक्षयितुमुपलक्षण[3]मुपपादयता प्रसिद्धसम्बन्धस्योपलक्षणत्वात्सम्बन्धप्रसिद्धिराश्रयणीया । सा च शास्त्रस्य शास्त्रायैव सन्निकृष्टा विप्रकृष्टा प्रत्यक्षादिप्रमाणिकेति मन्वादिस्मृतिगतैवाश्रीयते । सैव च

---

१. बाधनादिवत् आ० मा० । २. व्याख्यानस्याप्रसिद्धत्वात् आ० मा० ।
३. °मुपाददानेन आ० मा० ।

कल्पनीयं, देशान्तरे विज्ञातत्वाद्राज्ञः। कल्पितायामपि चार्थापत्तौ मन्वादिस्मृतिवशेन क्षत्रियस्यैतत्कर्मेत्यवधारणात्स एव राजा विज्ञायते। सकलश्च राजेतिशब्दो राज्येऽनुप्रविष्ट इति स यौगिको युक्तो न तु राज्यशब्दो राजन्यनुस्यूतः सकल इत्ययौगिकत्वम्। सत्यमेवं राज्यशब्दस्य यौगिकत्वमुपपद्यते। यस्तु तत्कारिणि जात्यन्तरे राजशब्दप्रयोगः स क्षत्रियत्वाभावान्न प्राप्नोति। तेन नार्यावर्तनिवासिनां प्रयोगः सकलो न विरुध्यते। तथा न शूद्रराज्ये निवसेदित्यादीनामाप्तप्रयोगाणां बाधः स्यादित्यत आह—योगाल्लोकः प्रयुङ्क्त इति। प्रथमं तावद्राजयोगाद्राज्यं पुनस्तद्योगाद्ब्राह्मणादिषु राजशब्दोपचार इति। नन्वेवं सति राज्ययोगादपि राजेत्येतदभ्युपगतमेव। नैष दोषः। गौणत्वाभ्युपगमात्, मुख्यत्वाभ्युपगमे ह्यधिकरणं परावर्तेत। गौणत्वं तु मुख्येन बाधितत्वादभ्युपगतमपि सिद्धान्तं न विरुणद्धि। तेन तत्कार्यापन्ने प्रतिनिधिन्यायेन ब्राह्मणादौ राजशब्द इति द्रष्टव्यम्। तथा च दर्शयति—न त्वेवं स्मरन्ति राज्ययोगाद्राजेति। तच्चैतदाचारस्य दौर्बल्याद्गौणकल्पनाश्रयणमित्येवमेव *भाष्यं* नेयम्। यत्त्वौदमेधिशब्दादिवत्प्रकृत्यर्थानुमानं तद् द्रविडप्रयोगेण प्रत्यक्षेण बाध्यते। अथ राज्यस्य कर्तैवमभिधीयत इति। निमित्तभूतोऽपि कर्मकर्तृसंबन्धस्तस्य च स्मरणमनुमातव्यम्। राज्ञः कर्म राज्यमिति प्रत्यक्षं

**शास्त्रप्रवृत्तिवेलायां लब्धात्मिका तद्व्यापारपर्यवसाने कारणम् इतरा तु न तथा। तस्मादयमन्वाख्यानस्यार्थो यस्य राज्यं कर्म मन्वादिस्मृतितोऽवधार्यते स राजेति। तदेतत्स्फुटमेवोच्यते—**मन्वादिस्मृतिवशेन क्षत्रियस्यैव तत्कर्मेत्यवधारणादिति। न शूद्रराज्य इति। **ननु शूद्रे राजनीत्युच्यते। सत्यमेवमपि तु सामानाधिकरण्यमेवम्। तथा हि—राज्ञः कर्म राज्यं तच्छूद्रस्येत्युच्यमाने शूद्रस्य राज्ञ इत्यापद्यत इति।** प्रतिनिधिन्यायेनेति। **यथा व्रीहिप्रतिनिधिषु नीवारेषु लक्षितकार्योपयोगिरूपयोगी व्रीहिशब्द इति। यद्यपि विरोधिस्मरणमाचर्यमाणस्य ब्राह्मणादिषु राजशब्दस्य[1] गौणत्वे प्रमाणमिति बलाबलमभिधायोक्तं *भाष्ये* तथापि बलाबलाभिप्रायेण तन्नेतव्यम्। एवं हि** सिद्ध्यत्यभिमतमित्याह—तच्चैतदाचारस्येति। **राज्ञः कर्म राज्यमित्यस्यामेव वचनव्यक्तौ औदमेधिन्यायेनाप्रसिद्धराज्यकानां**

---

१. °स्यातो गौणत्वमिति बलाबल आ० मा०।

स्मरणं तस्माद्बलवत्तरम्। पर आह—यो यो राज्यं करोतीति। सर्वथान्वयव्यतिरेकाभ्यां वाच्यवाचकसंबन्धो विज्ञायते। स च राजशब्दस्याव्यभिचारेण राज्यनिमित्ततया च गम्यते न तु राजकर्मनिमित्तत्वेन, स्मृतेः पुनः शब्दापशब्दविभागमात्रविषयत्वादविषय एवायम्। उभौ हि राजराज्यशब्दौ साधू, तस्मादयुक्तः स्मरणोपन्यास इति। तत्रोच्यते सत्यं प्रयोग एव, न च स्मृतेः कस्य किं योगनिमित्तत्वमित्येष व्यापारस्तथापि तु साध्वसाधुत्वपरतयैवान्वाख्यानान्निमित्तत्वमवगम्यते। राज्ञः कर्म राज्यमिति हि व्युत्पादने तद्योगनिमित्ते राज्यमित्यर्थादुक्तं भवति। तेन स्मृतिबलीयस्त्वाद्राजशब्द एव स्वतन्त्र इति। प्रयोगोऽपि च द्रविडेषु व्यभिचारीत्युक्तमेव। मत्पक्षे तु प्रयोगस्यातन्त्रत्वाद् व्यभिचारित्वमदूषणम्। यत्र तावत् प्रयोगस्तत्रास्ति राजकर्मत्वम्। तेन प्रयुक्तस्यान्वाख्यानकरणादप्रयुक्तनिमित्तान्वाख्यानाभावाच्चादोषः। किञ्च—

असाधारणभावेन सर्वत्रेष्टं विशेषणम्।
तेन तस्यैव कर्मेति चिन्तितादि न गृह्यते॥

जनपदरक्षणं ह्यसाधारणं राजकर्म, तेन राज्यमित्युच्यते। चिन्तितनिमिषितादि तु राज्ञश्चान्येषां चेत्यव्यवच्छेदान्न राज्यशब्दाभिधेयं भवतीति। तेन सार्वलौकिकादपि प्रयोगात् शास्त्रस्था वा तन्निमित्तत्वात् [मी॰ सू॰ १।३।९।] इत्यनेनैव राजशब्दस्य क्षत्रियवचनत्वम्। तुल्यश्चान्त्यजनपदवासिनामपि दृष्टार्थत्वाच्छब्दव्यवहारे प्रमाणाभाव इत्युक्तं चोदितं तु प्रतीयेत [मी॰ सू॰ १।३।१०।] इति। तस्मात्क्षत्रियस्यैव राजसूयोऽस्तीति ब्राह्मणादीनां प्रापकाणि श्रवणानि। ततश्च 'एतयान्नाद्यकामम्' इत्येतदपि फलं बहिरेव प्रयोगाद्भविष्यतीति। कुतः!

क्रतुमध्यप्रयोगो हि स्वाराज्येनैव पूरितः।
साकाङ्क्षस्त्वितरस्तस्मात्तस्यैव फलसंगतिः॥

**प्रकृत्यर्थानुमानं [1]द्रविड्प्रयोगसिद्धेर्नानुमानं[2] निमित्तान्तराभावाद्राज्यकर्तृत्वेनेत्यनुमातव्यम्। इदं स्मरणपरिपालितं प्रसिद्धिमनुभवतीति स्मरणमप्यनुमातव्यमिति। क्रतुमध्यप्रयोगो हीति। उक्तं विनियोगव्यापृतमिदं [3]प्रकृतेन प्रयोगविधिना सम्बध्यते। तत्र च साकाङ्क्षसम्बन्ध उचित इति।**

१. द्रविडपदमिह नास्ति आ॰ मा॰।
२. नात्मानं लभत इत्युक्तम्। अन्यथेदमपरं तत्रानुमानं व्यापद्यत इत्याह—अथ राज्यकर्तैवमिति। नानाजातीयेषु राज्यदर्शनात् राजशब्दवाच्यत्वमनुमीयमानम् निमित्ता' इत्यधिकं पठति आ॰ मा॰।
३. प्रकृतेन आ॰ मा॰ न पठति।

ननु चैतयेति प्रत्यक्षविशेषवचनात्परोक्षसामान्यप्रवृत्तां राजसूयचोदनां बाधित्वान्नाद्यफलतयैव भवितव्यम् । नैतदेवम्, विरोधाभावात् । तथा हि—

विरोधित्वात्प्रसज्येते विकल्पावृत्तिकल्पने ।
बाधस्तेनाभ्युपेतव्यो व्यवस्थायां तु नैव ते ॥

न ह्यनेकफलमेकस्य विरुद्धं प्रयोगान्तरस्य वचनान्तरेणैव कल्पितत्वात् । समुच्चयेन ह्यावृत्तिदोषोऽन्यत्राभिधीयते । सा त्वत्रावृत्तिर्ब्राह्मणादिसंबन्धाद्राजसूयग्रहणाच्चावश्यंभाविनी । यदि च 'एतयान्नाद्यकामम्' इत्युत्पत्तिवाक्यं भवेत्ततः पश्चात्प्रवर्तमाना राजसूयचोदना बाध्येत । न । द्वयोरपि ह्याग्नेयादिचोदनोत्पादितेषु कर्मसु प्रवृत्तेषु युगपत्कालत्वेनागृह्यमाणविशेषत्वात्तुल्यबलत्वम् ।

प्रत्यक्षविशेषेति । एतच्छ्रुत्यभिधानेनोपादानं प्रत्यक्षं प्रकरणेन बोधितं परोक्षम् । एकमेकवृत्तिविशेषवचनमनेकसाधारणं सामान्यप्रवृत्तं तत्रैकस्यैक[1]फले विकृतस्यान्येनासम्बन्धात् विरोधात् पूर्वेण परस्य बाधः ततश्चाराजसूयचोदनापरिग्रहाभावादसत्त राजकर्तृकत्वे निमित्तार्थानि श्रवणानीत्यभिप्रायः । [2]बलाबलमेकयोगित्वं चाङ्गीकृत्याविरोधमुपपादयति । विरोधित्वात् प्रसज्येत इति । एकस्य वस्तुनो अनेकशक्तित्वाविरोधादेवंविरोधित्वमेकः प्रयोगविधिरेकनिराकांक्षे नेतरेण सम्बन्ध्यत इति । तत्र विकल्पेन प्रयोगावृत्त्या वा विरोधः परः परिह्रियते । [3]बाधे न वेति पूर्वयोरत्यन्तदुष्टत्वाद् बाधोऽभ्युपगम्यते । प्राधानावृत्तिरपि हि गुणानुरोधेनाप्रामाणिकी । अत्र तु वचनान्तरविकल्पितेन प्रयोगान्तरेण सम्भवादविरोधः । नन्वविरोधादबाधितया राजसूयचोदनया परिग्रहाद्राजकर्तृकत्वे नियते ब्राह्मणादिसम्बन्धात् प्रयोगान्तरम् । सति च प्रयोगान्तरे विरोधाभाव इति स्यात् । उच्यते न चैतदस्ति । असत्यपि हि ब्राह्मणादिसम्बन्धात् प्रयोगान्तरे अन्नाद्यकामवाक्येनैव प्रयोगमुपकल्प्य फलसम्बन्धः कर्तव्यः । [4]यद्वा राजसूय[5]प्रयोगस्थाया एव भवेत् । ततश्चैवमपि प्रयोगादविरोधः । न चैवं ब्राह्मणादिसम्बद्धानां निमित्तार्थत्वम् उक्तं हि पृथग्वा राजन्ये नैव क्रियेतेति । ततश्चावश्यमेतेषां प्रयोगविधित्वेन [6]अन्नाद्यकाम एतेषां विधीयते न प्रयोग इत्यभिप्रेत्य ब्राह्मणादिसम्बन्धादित्युक्तमिति । सम्प्रति बलाबलेऽपि नातीव विशेष इत्याह—यदि चैतयेति

---

१. स्यैकफलस्वीकृतस्यान्येना० आ० मा० ।

२. लमेकसमवायित्वम् आ० मा० । ३. बाधे पदं आ० मा० न पठति ।

४. अन्यथा आ० मा० । ५. प्रकरणस्थाया आ० मा० ।

६. अन्नाद्यसम्बन्ध एव तेषां विधीयते आ० मा० ।

यथैव हि राजसूयचोदना संनिहितानालोच्य प्रवर्तते तथैवान्नाद्यकामचोदनापि, न हि तत्रावेष्टिः केनचिदपि शब्देनोपात्ता। न च राजसूयेनेति सामान्यशब्दः पौर्णमासीशब्दवत्। प्रकृतसमुदायविशिष्टसमुदायिवचनत्वात्। अत एव तत्कृतमपि न दौर्बल्यं लभते। इयांस्तु विशेषः। एकेन बहवो गृह्यन्ते, अन्येनाल्पे। न च तावता कश्चिदतिशयोऽस्ति। ननु चैतयेति श्रुत्यैव प्रत्यक्षवचनादस्ति विशेषः। स्याद्विशेषो यद्येतच्छब्दः फलेन संबध्यते। यदि वा 'अथैष ज्योतिः' इत्यादिवत्प्रस्तूयमानं ब्रूयात्। प्रत्ययसंनिकर्षात्तत्रापि यजिशब्दगृहीतैवावेष्टिरन्नाद्येन संबध्येत। एतावच्च राजसूययजावप्यस्तीत्यविशेषः। प्रकृतमपि च ब्रुवन्नेतच्छब्द आग्नेयादिवाक्यालोचनादृते नैव ब्रवीतीति। ततश्च राजसूययजिरपि तावता यत्नेन शक्नोति ग्रहीतुमिति तुल्यबलत्वम्। नन्ववान्तराधिकारस्यास्ति विशेषः। उच्यते, अयमेव विशेषो यदेकत्र बहूनां ग्रहणमपरत्र चाल्पानाम्। ग्रहणवेला तु तुल्यैव। यदि चैकान्तिकमत्राकर्मान्तरत्वं स्यात्तत एवमुच्येत। कर्मान्तरमपि चैतदिति दर्शितम्। ततश्च विषयान्तरत्वादेव स्वाराज्यान्नाद्ययोरविरोधः। कर्मान्तरत्वेऽपि च बार्हस्पत्यादिलिङ्गदर्शनात्प्रकृतावेष्टिप्रकृतित्वमेव प्रतिपत्तव्यम्। राजन्यस्यापि तुल्यप्रवृत्तेः फलपदानुषङ्गाच्च ब्राह्मणवैश्यवदेव कर्मान्तरेण प्रयोगान्तरेण वा संबन्धः। एवं च तस्यापि मध्ये निधानवाक्यं तन्त्रप्रयोगे सत्युपपत्स्यते। राजसूयमध्यस्थायां तु दक्षिणाभेदात्प्रतीष्टि प्रयोगान्यत्वे मध्ये निधानविधिरवरुध्येत। तस्मात्प्रापकाण्येतानि श्रवणानीति सिद्धम्॥३॥

यदि वा अथैष ज्योतिरिति। यदा हि यजिमेव फलान्वयिनं प्रकृतेऽवस्थापयेत्, ततश्च स्ववाक्याद्यजेः प्रकृतगामित्वमत्रेतरत्र तु प्रकरणादिति स्यादिति। नन्ववान्तराधिकारस्येति। इष्यते हि महाप्रकरणादवान्तरप्रकरणस्य बलीयस्त्वमिति। अयमेवेति। ततश्चावश्यावहेये अन्यतरस्मिन् सावकाशस्य महाप्रकरणस्य हानिः स्यादत्र तु ग्रहणवेलायां तुल्यत्वं नैकनिराकांक्षीकृतस्येतरेण सम्बन्धो, युगपदुभयसम्बन्धे च नावश्यावहेयतान्यतरस्य, एकस्योभयशक्तित्वोपपत्तेरिति। फलपदानुषङ्गाच्चेति। यदि राजन्य इत्यत्र वाक्ये ब्राह्मणसंयुक्तवाक्यगतस्य यजेतेत्यस्यानुषंगः। पूर्वत्रविधि-

## विशिष्टाधानविधेयत्वाधिकरणम् ।

'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिषु प्राप्त्यप्राप्त्याशङ्कायां पूर्ववदेव सन्देहः । तत्र यदि कथञ्चिदपि प्राप्तिरस्ति ततो विनापि यदि शब्दान्निमित्तार्थत्वं तदा च ब्राह्मणवसन्तादिसंबन्धः परस्परनियमात्मकं फलं भविष्यति । अथ त्वप्राप्तिस्ततः प्रापकाणि ब्राह्मणवसन्तादिविशिष्टाधानस्य, तदा च पूर्वत्र पूर्वत्रोत्पत्तिवाक्यशिष्टगुणावरोधादुत्तर उत्तरो गुणः कर्मान्तरं कल्पयतीति त्रीण्याधानानि भविष्यन्ति । स्वार्था एव वाऽनय आत्मनेपदनिर्देशाद्विज्ञास्यन्ते । शूद्रस्य चाप्राप्तिः । निमित्तार्थपक्षे तु सर्वं विपरीतमेव । एतेन 'वसन्ते ब्राह्मणमुपनयेत्' इत्येवमादीन्यपि तुल्यहेतुत्वाद्विचारितानि द्रष्टव्यानि । तत्रैतावान् संक्षेपार्थः ।

**रत्रानुवादत्वमिति एतदेव तावदघटमानं भवेदप्येवं यदि फलपदेन सम्बन्धः स्यात्, अन्नाद्यकामवाक्येन तु तदेकवाक्यतां गतम् । तेन यजत्यनुषंगोऽन्नाद्यवाक्यैकवाक्यतापि वक्तव्या । सा च भानुवादत्वे सम्भवतीति । एवं च तस्यापीति । आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेति प्रति कर्मात्र दक्षिणाम्नानात् । तया च प्रतिकर्माम्नातस्य न तस्यर्त्विजस्तदवसाने उदासीनस्य पुनः कर्मान्तरारम्भात्प्रयोगभेदः । न च राजसूयचोदनया सह प्रयोग विषयिण्या प्रयोगैकीकरणम् । अन्नाद्यफलस्तु प्रयोग एको ब्राह्मणादियुक्तेन विधीयते । प्रयोगैकत्वेनादिमध्यान्तविभाग इति ।**

**विनापि यदि शब्दादिति । कथं विशिष्टस्य निमित्तत्वम् । तदुच्यते—ब्राह्मणाधानयोः प्राप्तवसन्तविधौ तयोरनुवादः । [मी० सू० ४१।१।३] । तत्रापि विशेषणे शब्दस्य तात्पर्याद् ब्राह्मणे सति वसन्तो विधीयते । स च प्रयोगविधिना सम्बध्यमानः क्रियामुपादत्ते । सा यदि प्रकरणेन दीयते, तदा साध्वेव । वाक्येनाप्यनुवादापर्यवसाने तद्दानं नातिदोषावहम् । तेनादधानो ब्राह्मण इति भवतीति । यदि ब्राह्मणो वसन्त इति पदद्वयसम्बन्धस्तदा निमित्तत्वार्थत्वमिति *भाष्यं* तत्र कारकयोरसम्बन्धादेकक्रियान्वयापादितोऽयमन्वयः शब्दतात्पर्यगोचरी कृतत्वात् फलभूत इत्याह—तदा चेति । एतेन वसन्त इति । कर्मप्रयोगविधिभिस्तज्ज्ञानोपायं वेदाध्ययनमाक्षिपद्भिरुपनो-**

सामर्थ्याक्षिप्तमाधानं सामान्यवचनेन वा ।
तस्माद् वर्णविशेषाणां निमित्तार्था पुनः श्रुतिः ।।

एकस्तावत्पूर्वपक्षहेतुरग्निहोत्रादिचोदनाभिरेवाधाननिष्पाद्याहवनीयादिसाधनत्वाद् विनानुपपद्यमानाभिः प्रापितत्वाद् ब्राह्मणादीनामाधानं निमित्तार्थं श्रूयत इति । यदि तु प्रत्यक्षवचने सति सामर्थ्यमप्रापकमिति कल्प्यते ततोऽस्माद् गुणापहृतशक्तिकाद्विधेरनपहृतशक्तिरपरो निर्गुणो विधिरस्ति 'य एवं विद्वानग्निमाधत्ते' इति । तेन प्राप्तेरप्रापकत्वमिति । सिद्धान्तहेतुस्तु—

प्रत्यक्षविधिसद्भावाल्लभ्यते नानुमानिकः ।
प्रापकत्वमतो नार्थवर्तमानापदेशयोः ।।

न तावन्नित्यमर्थस्य प्रापकमस्ति । उपायान्तरेणापि प्रतिग्रहादिना पुरुषान्तराहितानामात्मनेपदेनानियतानां सुलभत्वात् । प्रत्यक्षवचने सति अन्यथानुपपत्तिपक्षे सति, अर्थापत्तिलभ्यश्रुत्यपरिग्रहाच्च । 'य एवं विद्वान्' इत्यपि वर्तमानापदेशः प्रत्यक्षायां लिङि ब्राह्मणादिवाक्येषूपलभ्यमानायां न विधिशक्ति लभते । अस्ति चैतदुपन्यासस्य प्रत्यक्षविधियुक्तोदकोपसर्जनादिसंभारविधानार्थत्व मित्यप्राप्तमेव ब्राह्मणादिविशिष्टमाधानं विधीयत इति । किं निमित्तसारूप्यमिति—यदिशब्दाद्यनुबन्धाभिप्रायम् । ब्राह्मणादीनां वसन्तादिविधिभिः समुच्चारणमिति—परपदसंबन्धसंचारितायां विधिशक्तौ निमित्तफलत्वात् । ननु ब्राह्मणादीनामादधातिनापीति—अप्राप्तौ विशिष्टविधानोपपत्त्यभिप्रायम् । इतरस्तु प्राप्तत्वेन विधेयत्वं निवर्तयति—न [१]त्वमीषामाधानसंबन्धो न विदित इति ।

तस्याध्यापयितुमशक्यत्वात् । उपनयनमाक्षिप्यत इति पूर्वपक्षयति—सामर्थ्याक्षिप्तसाधनमिति । कथमविहितस्याग्निसाधनत्वमसाधनत्वस्य वा कथमाक्षेपः । तदुच्यते—विधाने वा कथम् । नह्याहवनीयकामस्याधानं श्रूयते । तस्माच्छब्दान्तरार्थसम्बन्धावगमो यथात्वगविलाहंसमुखप्रसेकाः जुहूरेवमाहितोऽग्निराहवनीय इति । त तश्चाहवनीयशब्दार्थमुपादित्सता तन्निमित्तमाधानं कर्तव्यं भवतीति । न तावन्नित्यमिति । ननु पाक्षिकत्वेऽपि निमित्तत्वाविरोधः । सत्यमाधानविधानशक्तिस्त्वनेनोच्यते । ततश्च विशिष्टविधेर्दुर्बलत्वाद्धात्वर्थे तयोः सम्बन्धविधानं हातव्यं भवति । किञ्च ब्राह्मणसम्बन्धस्य[1] नि मत्तत्वेनानित्यतात्र प्रतीयते । यद्याधाता ब्राह्मणः

१. °त्वेषामाधान° इति काशीमुद्रितपाठः ।

1. सम्बन्धेनानित्यता आ० मा० ।

केन प्राप्तो विदित इति—प्रापकाक्षेपः। इतरस्तु निराकरणमपश्यन् बलीयांसं च प्रत्यक्षविधिं किमर्थं प्रथममेवोपन्यस्यामीति मत्वा कामश्रुतिभिरित्याह। काः कामश्रुतय इति सक्रोधं प्रापणशक्तावाक्षिप्तायां स्वरूपमेवैष न जानातीति मन्यमानो दर्शयति—अग्निहोत्रादिफलविधय इति। कथमन्यपराभिः सतीभिस्तत्प्रापितमित्याशङ्क्यार्थापत्तिं दर्शयति। तेन 'कर्मजे कर्म यूपवत् [ मी० सू० ७।३।२८।] इति आहवनीयादिग्राहिभिः कर्मभिरनन्योपायत्वाद् गृहीतमाधानमिति। सर्वप्रकारासंभवे च विशिष्टविधिर्भवतीति संभवापेक्षया वाक्यभेदमाह। एवं प्राप्ते ब्रूमः। आधानेऽपि पूर्ववदेव प्रापकाणि श्रवणानि। कथम्? असर्वशेषत्वात्। यदि हि [1]सर्वकर्मणां शेषभूतमाधानं भवेत्ततस्तैराक्षिप्येत वा न वा। तेषां तु रूपं वाशेषभूतत्वात् [मी० सू० ७।३।२९।]' इत्यनेनैव न्यायेनाहवनीयादिग्रहणमात्रपर्यवसानान्न कश्चिदप्याधानाङ्गत्वप्रतिपादने हेतुरस्ति। यत्तु सर्वार्थं वा [मी० सू० ३।६।१५।] इति वक्ष्यति। तत्सर्वकर्मार्थाग्न्यर्थत्वादिति व्याख्यास्यते। किमतो यद्येवमिति—अङ्गाङ्गमप्यन्यथानुपपत्त्या शक्यमा-

स्यादित्याधानं तु ब्राह्मणादीनां स यदि सम्बन्धात् कर्तव्यमित्येव नित्यप्राप्तमुपात्तम्। न च तत्तथेति न निमित्तार्थतेति। स क्रोधमित्येतावता ग्रन्थच्छेदः। स क्रोधमाक्षिप्तायामिति वा सम्बन्धः। स क्रोधताद्यपरस्यात्यन्तानुपपन्नाभिधायित्वेनेति। कर्मजे कर्मयूपवदिति। अनो ददाति वासो ददातीति श्रुतेः किमनो वाससो क्रि·ते तक्षणं वा च प्राप्यते न वेति सन्देहे पूर्वपक्षे यद्वारुणिसूत्रे च प्रागप्रयुक्तौ तक्षणे वानेव च सति प्रयुज्यमानावनोवासःशब्दौ कर्मनिमित्तौ भवतः। तौ स्वनिमित्ते कर्मणी प्रापयतः यूपवत्। यथा तक्षणादिसंस्कृतकाष्ठवाची यूपशब्दस्तानि प्रापयतीति। अत्र सिद्धान्तः—रूपं वाऽशेषभूतत्वात् [मी० सू० ७।३।२९] द्रव्यरूपं चोपादेयं कर्मणो तयोरशेषभूतत्वात्। नह्येतौ कर्मनिमित्तौ शब्दौ एकखण्डत्वेन विशिष्टवचनत्वानुपपत्तेः। न च केवलकर्मवचनत्वं असत्यपि कर्मणि द्रव्ये सति प्रयोगात्। यत्तु प्राक्कर्मणो न प्रयोग इति तदभिधेय जात्यनभिव्यक्तेः। अत्र च पूर्वपक्षन्यायोऽस्ति। विधेये अर्थात् कर्मानुप्रवेशान्न सिद्धान्त-

१. यदि हि कर्मणामिति काशीमुद्रितपाठः।

क्षेप्तुमिति मन्यते । सिद्धान्तवादी त्वन्यथानुपपद्यमानत्वादग्नयः कामश्रुतिभिः प्राप्नुवन्ति नाधर्मर्मित्याह—नन्वाधानमग्नीनामभ्युपाय इति । तत्र नाम रूपमात्रं गृह्यते यल्लौकिकोपायसाध्यं भवति वस्त्रशकटादि । न चाहवनीयादयो लौकिकोपायास्तस्मादवश्यमेषां वेदेनैवोपायोऽप्याक्षेप्तव्यः । स तु नाधानव्यतिरिक्तोऽस्तीति तदप्याक्षिप्तमिति । उच्यते । न, अनैकान्तिकत्वात् । अग्नीनां हि याच्ञाक्रयापहारादयोऽभ्युपायाः सन्ति । सर्वैश्च तैराहवनीयादिमात्रप्रार्थिन्यः कामश्रुतयो निराकाङ्क्षाः क्रियन्ते । तस्मान्नैकान्तेनाधानं प्राप्तमित्यस्ति नियमविधेरवकाशः । तत्रैतत्स्यात् । नैवोपायान्तरोपात्तानामाहवनीयादित्वं संभवति संस्कारनिमित्तत्वादिति । तत्रोच्यते ।

सत्यं प्रथममाधानादुत्पद्यन्तेऽग्नयस्त्रयः ।
पश्चात्तु व्रीहिवत्तेषां नोपायान्तरवारणम् ॥

यथैव हि व्रीह्यादीनां न तावत्कृषिमन्तरेणोत्पत्तिः । अथ च न सर्वपुरुषैस्तथैवाप्यन्ते । क्रयादिभिरपि लभ्यमानत्वात् । एवं तावत्प्रथममेक आधानेनोत्पादयिष्यन्ति । अपरे तु तस्मादुपायान्तरेण प्राप्स्यन्ति । ततश्च यथा घटादीन् कुम्भकार उत्पाद्योत्पाद्य विक्रीणाति ददाति च तथैवैकः कश्चित्पुनः पुनरग्नीनाधायापरेभ्यो दद्यात् । अतः प्रतिपुरुषमाधानं पक्षे प्राप्तं पक्षे नेत्यस्ति विधानस्य विषयः । पक्षेऽपि वा नैव प्राप्तिरस्तीति वक्ष्यामः । प्रत्यक्षविधिपक्षे पुनरुपायान्तराणि निवर्तन्ते । तदा ह्यादधीतेत्यात्मनेपदेनाधातृगाम्येवाधानफलमिति गम्यते । तस्य च फलमाहवनीयादि तदकर्तुर्न भवतीति तं प्रत्यनाहवनीयत्वमेव स्यात् । अर्थाक्षेपपक्षे त्वानुमानिक्याः श्रुतेरात्मनेपदपरस्मैपदविवेकाभावादकर्तृविषयेऽप्यविरोधादुपायान्तराणि न निवर्तेरन् । अतोऽवश्यमेव विधेयमेतदिति । अपि च सतीष्वेवाधानश्रुतिष्विति

न्यायः तदनुपादाय द्रव्यरूपस्य लोकसिद्धस्य प्राप्तिरित्यनेनाभिप्रायेणोपन्यास इति । ननु प्रत्यक्षविहितमप्याधानं तत्फलस्यान्यथापि सिद्धेर्नावश्यं क्रियेतात आह—तदा हीति । नन्वर्थाक्षेप एवमादधीताग्निमन्येन नाहितमुपाददीतादिति । तत्रादधीतेत्यनेन कर्तृगामित्वनियमान्नोपायान्तरेणान्यस्य आहवनीयोपादानसम्भवस्तत्राह—अर्थाक्षेप पक्षेत्विति । पूर्वमेव हीति ।

पाक्षिकीमपि प्राप्तिं निराकरोति । पूर्वमेव हि व्याख्यातं नियमादीनामप्राप्तविधित्वं श्रुतसंभावनायामश्रुतकल्पनानवसरात् । सन्ति चाधानस्य प्रत्यक्षा श्रुतय इति नान्याः कल्पयितुं लभ्यन्ते । यदि ह्येता न स्युस्तत्राधानादृतेऽग्निहोत्रादीनामशक्यानुष्ठानत्वाद्विधयोऽनर्थका भवन्तीति स्वसिद्ध्यर्थमाधानश्रुतिं परिगृह्णीयुः । सतीषु त्वश्रुतकल्पनाभयाद् येषामेताभिः प्रापितं तेषामेव कामश्रुतयः प्रयोजिका इति न कल्पयन्ति । सर्वपूर्वोक्तदोषपरिहारेणेदानीं प्रत्यवतिष्ठते । प्रत्यक्षमन्यद्विधायकमस्त्याधानस्य वचनम् । यस्मिन्सति निमित्तार्थानीतराणीति 'य एवं विद्वानग्निमाधत्ते इति । तत्र प्रतिविधत्ते संभारविधानार्था पुनः श्रुतिरेषेति । परः पुनः प्रकरणेन संभारसंबन्धं मन्वानः पृथग्वाक्यत्वमापाद्यैतदेवोत्पत्तिवाक्यमित्याह । न [1]ह्युदकोपसर्जनादीनामाधानेनैकवाक्यता संभवति । भवेदत्रार्थभेदे नानावाक्यत्वं यद्याधानं विधीयेत । तद्ब्राह्मणादिसंयुक्तैर्विहितमिति गुणार्थमेवेह पुनः श्रूयते । कुतो नु खलु निर्णयः कतरदनयोरुत्पत्तिवाक्यमिति तदुच्यते ।

ब्राह्मणत्वादिसंयुक्ते प्रत्यक्षः श्रूयते विधिः ।
इतरत्रार्थवादेन कल्पनीयो बलादसौ ॥

यदि ह्येते द्वे अपि वाक्ये विधातृणी स्यातां ततः समानविषये सती स्पर्धेयातां कतरद्विधत्तामिति । अत्र पुनरेकं विधायकमेकं स्तावकम् । न च स्तावकेन ब्राह्मणादिसंयुक्तस्य विधायकत्वं निवार्यते तदानुगुण्यात् । यदि तु 'य एवं विद्वान्' इत्यपि विधिसरूपं स्यात्ततो विहितस्य पुनर्विधानानुपपत्तेरस्मत्पक्षं निरुन्ध्यात् । लिङ् तु विहितस्य संबन्धिसंभारविधिप्ररोचनार्थं तु स्तुतिसहितस्य पुनः श्रवणमित्यविधायकम् । लिङ् च तावद्धात्वर्थविधानं स्वपदेनोपात्तत्वाच्छ्रौतम् । प्राशस्त्यं पुनर्वाक्येन, ततश्चानुमानिको विधिरिति विप्रकृष्यते । नन्विदमपि वाक्यमिति ब्राह्मणादिपदार्थपरित्यागाभिप्रायम् ।

**यन्मन्त्राधिकरणेऽर्थलभ्यपदार्थनियमविधेः फलतो नियमविधिभाषामुपकल्प्य शीघ्रं प्रवृत्तेरप्राप्तविधित्वं व्याख्यातं तदत्रेदमुच्यते इति । न च अविशेषणे चातुर्वर्ण्यविषयाः कामश्रुतयः कथं त्रैवर्णिकविषयाधानश्रुति सद्भावेऽपि नान्यस्य कल्पयेयुरित्याशंक्योपपादयति --सतीष्विति ।**

---

१. नह्युपसर्जनादीनाम् इति काशीमुद्रितपाठः ।

सिद्धान्तवादी वदति, आधानं तावच्छ्रुत्या, शेषं वाक्येन नाम भवतु, स्वपदोपात्ताया: स्तुतेरभावात् । एवं 'द्विषन्तं भ्रातृव्यमर्वति सहते' इत्यादिपदसंबन्धेनैव स्तुतिरिति वाक्यम् । कर्तृकालविशिष्टप्रधानाधानविधानाच्च वाक्यभेदपरिहारात् सिद्धं प्रापकत्वम् ।।४।।

## दाक्षायणयज्ञाधिकरणम् ।

युक्तं दध्नेन्द्रियकामस्येति गुणात्फलम् । न हि तत्र दध्यादीनां होमसामानाधिकरण्यं येन संज्ञालक्षणो भेदः स्यात् । दाक्षायणयज्ञादीनां तु यागसामानाधिकरण्यात्पूर्वयागे [1]चाप्रयुक्तत्वादात्मरूपावच्छिन्नयागान्तरप्रतिपादनमविरुद्धम् न चकश्चिद्दध्यादिभिस्तुल्य एवंसंज्ञो गुणः प्रसिद्धः । तस्माद्भावार्थाधिकरणन्यायेन फले यागविधानाद्यागान्तरम् ।।५।।

विधिशक्तिः क्रियातो नोत्तारितेत्यभिप्रायः ।।६।।

फलस्यानुपादेयत्वान्न 'व्रीहिभिर्यजते' इत्यादिवत्कर्मोद्देशेन विधिः संभवतीत्यवश्यं कर्म तत्र विधातव्यम् । ततश्च सिद्धो भेदः ।।७।।

सत्यपि फलं प्रति विधाने संनिधौ त्वविभागात् [ मी० सू० २।३।२६ ] इत्यनेनाकर्मान्तरता । दध्यादिवच्च गुणफ[2]लसंबन्धप्रत्ययात्प्रकृतयागबुद्धेः । यत्तु गुणो न प्रसिद्ध इति । नैष दोषः । उक्थ्यादिवत्प्रकरणलभ्यत्वात् [3]एवंविधा च वाक्यान्तरेण गुणरूपविधानादस्ति प्रसिद्धिः । दध्यादिवदेवात्रापि वैयधि-

[1]गुणभेदोपबाधनी निमित्तार्थता क्वास्ति, क्व वा नास्तीति विचारे समाप्ते, सम्प्रतिदध्नेन्द्रियाधिकरणोक्तन्यायः प्रकारान्तरेणापवादमाशङ्क्यायनेषु स्थिरीक्रियते । तमपवादमाह—युक्तं दध्नेन्द्रियकामस्येति ।

गुणत्वेन सिद्धस्य [2]विधिशक्त्युपकारात् फलार्थता स्यात् । एषां तु गुणत्वमेव नास्तीति न तन्न्यायविषयत्वम् । संज्ञान्तरात्तु भेदकत्वमिति । विधि शक्तिः क्रियाति इति । तेन विधितोऽपि भेद इति यच्चात्र[3] पक्षे कर्मसम्बन्ध्युपात्तं तत्फलं तच्च कर्मणो विधानमेव द्रढयति न व्रीह्यादिवदनुवादमिति । सूत्रं व्याचक्षाण आह—फलस्यानुपादेयत्वादिति । उक्थ्यादिवदिति । वाक्यान्तरेणोक्थ्यशब्दवाच्यसंस्थाविशेषे दर्शिते तत्संन्निधावुक्थ्यं गृह्णीया-

१. अयुक्तत्वात् इति मुद्रित पुस्तक टिप्पणीधृतपाठः ।
२. गुणरूपसंबन्धेति मुद्रितपुस्तकयोष्टिप्पणी धृतपाठः ।
३. एवंविधायकवाक्येति काशीमुद्रितपुस्तकटिप्पणी धृतपाठः ।

१. गुणभेदापवादिनी आ० मा० ।
२. विधिशक्त्यपरिहारात् आ० मा० । ३. वाक्ये आ० मा० ।

करण्येनैव संबन्धः । किञ्च—

अवस्थान्तररूपत्वाद्दध्यादेरविलक्षणाः ।
प्रत्यासत्तेः प्रतीयन्ते सामानाधिकरण्यवत् ।।

तस्माद्दर्शपूर्णमासयोरेवावस्थान्तररूपाद्धिकारात्फलं न कर्मान्तरात् । एवं च प्रकरणविच्छेदो नात्यन्तं कृतो भविष्यति । यद्यपि फलवतः कथंभावेना ग्रहणादेतद्विषयेऽस्त्येव प्रकरणबाधस्तथाप्याश्रयत्वेन संबन्धादुत्तराणि च वाक्यानि प्रत्यनुषङ्गसिद्धेरनुग्रह इत्युच्यते ।।८।।

त्रिंशत्संपत्पूरणं पौर्णमास्यमावास्यासंकीर्तनं वा भेदं बोधयति । न हि दर्शपूर्णमासिकस्त्रिंशद्वर्षपक्षः कर्मान्तरेण पूरयितुं शक्यते । न च नियमस्यातिदेशः । येन कर्मान्तरस्यैवैतत्पञ्चदशवर्षपक्षविधानं स्यात् । न च दाक्षायणयाजित्वेन निमित्तेन दर्शपूर्णमासयोरेव पञ्चदशवर्षपक्ष उपजायते, संबन्धाभावात् । द्वे हि पौर्णमास्यौ द्वे अमावास्ये इति चास्यानुपपत्तिः ।।६।।

उत्पत्तिसंयोगे पूर्वासंबन्धे च संज्ञा भेत्त्री भवति । न चेयमुत्पत्तिसंयुक्ता 'अथैव ज्योतिः' इत्यादेरिव प्रक्रमाभावात् । संभवति च पूर्वकर्माश्रितगुणवाचित्वेनैवेति न भिनत्ति । दाक्षायणयज्ञे हि वाक्यान्तरवशादवयवप्रसिद्धेश्चाभ्यस्तत्वमभिधीयते । तेन च प्रकरणाद्दर्शपूर्णमासाश्रितेनैव फलं साध्यते । दक्ष इति चोत्साही शीघ्रकारी यजमानः, तदीया ऋत्विजो दाक्षास्तेषामयनं प्रयोगो यज्ञाश्रितत्वाद्दाक्षायण इत्युच्यते । साकंप्रस्थायीयेऽपि सांनाय्यमनवदाय कुम्भीभ्यामेव साकं प्रस्थीयत इत्येवमभिधीयते । तस्मान्न प्रकृतप्रत्यभिज्ञानबाधः ।१०।

**दिति तस्य फले विधिः । एवमत्रापि वाक्यान्तराद् दाक्षायणशब्दार्थस्येति । यतश्च वैयधिकरण्येऽप्येवं सामानाधिकरण्यप्रतीतेरुपपत्तिस्तस्य यथोक्तमेव वैयधिकरण्यमित्याह—किञ्चेति । यद्यप्यमी क्रियाश्रिता गुणाः प्रतिपाद्या नैतदुपलक्षिता क्रियेत्येतावता दध्यादेरविलक्षणास्तथाप्यवस्थात्मकत्वात् क्रियाप्रत्यासन्ना न [1]धर्मान्तराणीति समानाधिकरणा इव प्रतीयन्ते । एकार्थपरतायां हि सामानाधिकरण्यं मुख्यम्, अत्र तु तदभावात्तत् प्रतीतिरित्युच्यते । तामिमां प्रतीतिं पुरस्कृत्य गुणात्कर्मणः संज्ञोपबन्ध इति वक्ष्यते । यद्यपि गुणस्यैव [2]यज्ञाश्रितस्य संज्ञेति । न च नियमस्येति । वक्ष्यत्येतत् कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायानामनन्वयस्तद्बन्धनत्वादिति [मी० सू० ८।१।२०] अथैष ज्योतिरित्यादेरिति । प्रकारवचनादि शब्द इति ।**

१. त्रिंशत्पूरणमिति काशीमुद्रितपुस्तकपाठः ।

१. धर्म्यन्तराणि आ० मा० ।    २. संज्ञाश्रितस्य आ० मा० ।

यद्यपि कर्मोद्देशेन न फलं विधीयते तथापि कर्मफलसंबन्धाभावादकर्मान्तरता। यथैव हि कर्मणः फलमिति भावार्थाधिकरणे साधितं तथैव 'अतुल्यत्वात्तु वाक्ययोः' [ मी० सू० २।२।२६ । ] इत्यत्र गुणफलसंबन्धपर्यवसायित्वमप्युक्तमिति सन्देहे सति पदान्तरानुग्रहार्थं गुणादेव फलं न कर्मण इति सिद्धम् ॥११॥

## [ द्रव्यदेवतासंयोगे यागविधायकत्वाधिकरणम् ]

न कस्यचिदपि कर्मणः प्रकरणे श्रूयते 'श्वेतमालभेत' 'चरुं निर्वपेत्' इति। तत्र सन्देहः। किमनारभ्यवादानां प्रकृत्यर्थत्वात्प्रकृतयोरेवालम्भनिर्वापयोः श्वेतचरू गुणौ विधीयेते, किं वा कर्मान्तरे यावच्छ्रुते, उत यजिमती वेति। तत्रानारभ्याधीतत्वोपन्यासः संशयबीजापौनरुक्त्यप्रथमपक्षपरिग्रहतन्निराकरणार्थः। कथम्। यदि तावदालम्भनिर्वापौ प्रकृत्यर्थः श्रूयेयातां ततः प्रकृतप्रत्ययानुवृत्तिरेव प्रसज्येतेति कर्मान्तराशङ्का न स्यात्। अनारभ्यवादे तु सति श्वेतादिगुणस्योपादेयत्वात्कदाचिद्दूरस्थानुवादेन गुणो विधीयते कदाचिद्वा विपरिवृत्त्यभावात्कर्मान्तरमिति जायते सन्देहः। तथा 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' [मी० सू० २।२।१७] इत्यनेन गतप्रायमिवात्र यजिमत्कर्मविधानं

**फलदेवतापदान्वयस्यात्रोपपत्तित्वं भविष्यति विचार्यते तु किमालभतेरनुवादः श्वेतमिति विधिः उतालभतिर्विधिरालम्भस्य यागस्यैवेति। तेनैतत्पदद्वयमत्र विचारविषयत्वेनोदाहरति श्वेतमालभेतेति। प्रकृत्यर्थः श्रूयेतामिति क्रियाद्वयेऽप्यालम्भनिर्वापौ कर्मणी इति। गतप्रायमिति। यद्यप्यत्र यजिमद्वचनत्वं साध्यते। तत्र सिद्धेऽस्मिन् विध्यनुवादौ चिन्त्येत इत्यपौनरुक्त्यमधिकरणसमाप्तौ वक्ष्यते; तथाप्युभयत्र सिद्धान्ते यागविध्यविधानादापाततो गतप्रायप्रतीतिरुदेति। सापि यथा नोदेति, तथानेन क्रियते। तत्र प्रकृतयागानुवादाशङ्का पूर्वपक्षे सिद्धान्ते द्रव्यसंयोगादपूर्वयागविधिः। अत्र तु न तद्द्वयमनारभ्य यागं वादात् गुणसंयोगस्य चाप्रकृते गुणान्तरानवरुद्धे सम्भवादिति *भाष्ये* किं प्राकृत[1] आलम्भ आलम्भनो गुणविधि-**

---

१. किं प्राकृत आलम्भ्यो गुणविधिरिति आ० मा०।

लक्ष्यते। तत्तु प्रकृतयागाभावादनुवादशङ्कायामसत्यां श्वेतादेश्च गुणस्यौत्पत्तिकद्रव्यसंयुक्तेऽपि कर्मणि विधानोपपत्तेः कथं स्यादिति पुनरुपन्यस्यते। पूर्वपक्षश्चान्ययोरालम्भनिर्वापयोरप्रकरणादवश्यं प्रकृतावेव ग्रहीतव्यावित्येवं प्रवर्तते। तन्निराकरणमपि च प्रकरणाभावादसाधरणोपलक्षणाभावाच्च न प्राकृतयोर्लौकिकव्यावृत्तरूपयोः प्रतीतिरस्तीत्येवं भविष्यति। गुणविधिविषयत्वाच्चालम्भनिर्वापौ गुणविधिशब्देनोक्तौ। किं तावत्प्राप्तम्। यथैवायनेषु गुणसंबन्धपरे वाक्ये कर्मविधिशब्दाभावादकर्मान्तरत्वं तथेहापि भविष्यतीति च शब्देनान्वादिश्यते। क्व चासौ गुणविधिरिति विषयावधारणार्थमप्रकरणग्रहणम्। अथ वा यद्यप्येतावता पूर्ववैलक्षण्येनाप्रकरणे श्रूयते तथापि कर्मणो विधिशब्दानवरोधाद् गुणार्थैव पुनः श्रुतिरिति। दर्शपूर्णमासयोः शकटेषा सा श्वेतीकृत्यालब्धव्या, निर्वापश्च चरौ कर्तव्यश्चरुपरिमितो वा भूतिब्रह्मवर्चसकामयोश्च सर्वेभ्यो दर्शपूर्णमासादित्येवं प्राप्तयोरनुवादः तथा वायव्यमिति सर्ववनस्पतीनां वायुदेवतात्वात्कथंचिदीषाया एवानुवादः सौर्यमिति चाग्नेयस्यैव तेजोदेवत्यसामान्यादनुवादः। तस्माद् गुणो विधीयत इति ॥१२॥

यदि ह्यालम्भनिर्वापौ विधेयत्वं न मृष्यतः।
ततो गुणविधित्वं स्याद्विधेयौ त्वत्र तौ मतौ॥

वायव्यपदं पूर्ववदेवापेक्ष्य फलपदपरिग्रहेण तावत्प्रत्यवस्थीयते। यदि ह्यालम्भनिर्वापावनूद्य श्वेतचरू विधीयेते ततः फलपदमनर्थकमेव स्यात्। सर्वकामप्राप्तानुवादेऽपि पाक्षिकत्वान्नित्यवत् ग्रहणं विरुध्येत। विशेषणत्वे वाक्यभेदः स्यात्। अथ गुणफलसंबन्धो विधीयते तथाप्यालम्भादेः प्रकृत-

रित्याभिधानं व्याचष्टे — गुणविधिविषयत्वाच्चेति। यथाक्रोशविषया मञ्चाः क्रोशन्तीत्युच्यन्ते, ततश्च यथा मञ्चशब्देन पुरुषलक्षणयैवमुच्यते तथालम्भेन तदाश्रयविधिलक्षणा। तेनायमर्थो *भव्यस्य* आलभेतेति योऽयमालम्भाश्रयो विधिरसौ प्राकृत आलम्भ गुणविधिः। किमिति। यथैवायनेष्विति। अनेनावान्तराधिकरणसंगतिरपि दर्शिता। सिद्धान्ते च गुणाद् भेदाद् गुणाधिकारेण संगतिरिति। चरौ कर्तव्य इति। चरुशब्दं स्थाली वचनं मन्यते। तस्य निर्वापकर्मणा सामानाधिकरण्यासम्भवादधिकरणे द्वितीया लक्षणया। अथवा परिमाणलक्षणया सामाधिकरण्यमेवेत्याह—चरुपरिमि-

स्याश्रयस्याभावाद्वाक्येनैव तत्संबन्धकरणे वाक्यं भिद्येत । गुणविशिष्टालम्भविधाने तु न कश्चिद्दोषः । तेनोच्यते कर्मणः श्रुतिमूलत्वादिति । कर्मात्र विधेयत्वेन श्रुतिमूलं न गुणः । स ह्यचोदनालक्षण एव स्यात् । अथ वा यावदुक्तमेव स्यान्न यजिमत् । कुतः ? कर्मणः श्रुतिमूलत्वात् । न ह्यचोदितो यज्यर्थोऽव्यवसातुं शक्यते । न च तेन विनेह किञ्चिन्न सिध्यति । आलम्भनिर्वापयोरेव फलवत्त्वेन प्राधान्योपपत्तेः । न हि यदेकत्र गुणभूतं दृष्टं तेनान्यत्र प्राधान्यं वाचनिकमपि न प्रतिपत्तव्यमिति किञ्चित्प्रमाणम् । यथावचनं हि गुणप्रधानभावौ न स्वाभाविकौ । वायव्यादिशब्दश्चात्र सर्वत्र द्रव्याणां यथाकथंचिद्देवतासंबन्धोपपत्तेरनुवादः । अथ वा यत्केनचिद्वाय्वादिभ्यः संकल्पितं तदालम्भादिभिर्योज्यमानमभ्युदयकारि भवति । विशिष्टविधानाच्च न तत्परिग्रहेऽप्यतिभारः । अथ वा वायुसूर्याववोद्दिश्य स्पृष्टं वेत्येतावतैवेप्सितावाप्तिर्भविष्यति । न चावश्यं याग एव देवतोद्देष्टव्या । यत्र यत्र हि चोद्यते तत्र तत्रोद्दिश्यमाना न विरुध्यते । तस्माद् यत्किञ्चिच्छ्वेतं वायूद्देशेन स्प्रष्टव्यमिति यावदुक्तचोदनानुसारात् । गुणविधिपक्षे फलपदसंबन्धे वाक्यभेदमभिधायेदानीं तत्परित्यागमभ्युपेत्यापि ब्रवीतीति । अथ वा योऽसौ विधायकः शब्द इत्यादि तस्याभिप्रायो यदिदमनारभ्यवादानां प्रकृत्यर्थत्वमभिधास्यते नैतद्वाचनिकं, कथं तर्हि, द्वारान्यथानुपपत्तिकारितम् । न चालम्भनिर्वापावन्यत्रानुपपन्नौ । लोकेऽपि विद्यमानत्वादिति । तत्र यदि तावल्लौकिकव्यावृत्त्यर्थं विहितत्वेन विशेष्येते[1] ततोऽन्यविशेषणाभावाल्लिङैव विशेष्टव्यौ य आलम्भः कर्तव्यतया चोदित इति । तावता चोपक्षीणशक्तौ विधायके गुणविधानं नोपपद्यते । न ह्यसौ विधातुं लक्षयितुं च सकृदुच्चरितः समर्थः । केवलधात्वर्थानुवादे च लोकेऽपि गुणविधित्वप्रसङ्गः । तत्र च निष्फलत्वादानर्थक्यं, न चैतावन्मात्रेणैव विनैव[2] प्रकरणादिभिर्वैदिकालम्भनिर्वापग्रहणमुपपद्यते । तस्मात्प्राकृतप्रमाणाभावादपूर्वयोर्विधानमिति ॥१३॥

**यथाकथञ्चिदिति । वायुना देवतया सूर्येण च रश्मिद्वारेण सर्वेषां संयोगः सम्बन्ध इति । नन्वेवमालम्भस्य वायुसम्बन्धेऽपरस्मिन् विधीयमाने विधेरतिभारः स्यादत आह— विशिष्टविधानाच्चेति ।**

---

१. विशिष्यते इति काशीमुद्रितपुस्तकपाठः ।

२. विनैवेति काशीमुद्रित पुस्तके नास्ति ।

फा०—३७

यथा फलपदं प्रेक्ष्य गुणपक्षो निराकृतः ।
देवतापदमालोक्य तथैवालम्भमात्रता ।।

विधिस्तावदुत्तरोत्तरपदानुरोधेन द्रव्यदेवतासंबन्धसंक्रान्तः । स चान्यथानुपपत्तेराक्षिप्तयजिक्रियः सन्विधीयते । न ह्यनेनान्या क्रिया संपादयितुं समर्था यदि देवतोद्देशेनापरित्यजन्नेव द्रव्यमालभेत न तद्वायव्यं कृतं स्यात् । न च प्रसिद्धवायुदेवत्यमेव स्प्रष्टव्यमित्यवगम्येत । अनुष्ठानसंपाद्यत्वाद्देवतात्वस्य । तेनावश्यं वायुमुद्दिश्य श्वेतगुणकं द्रव्यं दातव्यमतश्च यजिविधानमेतदिति निश्चीयते । तथा च लक्षणं करिष्यति 'यजति चोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' [ मी० सू० ४।२।२७ ] इति । ततश्चालम्भनिर्वापौ चोदकप्राप्तावेवानुवदिष्येते । तत्रालम्भनविशिष्टत्वा[1]दिति गौरवोपन्यासः फल्गुरेव कथञ्चिदभ्युपेत्यवादेनोपन्यस्त इति नातोवादर्तव्यः ।।१४।।

सोमारौद्रमित्युक्ते विनापि यजतिशब्देन परिश्रयणविधिपरे वाक्ये यजतिनानूद्यमाने यजतिमत्कर्मविधायित्वमेवमादीनामित्यवगम्यते । अग्नी-

अनुष्ठानसम्पाद्यत्वादिति । यत्र देवतात्वेन प्रयोजनं तत्र तदनुष्ठेयम् । न हि श्वेतत्ववद्देवतात्वं क्वचित्समवेतमस्ति यत् क्रियायामुपादीयेत । वायूद्देशसंकल्प एव तु वायुर्देवतात्वेन सम्बद्ध्यते, न क्रियान्तरे । कथं तर्ह्याग्नेयं चतुर्धा करोतीति युक्तमत्र चतुर्धा करणं हि प्रकृतयागोपयोगिसंस्कारः । आग्नेयमिति [1]संस्कार्यनिर्देशात् । तत्र [2]च नाग्नेयत्वं संस्कार्यमुपलक्षणन्तु प्रकृते कर्मणि, तेन संस्कारग्रहणाक्षमं देवतात्वमिहोपात्तं द्रव्यरूपोपलक्षणं[3] द्रव्यरूपेण सम्बध्यते, न देवतात्वेन । आलम्भस्तु प्रधानकर्म सद्देवतात्वमेवांगतया गृह्णीयान्न तु लक्ष्यत इति । यजतिः कृतार्थो भवति । क्रिया वा देवता सम्बन्धात् तदुद्दिश्य त्यागात्मिका तदेतद्यागलक्षणं करिष्यत इति । यत्तु *भाष्यकारेण* पदश्रुत्यालम्भविशिष्टः प्रयत्नो वाक्येन द्रव्यदेवता सम्बन्धाश्रयः प्रतीयते । तेन विशिष्टो याग आलम्भश्च विनैव वाक्यभेदेन विधातुं शक्यत इत्युक्तं तत्राह — तत्रालम्भनविशिष्टत्वादिति ।

१. विशिष्टत्वाति गौरवो० इति काशी मुद्रितपुस्तकपाठः ।

१. संस्कारनिर्देशः आ० मा० । २. °चाग्नेयत्वम् आ० मा० ।

३. °लक्षणमतश्चतुर्धा करणमित्यधिकम् आ० मा० ।

षोमीयेऽपि चानेनैव यजिमत्त्वसिद्धिः । पूर्वं चैतावदेव विचारितं किं प्रकृतानुवादित्वमुत विधायकत्वमिति । सिद्धे तु विधायकत्वे किमात्मकं तत्कर्मेत्येतदधिकरणाधीनमेवैतदित्यपौनरुक्त्यम् ॥१५॥

## [ द्रव्यदेवतासंयोगे यागविधायकत्वाधिकरणम् ]

सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम् ॥

इति ये वदन्ति तान्प्रत्युच्यते । किञ्चित्साधनमप्रदर्शितविषयं स्वार्थं साधयति । सूत्रकारेण चेह हेतुमात्रमुपात्तम् । न चार्थप्रकरणादिभिरप्युदाहरणप्रतिज्ञासंशयहेतूनामन्यतममुपलभ्यते । तस्मादगमके सूत्रे सति अवश्यं दोषप्रतिसमाधानार्थं वृत्तिकारादिभिर्यतितव्यम् । सत्येव संभवेऽध्याहारादिवर्जनमुक्तम् । सर्वथा शिष्यप्रज्ञासंस्कारे सूत्रकारादीनां प्रवर्तमानानां येनैव तदनुगुणं यत्कृतं तदेव ग्रहीतव्यं नासद्ग्रहः कर्तव्यः । इदं सूत्रकारेण नोपात्तमिदं वृत्तिकारेणैतत्प्रदर्शनार्थमेतद्वर्णयन्ति । तदिह भगवानुपवर्षः किलाग्निहोत्रे धेनुदोहाधिकारे श्रुतमिदं वाक्यमुदाहृतवान् 'वत्समालभेत' इति । तत्र च पूर्ववदेव त्रेधा संशयमुपन्यस्तवान् । किं प्राकृत एवालम्भे वत्सो विधीयते तथालम्भमा[1]त्रमथवा यजतिमद्वैतत्कर्मेति । तत्र विशेषणाभावात्प्राकृतप्रत्ययो नास्तीति पूर्वाधिकरणसिद्धमेवेति नोपन्यस्तम् । तेनैवानुक्रमेण यजिमदभिधानबुद्धौ प्रसक्तायामपवादोऽयं क्रियते । तत्र भोक्तृसंयोगप्रत्युदाहरणत्वादगतप्रायोऽपि पूर्वपक्षः श्रोतृबुद्धिवैचित्र्यात् क्रियते । यो नाम तार्किकवासनया सामान्यतो दृष्टेन वेदार्थमुन्निनीषेत्तस्य तन्निवृत्तिरप्रदर्शिताशङ्का न शक्या कर्तुमिति

*भाष्यकारेण* किं पुनरिहोदाहरणमित्यादिना सूत्रस्य न्यूनत्वप्रदर्शनं कृतम् । तस्य प्रयोजनमाह—सूत्रेष्वेव हीति । यतः [1]सौत्र एवार्थो *भाष्यकारा*दिभिर्विवरणीयोऽतो यदधिकमनुपादेयं तदिति ये वदन्ति तान् प्रत्युच्यते । यावदुक्तेन व्यवहारासम्भवादुपात्तपूरणायावश्यं वक्तव्यमधिकमनुज्ञातं तत् सूत्र*कारेणे*ति । एतत्प्रदर्शनार्थमिति । यदेतदर्थं व्याख्याय तस्मादागमक मित्यादिना तस्य प्रयोजनमुपवर्णितमस्माभिरेत[2]त्प्रयोजनार्थमेतद्*भाष्यं*

1. °त्रमुभयं यजति इति काशीमुद्रितपाठः ।

1. श्रौत एवार्थो आ० मा० । 2. °एतत्प्रदर्शनार्थम् आ० मा० ।

प्रदर्श्येते । तत्र केषांचित्पूर्वाधिकरण एवालभतिर्यजतिपर्यायत्वेन प्रसिद्धोऽन्येषां यज्यनुमापकत्वेन, तदुभयमत्रापि तथैव मन्यन्ते । तत्रापूर्वयागविधानं प्राप्ते वा वत्सविधानमिति पूर्वपक्षे द्वैतम् । सिद्धान्तस्तु द्रव्यदेवतासंबन्धान्यथानुपपत्त्या पूर्वमस्माभिर्यजिः कल्पितो नादृष्टपूर्वशक्त्यालभत्यभिधानेन, व्यभिचार्यानुमानाभासेन वा । न चेहासावस्तीति यावदुक्तता । तथा च दोहनादिसंस्कारकर्मप्रायदर्शनमुपपद्यते । दृष्टार्थत्वं च गोप्रस्नवनहेतुत्वात् ॥१६॥

'वत्सनिकान्ता हि' इति प्रस्नावनार्थं च वत्सोपचारस्पर्शनविधौ हेतुवन्निगदोऽर्थवाद उपपद्यते । मारणार्थत्वे त्वालभ्यमाने वत्सप्रियत्वं पशूनामुच्यमानमसंबद्धमेव स्यात् । यस्मादसौ मातुः प्रियो वत्सस्तस्मात्संज्ञपनार्थमालब्धव्य इत्यसंबद्धमेव स्यात् । इतरत्र पुनर्वत्सप्रिया माता पुत्रे चाटुकरणात्तेन वा कृतचाटुना संयुज्यमाना स्नेहात्प्रस्नविष्यतीत्युपपद्यते । तस्मादपि प्रयोजनवत्संस्कारभूतालम्भमात्रविधानमेतदिति सिद्धम् ॥१७॥

## [ चरोरुपधानार्थताधिकरणम् । ]

पूर्वमालम्भस्य प्रत्युदाहरणमिदं तु चरुद्वारेण निर्वापस्य । देवताशङ्का चात्राभ्यन्तरेऽधिकेत्यारम्भः । तत्रौत्पत्तिकमेव चरुपुरोडाशादीनां यागाङ्गत्वम् । सर्वथा चैतस्यात्मीयत्वपरित्यागः कर्तव्यः । 'चरुमुपदधाति' इति च द्वितीयानिर्देशादुपधानं प्रतिपत्तिः । न चान्यत्रानुपयुक्तस्य प्रतिपत्तिर्युक्तेत्या-

व्याख्यातारो वर्णयन्ति इत्युपक्रान्तव्याख्योपसंहार इति । यजतिपर्य्यायत्वेनेति । तार्किकवासनयेत्यतः । पक्षान्तरमिदम् । न तस्यैव विभागः, अथ वा देवतासम्बन्धात् लिङ्गात् तार्किकवासनयैव यजिपर्यायत्वानुमानमिति । असम्बद्धसमवेतस्य अहेतुत्वमिव पश्यन् पक्षान्तरमाह—तेन वा कृत चाटुनेति ।

चरुद्वारेणेति । निर्वापस्य चरुपुरोडाशार्थस्य तयोर्यागार्थतायां यागार्थता स्यात् । तेन यदा चरावनेन यागार्थता दर्शिता । दर्शितैव तदा निर्वापस्य भवतीति । न चालम्भन्यायेन सिद्धेरनारम्भ इत्याह—देवताशङ्का चात्रेति । चरुत्वाद्यागार्थत्वं प्रतीयत इत्युक्तं यागैकदेशस्तु आत्मीयत्वपरित्यागो विधानादेव सिद्धो नहि स्वयं यथेष्टविनियोगार्थे चरौ विधिकृत्यमस्ति । अतदर्थे चाप्रभोः पुरुषस्य न [1]स्वातन्त्र्यमित्याह—सर्वथा चैतस्येति । अङ्गप्राप्ति विधा-

1. स्वत्वमित्याह आ० मा० ।

काङ्क्षिते योग्यत्वाद्यागोपयोगित्वमेव विज्ञायते। वाक्यशेषे च बृहस्पतिः श्रूयमाणो यदि विध्युद्देशेन न[1] संबध्यते, आनर्थक्यमेव स्यात्। तस्मादाग्नेयप्रकृतिकं बार्हस्पत्यचरुयागं निर्वर्त्य शेषकार्यान्तराण्यकृत्वोपधातव्यश्चरुरित्येवं प्राप्तम्। एवं प्राप्ते ब्रूमः।

चर्वादीनां स्वभावेन नैदमर्थ्यमवस्थितम्।
यथाप्रमाणमेवैषां विनियोगोऽवगम्यते॥

'नैवारश्चरुर्भवति' इति ह्युत्पन्नमात्रस्यैव प्रयोजनापेक्षायां सत्यां यागाङ्गभूताग्निधारणार्थं स्थलनिर्वृत्तिशेषत्वेन प्रत्यक्षविधानं दृश्यते 'यदेनं चरुमुपदधाति' इति। तथा निराकाङ्क्षस्य च चरोः श्रुतेनापि कार्यान्तरेण संबन्धो न स्यात् किमुताश्रुतेनैव यागेन। न चेयं प्रतिपत्तिरिति प्रथमं प्रयोजनवत्त्वानवगमात्। अर्थकर्मण्यपि चोपधानं प्रति प्राधान्यमस्ति, तेनासंस्कृतस्थलं न निर्वर्तयतीति द्वितीयानिर्देशाविरोधः।

त्रेधा च देवतायोगश्चरोरस्यानुमानिकः।
नीवारस्यार्थवादस्थतद्धितादिविवर्जनात्॥

नीवारसंबद्धः सन् बृहस्पतिश्चरावनुमातव्यः। तथा वाक्यशेषस्थो विध्युद्देशमनाकाङ्क्षितदेवतासंबन्धं नेतव्यः। तद्धितचतुर्थीमन्त्रवर्णादिभिश्च विना कथमपि देवतात्वं कल्पनीयम्। यागाद्यनुमानवलेशश्च स्थित एव। तस्मादुपधानार्थत्वमेव युक्तमिति। येषां च 'बार्हस्पत्यो भवतीति' चरुस[2]मानाधिकरणेन तद्धितेन वाक्यशेषे देवताश्रयणं तेषामपि प्रथममुप-

नस्य समाप्त्यर्थमाह— आग्नेयप्रकृतिकमिति। द्रव्यदेवतासंख्यासामान्येन तत्प्रकृतित्वमिति। न चेयमिति। इयं प्रतिपत्तिरिति—न चेति। अर्थकर्मण्यपीति। चरोरुपधानं प्रतिप्राधान्यमर्थकर्मण्यप्युपधानेऽस्ति। तथाहि—उपधानेन चरुरिष्टकास्थलं प्रापितस्तत्संस्करोति। तेन चरुद्वारेणोपधानस्य स्थलनिर्वृत्यर्थता। न तु असंस्कृतं सच्चरुणा स्थलमुपधानं प्रधानोस्ति लब्ध्वा-स्वयं निर्वर्तयति। तस्मादस्ति चरोरुपधानं प्रतिप्राधान्यम्। असंस्कृत इति पाठेऽयमर्थः, चरुस्थलनिर्वृत्यर्थः स इत्युक्तम्। असावुपधानेनासंस्कृतो न तन्निर्वर्तयति, अपि तु संस्कृत इति।

१. नेति काशीमुद्रितपुस्तके नास्ति।
२. °सामानाधिकरण्येन इति काशीमुद्रितपाठः।

धानार्थत्वे विध्युद्देशात् सिद्धेऽनाकाङ्क्षितत्वाद्देवता विधातुमशक्येति वर्तमाना-पदेशानुरोधेन यादृशं वयमस्य बार्हस्पत्यत्वं वर्तमानं पश्यामस्तादृशमेवं-तत्प्रशंसार्थं कीर्तितमित्यवगमाद्य एव शाखान्तरीयस्य वचनस्य 'बृहस्पतेर्वा एतदन्नम्' इत्येतस्यार्थः, स एव 'बार्हस्पत्यो भवति' इत्यस्यापि तैत्तिरीय वचनस्य निश्चीयते, तस्मादेषोऽपि न यजिमद्वचन इति यावदुक्तत्वसिद्धिः ॥१८॥

## [ पात्नीवताधिकरणम् । ]

एतेनैवाधिकारेणोत्सृजतिरपि यजिमदभिधानो न वेति विचार्यते । त्वाष्ट्रं पात्नीवतमालभते' इत्येवं यागं विधाय पुनराम्नायते 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । तत्र गुणविधिरुत कर्मान्तरमिति वचनव्यक्तिद्वय-प्रतिभानेन सन्देहे सति वायव्यश्वेतालम्भवदेव विधिशक्तेर्द्रव्यदेवतासंबन्ध-विषयत्वेन कर्मान्तरत्वम् । किञ्च—

न च त्वष्टुरभावेत प्रत्यभिज्ञायतेऽत्र सः ।
पर्यग्निकृतयोगाच्च वाक्यभेदः प्रसज्यते ॥

यदि ह्यत्रापि पूर्ववदेवोभे विशेषणे श्रूयेयातां ततस्तदेव कर्मेति विज्ञायेत । न त्वत्र महेन्द्रस्येवैन्द्रप्रगाथे कश्चिदपि प्रत्यभिज्ञानलेशोऽस्तीति देवतान्तरसंयोगादपि वाजिनयागवद्भिद्यते । पात्नीवतोद्देशेन चोत्सृज्यमानार्थं विधीयमाने पर्यग्निकरणावस्थाविशेषणाद्वाक्यं भिद्येत । व्यवहितकल्पनया चोत्सृजतिः संबध्येत । प्राप्त एव च तस्योत्पत्तिवाक्येनोत्सर्ग इति व्यर्था पुनः-श्रुतिर्भवेत् । न च 'पर्यग्निकरणविधानेनात्रार्थः तस्यातिदेशेनैव प्राप्तत्वात् । न च केवलपात्नीवतशाविधिर्वैकल्पिकः शक्य आश्रयितुम् । उत्पत्तिवाक्यशिष्ट-त्वविरोधात् । न च प्राकृतक्लृप्तोपकारकेवलपर्यग्निकरणपुनःश्रुत्या गृहमेधी-यवदपूर्वता शक्या दर्शयितुम् । सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात् ।

न च प्राकृतक्लृप्तोपकार इति । कर्मचोदना करणोपकाराकांक्षिणी सन्निहिता-नप्यक्लृप्तोपकारतया पदार्थानतिक्रम्य क्लृप्तोपकारानतिदेशेन प्राकृतान् स्वीकुर्यात् यदा तु प्रकृतिक्लृप्तोपकारस्य सन्निधिर्भवति । तदा यथाकांक्षि-तस्य शब्दोपनीतस्य लाभान्नातिदेशमङ्गीकरोति । सैवमपूर्वता आज्यभागौ यजतीति वचनात् गृहमेधीये स्थास्यति। अत्र तु हविषो विशेषणं पर्यग्निकरणं

न च पर्यग्निकरणशब्दस्तदन्ताया अङ्गरीतेर्वाचकः, येन तन्मात्रग्रहणाश्रयणादुत्तरकर्मविच्छेदो विज्ञायते। न चासौ कालस्य वक्ता, येन पर्यग्निकरणकाल एवोत्सृजतीति कल्प्येत। न च लक्षणाश्रयणहेतुरस्ति। श्रुत्याऽपि वाक्यसमवायोपपत्तेः। सर्वाङ्गेषु चोदकप्राप्तेषु वचनान्तरेणानिषिद्धेषु पर्यग्निकरणवेलायां समस्तेष्वनुष्ठीयमानेषु सत्सु नैव ज्ञायते किं क्रियतामिति। सर्वकरणे काललोपात्तत्कालकरणे चाङ्गान्तरलोपात्। एतेनावस्थाविधिः प्रत्युक्तः। चोदकेनैव तावत्, पर्यग्निकरणावस्थ उत्सृज्यत इति प्रापितम्। अथोत्तरावस्था परिसंख्योच्यते। तत्र त्रिदोषत्वमुक्तमेव। तस्मान्न पूर्वकर्मणि किञ्चिद्विधेयमस्य वाक्यस्येति कर्मान्तरमेव द्रव्यदेवतासंयुक्तं देवतागुणसामान्येन च पूर्वप्रकृतिकमग्नीषोमीयप्रकृतिकमेव वा विधीयत इति प्राप्तेऽभिधीयते।

प्रकृतप्रत्यभिज्ञानान्न यागोऽन्योऽवगम्यते।
पर्यग्निकरणात्तस्मिन्नङ्गरीतिर्विधीयते॥

पात्नीवतशब्दस्तावन्मनोतायामिवाग्निशब्दः सत्यप्युभयविशिष्टत्वे शक्नोति प्रकृतं यागं वक्तुं 'पर्यग्निकृतमुत्सृजति' इति प्रकरणात्तस्यैव गुणविधिर्विज्ञायते।

ननु च सर्वे गुणविधिप्रकारा निराकृताः। सत्यम्। शेषा निराकृताः। पर्यग्निकरणान्ताङ्गरीतिपक्षस्तु न निराक्रियते। यद्यप्येष शब्द इडान्तादिवत्तदन्तत्वं न ब्रवीति तथापि गमयितुं शक्नोति। न हि निर्वृत्तपर्यग्निकरणता पूर्वाङ्गेष्वकृतेषु संभवति। तस्मात्तदुपादानादेवानुक्तापि तदन्ततावगम्यते।

**प्रसिद्धसम्बन्धञ्च विशेषणं भवति। अतो नानेन वचनेन तस्योपनयनमतिदेशोपनीतस्य तूपादानमिति। कालविधौ चायं दोष इत्याह—सर्वाङ्गेषु चेति। सर्वाङ्गेषु विहिता प्रतिषिद्धत्वादारब्धानुष्ठानेषु काले च स्वीकृते सव्यप्रतिपत्तिः स्यादिति। देवतागुणेति। त्वष्टृदेवतायाः पत्नीवत्तागुणः सोऽत्रापीति। मनोतायामिवेति। एकदेशेन [1]समुदायशक्त्या लक्षणया प्रतिपादनशक्तिरिति। यद्यपि एष शब्द इति। पर्यग्निकृतमिति। यथासिद्धपर्यग्निकरणोपादानमिदम्। तच्च [2]पूर्वपूर्वपदार्थेषु निर्वृत्तेषु क्रियत इति। निर्वृत्तपूर्वपदार्थकृतपर्यग्निकरणत्वयार्थात्प्रतीयते। विनापि इडान्तातिथ्या**

१. समुदायलक्षणयेति आ० मा०।
२. °र्थेषु क्रियत इति इत्यधिकम् आ० मा०।

कथंभावापेक्षी च तत्पाष्ट्रप्रयोगवचनः प्रकृतौ दृष्टसामर्थ्यपर्यग्निकरणान्ताङ्गकलापस्यातिक्रमकारणाभावान्न प्रकृतिस्थानि सर्वाण्यङ्गान्यपेक्षते । ततश्चैतावन्त्येवास्याङ्गानीत्यवधारणात्स्वरूपप्राप्तिमात्रस्य च चोदकेनापि सिद्धेरुत्तराङ्गावच्छेदार्थमेवेदं वाक्यमिति फलेन व्यपदिश्यते । तेनोच्यते पूर्वत्वादवच्छेद इति । एवं च सति यागान्तरापूर्वान्तरानुमानादिक्लेशो न भवतीति । न च परपदसंबन्धविधानविप्रकर्षः । पर्यग्निकरणान्तविशिष्टे तूत्सर्गे विधीयमाने यद्यप्युत्सर्गस्वरूपं प्राप्तमेव तथापि तदुद्देशेनाङ्गकलापविधानादनत्यन्तविप्रकर्षात्स एव विधेयत्वेनोक्तः । त्वत्पक्षे तु दध्नेन्द्रियकामस्य' इत्यादिष्विव धातोरत्यन्तपारार्थ्यं स्यात् । तस्मादप्यकर्मान्तरत्वम् । प्रकरणादेव[1] च पर्यग्निकरणान्ताङ्गग्रहणसिद्धेः पात्नीवतग्रहणं नित्यानुवादतन्त्रमिति विशिष्टानुवादैकदेशे व्यपदेशोपालम्भपरिहारः । तस्माद् गुणविधिरिति सिद्धम् ।१६।

## [ अंश्वदाभ्यग्रहयोर्ज्योतिष्टोमाङ्गताधिकरणम् ]

अनारभ्याधीतयोरंश्वदाभ्यग्रहयोरालम्भादिवत् त्रेधा सन्देहः । तद्वदेव च पक्षद्वयं निराकृत्य यजिमती चोदनेति प्रतिज्ञायते[2] । किञ्च—

प्रकृतादपि भेत्तृत्वं नामधेये व्यवस्थितम् ।
किमुताप्रकृतेभ्योऽत्र यत्र नैवास्त्यभेदधीः ॥

न ह्येतन्नामधेयं प्रकृतौ कस्यचित्प्रसिद्धं यस्य पुनःश्रुतिसामर्थ्याद् द्विरभ्यासः क्रियते । तस्माद् गृह्णातिचोदनासामान्येन ज्योतिष्टोमप्रकृतिरेकाहोऽयं चोद्यत इति मन्यामहे । न च वत्सालम्भतुल्यत्वम् । एकत्र यजतेः प्रत्यक्षत्वादन्यत्र चाव्यभिचारिण्या संज्ञयान्यत्वे कल्पिते गृह्णातिना समस्तज्योतिष्टोमधर्मप्राप्तेर्द्रव्यदेवतासंबन्धसिद्धिः । अतो यागान्तरत्वमिति प्राप्तेऽभिधीयते ।

संतिष्ठत इत्यादि निर्देशेन । विशेषणप्रधानश्च पर्यग्निकरणशब्दस्तेन तदन्ताङ्गरीतिमुपनयतीति ।

प्रकृतादपि भेतृत्वमिति । संस्कारत्वाद् ग्रहणस्य नामसम्बन्धायोग्यत्वादेवं सम्बन्धोऽदाभ्यमिति यजति इत्यत्रांशुसंज्ञं कर्म करोतीति । तत्र करोत्यर्थवचनाय प्रत्ययोच्चारणमतिदेशप्राप्तज्योतिष्टोमिकग्रहणानुवादभूतगृह्णातिप्रयोगेण सम्पादितमिति । गृह्णातिना समस्तेति । चोदना लिङ्ग-

१. प्रकरणवपि च इति काशीमुद्रितपाठः ।
२. विज्ञायते इति काशीमुद्रितपाठः ।

ग्रहणं नामधेयं च केवलं यत्र गम्यते ।
वृत्सालम्भादपि न्यूनं तदद्रव्यतयेष्यते ।।

देवता तावद् दूरभ्रष्टैव । यद् गृह्यमाणं द्रव्यं तदपि न केनचिदुपात्तम् । न हि जात्या गुणेन च विना द्रव्यमुपलक्षयितुं शक्यम् । न च यागेऽनवधारिते ज्योतिष्टोमवद्भावोऽस्ति येन सोमग्रहणमेतदिति विज्ञायते । न च गृह्णाति-र्ज्योतिष्टोमं न व्यभिचरति । उपादानमात्रवचनत्वात् । न चैते यागनाम्नी, येन तं भिन्द्याताम् । ग्रहणसामाधिकरण्याद्धि तन्नामत्वमनयोः । इष्यत एवास्माभिरत्र ग्रहणभेदः । न च तावता यागान्तरत्वं भवति । द्रव्यदेवता-संयोगेऽपि चैवंजातीयकानां यजिमत्त्वं निराकृतम्, 'अचोदकाश्च संस्काराः' [ मी० सू० २।२।१८ । ] इति । अत्र पुनस्तदपि न विद्यते । योऽप्यदाभ्यवाक्ये यजतिः, सोऽपि रेवतीवारवन्तीयपूर्वपक्षन्यायेन संक्रान्तविधिशक्तिना प्रत्ययेन विधीयते । तस्माद् यागमनूद्य ग्रहणविधानमेवैतत् । अंशोः कथं यागसंबन्ध इति चेत्, गृह्णातिसामान्योपस्थितेन ज्योतिष्टोमेनेति केचित् । अस्त्येव त्वनयो-स्तैत्तिरीयाणां ज्योतिष्टोमप्रकरणे पुनः श्रवणं तदन्यत्र प्रयोजनत्वात्कर्मविनियोगं करिष्यति । यथा साप्तदश्यस्यानारभ्यवादेन सामिधेनीसंबन्धितयोत्पत्तेः । प्राकरणिकैश्च वचनैर्विनियोगादर्थवत्त्वमेवमिहापि द्रष्टव्यम् । तेन 'संस्कारश्चा-प्रकरणेऽकर्मशब्दत्वात् [ मी० सू० २।३।१९ । ] इत्ययमेव पक्षः ।२०।

## [ चयनस्याग्निसंस्कारत्वाधिकरणम् ]

'अग्निं चिनुते' इत्यत्रापि त्रेधैव सन्देहः । किमपूर्वयागविधिरुत चयन-मात्रविधानमुत प्रकृतिविकृतिषु गुणविधानमिति । तत्रांशवदाभ्यवत्प्रकरणे पुनरसंकीर्तनात्संस्कारमात्रस्य च केवलस्य प्रयोजनासंभवात् संज्ञयैव क्रत्वन्तरं कल्प्यते । तथा च फलश्रवणम् ऋध्नोत्येव' इति । न च गुणात् फलमिति शक्यं वक्तुं, प्रकृताश्रयानुपपत्तेः । तथा चैकान्तिकसोमयागाचिह्नान्युपसदा-भूतेन विशेषातिदेशकारणेनेति । प्राकरणिकैश्चेति पशवादिप्रकरणे पुनः साप्तदश्यं पठितमिति । संज्ञयै वेति । नाग्निशब्देनाव्यभिचरितक्रतुसम्बन्धा-हवनीयाद्युपादानं यावदुक्तं चाग्निरूपं लोकसाधारणमसंस्कार्यमतोऽग्निं करोतीति सम्बन्धः । धातुश्चेष्टकाभिरग्निं चिनुत इत्यादिवाक्यविहिता-नुवादो वक्तव्यः । यागवचनत्वं चास्य वक्ष्यमाणात् सामानाधिकरण्यात् सिद्ध्यति । यल्लिङ्गेन समर्थ्यत इति । द्वौ चात्र पक्षौ, एको वाक्य-

दीन्युभयत्र संबद्धानि श्रूयन्ते। तथेमानि वचनानि 'अथातोऽग्निमग्निष्टोमेनैवानुयजतीति'। तत्र 'अग्निं यजतीति' 'समिधो यजति' इतिवत् 'तत्प्रख्यं चान्यशास्त्रम्' [ मी० सू० १।४।४। ] इत्येवं सिद्धनामधेयविशिष्टयागविधानं विज्ञायते। तस्यैव चाग्निष्टोमादिसंस्थत्वं विशेषणम्। द्विरात्रादयश्च कालविशेषा विकल्प्यन्ते। अथ वा संस्थाविधिपरे वाक्ये यजत्यनुवाद एवमवकल्पते यद्युत्पत्तिवाक्ये चिनोतिर्यजतिमद्ववचनस्तस्मादुत्तरकालदृष्टेन यजतिसामानाधिकरण्येनादावेवाग्निशब्दः क्रतुनामधेयमिति निश्चीयते। अनुशब्दश्च य एतेनानिष्ट्वेत्यनेन प्राप्तं ज्योतिष्टोमात् पश्चाद्भावमनुवदति। यद्यग्निमग्निष्टोमादिसंस्थैर्यागैरनुयजतीत्युक्ते यद्यग्निर्याग एवमसावनुयष्टुं शक्यते। सर्वत्र हि तुल्यरूपाणां तुल्यधर्मणां विभागे पौर्वापर्यं भवति। तद्यथा देवदत्तमनुगच्छतीति। यदि देवदत्तोऽपि गच्छत्येवमनुगमनमवकल्पते। तथानुयजनमपि। तस्माच्छ्रुतानुमितेतिकर्तव्यतावत् क्रतुविधानमेतदिति। पश्चिमे तु व्याख्यानेऽग्निष्टोमादिभ्यः पश्चात्क्रियमाणोऽयं तदङ्गमेव भवतीति फलश्रुतिरर्थवादः स्यात्। [मी० सू० ४।३।१।] पूर्वत्र तु स्वतन्त्रत्वात् फलमात्रेयो निर्देशात् [ मी० सू० ४।३।१८। ] इति फलविधित्वात् पुरुषार्थमिति विशेषः।२१।

अत्यन्तरूढिशब्दत्वाद् वाक्यभेदादिभिर्विना।
ज्वलनं न परित्यज्य क्रतुरग्निः प्रतीयते ॥

प्रवृत्तिवेलायामनिरूपितार्थत्वाग्नानेन [1]कर्मविशेषोत्पत्तिरथैष ज्योतिरितिवत्। तदुत्पत्तिस्त्वथातोऽग्निमित्यनेन। द्वितीयस्त्वन्यतो निर्णीतार्थेन पूर्वेणैवोत्पत्तिरुत्तरैः संस्कारादिविधिरिति। तत्प्रख्यमिति। आहवनीये जुहोतीत्यादि शास्त्रमिति। भाष्यकारेणानुशब्देऽप्यग्नेर्यागत्वं बोधयतीत्युक्तं तस्यार्थंबोधकतां च यथावर्णिते वाक्यार्थे आह—अनुशब्दश्चेति। यथा वर्णितेन यजिसामानाधिकरण्येन यद्यग्निर्यागस्ततोऽयमेतेनेत्यनेन वचनेन सिद्धमालम्बनमनुशब्दो लभते, नान्यथेति। अथ वाच्याधिकरणस्यैव यजिनाग्निशब्दस्यानुशब्दो यागवचनतामेवं गमयतीत्याह—यद्येति।

अग्निष्टोमादिभ्यः पश्चादिति। अग्निष्टोमादीनामग्नेर्भविष्यतां प्रथमानुष्ठितः पृष्ठे[2]भवतीत्यनया विवक्षया पश्चाच्छब्दः। अथवा पश्चाद्येऽग्निष्टोमादयस्तेभ्यः फलान्तराश्रवणादयं क्रियमाण इति योज्यमिति। भवेत्तत्

१. कर्मविशेषणोत्पत्ति आ० मा०। २. भविष्यतीत आ० मा०।

न ह्यग्निशब्द उद्भिदादिवद् यौगिकः। नापि वाक्यभेदतत्प्रख्यतद्व्यपदेशै[१]र्युक्तो, येन कर्मनामधेयत्वं विज्ञायते। यत्तु तत्प्रख्यमस्तीत्युक्तं, भवेत्तद्यदि क्रत्वङ्गत्वेनाग्निर्विधीयते, स तु प्राप्तक्रत्वङ्गभाव एव चयनसंस्कारतया श्रूयते। न च ताद्रूप्येण कुतश्चित्प्राप्त इति तत्प्रख्यान्यशास्त्रान्तराभावः। तस्माद् द्रव्यमेवाग्निरिति। कतमद् द्रव्यमिति—चयनसामानाधिकरण्यविरोधाभिप्रायेण प्रश्नः। सिद्धान्तवादी तु 'व्रीहीनवहन्ति' इतिवद् वैयधिकरण्येनैव संस्कार्यसंस्कारसंबन्धोपपत्तेरविरोधं मत्वाह—यदेतज्ज्वलन इति। तस्मादग्निशब्दस्य प्रसिद्धार्थग्राहित्वाच्चिनोतेश्च यागाभिधानाशक्तेर्द्रव्यदेवताभावाच्चाग्निं चयनेन संस्करोतीत्येतावानेव चोदनार्थोऽवधार्यते। तथा च द्वितीया समर्थिता भवति, कर्मनामधेयत्वे त्वग्निहोत्रवत् क्लेशः स्यात्। अनुयजतीति शब्दः कथमिति चेत्, उच्यते।

एकाहाहीनसत्राणि यजिस्तावद् ग्रहीष्यति।
अनुशब्दश्चिते तेषामनुष्ठानं वदिष्यति॥

यदि ह्ययमग्निशब्दः समानाधिकरणः स्यात्ततो दुःखं नीयेत। यदि वैषा कर्मणि द्वितीया स्यात्। अयं तु व्यधिकरणः, कर्मप्रवचनीययुक्ते द्वितीया। [पा० सू० २।३।८।] अत्रायमर्थोऽग्निचयनमन्वग्निष्टोमादिभिर्यष्टव्यमिति।

यदीति। अग्निमनुयजतीत्यत्र तत्स्यादग्निं चिनुत इत्यत्र तु न प्रसिद्धिज्वलनपरित्यागे कारणमस्ति। न च संस्कारानर्हत्वं कारणम्, अथातोऽग्निमित्यादिभिश्चयनसंस्कारस्य क्रत्वर्थत्वेनावधारणात्प्राप्तांगभावाहवनीयादिविषयत्वप्रतीतेरिति। व्यधिकरणेऽप्युच्यते। यदि चैषा कर्मणीति। तदा ह्यग्निरग्निष्टोमादिभिरनुयागैः सम्बन्धनीयोऽनुयागतां वाग्निष्टोमादीनामग्नेर्यागत्वेन भवतीति ग्रहणे समानविधानं स्यादिति। अस्त्यग्निर्य एवं विद्वानग्निं चिनुत इत्यादि। सन्ति चातिग्राह्या उपस्तम्भनं वा एतद्यज्ञस्य [१]यदग्राह्या तयोश्चोदकेन विकृतिगमनसन्देहे पूर्वपक्ष सूत्रम्—अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् [मी० सू० १०।८।२१] तमुक्थ्येनेत्यादिरग्निरूपदेशो यदुक्थ्येति। गृह्णीयादित्यतिग्राह्याणामिति। असावनर्थकोऽतिदेशेन प्रवृत्तौ तयोरतोऽप्रवृत्तिरिति। अत्रोत्तरं ग्रहणं वा तुल्यत्वात्

१. °व्यपदेशत्वैर्युक्तो इति काशीमुद्रितपाठः।
१. यदतिग्राह्या इति आ० मा०।

अग्निशब्दश्च सामान्यवचनोऽपि सन्नत्र प्रकरणवशाच्चयनसंस्कृते वह्नौ प्रवर्तते। चयनसंस्कारोत्तरकालं यष्टव्यमित्यर्थः । तेन क्रत्वङ्गभावोपनयनार्थत्वेनैवैतानि वचनानि। चोदकेनैव प्राप्तानां विकृतिषु पुनःश्रुतिः किमर्थेति चेत्। दशमे वक्ष्यते 'ग्रहणं समानविधानं स्यात्' [ मी० सू० १०।८।२७। ] इति। न चावश्यं तुल्यजातीययोरेव पौर्वापर्यं भवति। अतुल्यजातीययोरपि पौर्वापर्यं भवति। तथा पाकमनुभुङ्क्त इत्यविरोधोपपत्तेः। यत्तु देवदत्तो यज्ञदत्तमनुगच्छतीत्येतत्तुल्यकर्मत्वं गम्यत इति। युक्तं तत्र कर्तृमात्रोपादाने सति क्रियान्तरानुपादानात् । इह पुनरग्निसंस्कारोपात्तं चयनकर्मैव विद्यत इत्यसमानम्। २२।

'अग्नेः स्तोत्रम्' इत्यादिष्वगत्या[१]श्रयणं ज्वलनेन संबद्धं स्थलं लक्ष्यते नापि तद्वान् क्रतुः । न चैकत्र लक्षणाश्रयणमिति सर्वत्रैव साश्रयितव्येति। तस्मात्सत्यां गतौ द्रव्यवचनत्वमेव युक्तम्। यस्त्वत्रैवाधिकरणे भाष्यकारान्तरेणाग्नेः फलवदफलत्वप्राकृतवैकृतत्वनित्यानित्यत्वोत्तरवेदिविकाराविकारत्व-

[ मी० सू० १०।८।२५ ]। ग्रहणं चोदकेनैव। तयोस्तुल्यत्वाच्चोदकप्राप्तैरितरैरङ्गैः। यत्तु विकृतावुपदेशानर्थक्यं तत्रोच्यते ग्रहणं समानाभिधानं स्यात् [मी० सू० १०।८।२७] कासुचित् विकृतिषूपदेशेनानयोर्ग्रहणे समानविधानं फलम् । तस्य प्रयोजनं गुणकामप्रवृत्तिरिति। न चावश्यमिति। कर्मण्यपि द्वितीयायां क्रियात्वसामान्यापेक्षया तुशब्दस्योपसर्गस्य यजतिविशेषणत्वोपपत्तेर्नावश्यमवान्तरजातितुल्यत्वमिति। स्थलं लक्ष्यत इति। यदि क्रतुः साक्षाल्लक्ष्येत सर्वे क्रतवः प्रतीरेयन्नाग्निस्थलवन्त एवेति। यस्त्वत्रैवाधिकरण इति। क्रत्वर्थेषु द्रव्यसंस्कारकर्मसु। [मी० सू० ४।३।१] एवं कामरहित इति फलश्रुतिरर्थवादः। तद्युक्तं तु खादिरवीर्यं कामस्येति। [१]फलसाधनां तथानारभ्यवादानां द्वारापेक्षिणां प्रकृतावुपदिष्टा द्वाराणां पूर्णमय्यादीनां [२]प्रकृत्यपेक्षित्वं तदनपेक्षिणामाहवनीयादीनामुभयार्थत्वम्। तथा काम्यनैमित्तिकानां भेदेन होमादीनामनित्यत्वमितरेषां प्रयाजादीनां नित्यत्वम्। तथा तुल्योपकारेणानित्येन गोदोहनादिनानित्यस्य विकारो नान्येनेति तत्र तत्र विचार्य निर्णेष्यत इति । प्रासंगिकं वत्सालम्भादारभ्य

१. °त्याश्रवणमिति मुद्रितपुस्तकटिप्पणीधृतपाठः।

१. फलवाधनां आ० मा०। २. प्रकृत्यर्थत्वम् आ० मा०।

विचारः कृतः, स उदाहरणान्तरेष्वधिकरणान्तरसिद्ध इहासंबद्धोऽपि स्मरणमात्रदर्पेणोपन्यस्त इत्युपेक्षितव्यः । तस्मान्नैवंजातीयको गुणो भेदक इति सिद्धम् ।२३।

## [ प्रकरणान्तराधिकरणम् ]

गतं गुणलक्षणभेदप्रसक्तानुप्रसक्तं कीदृशो गुणः पूर्वत्रासंभवन् भिनत्ति कीदृशो वा तत्रैव संभवतीति । इदानीं पर्यवसितेषु पञ्चसु भेदकारणेषु प्रकरणान्तरलक्षणो भेदः प्रस्तूयते । तत्र तावत्

अग्निहोत्रादिशब्देन पूर्वं कर्मावबोधितम् ।
न विप्रकर्षमात्रेण भेदरूपं[1] प्रपद्यते ॥

यथैव वलभ्यां पाटलिपुत्रे वाग्निहोत्रादिशब्द उच्चार्यमाणो नार्थान्तरं प्रतिपादयति, एवं प्रकरणान्तरेऽपि । न हि प्रकरणान्तरं तस्यार्थाभिधानशक्तिमभिव्यनक्ति । तद्विशेषिताश्च यजतिजुहोत्यादयोऽपि नार्थान्तरे वर्तन्ते । नार्थान्तरेण विना किञ्चिदनर्थकं भवति । न च प्राप्तविधानं तेषु न संभवति । यावज्जीवादिविधिभिः सह तुल्यबलत्वेन विकल्पोपपत्तेः । यो वै तेषां काम्यप्रयोगस्तस्यानवगतकालविशेषत्वान्मासपरिमाणविधानमित्यदोषः । प्रकरणस्य च वाक्यं बाधकमिष्टमेव । अथ वा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपरिमितः प्रतिप्रसवः । स तु प्रयोगमध्य एव क्रियते । अथ वा तान्येवाग्निहोत्रादीनि अत्र पर्युपस्थाप्य सोमयागसहितानि सत्त्रप्रयोगवचनेन फले विधीयन्ते । न हि केवलभोजी देवदत्तोऽन्यैः सह पङ्क्त्यां भुञ्जानोऽन्यत्वं प्रतिपद्यते । न च फलान्तरसंबन्धः कर्मान्तरत्वेन विना न घटत इत्युक्तमवेष्टयधिकरणे । न चावश्यमङ्गैरेव क्रत्वन्तरं गन्तव्यम् । प्रधानमपि हि अपरिपूर्णे करणांशे स्वशब्देन विधीयमानं न विरुध्यते । तस्मादेवमपि तान्येवाग्निहोत्रादीनीति प्राप्त उच्यते ।

यजिमद्वचनविचारं समाप्य [1]प्रकृतमुपसंहरति । तस्मान्नैवं जातीयक इति । [1]अपूर्वसंयोगिनो गुणस्य भेदकत्वं समग्रमुक्तम् । अतिप्रसङ्गनिरासस्तत्र कर्तव्य इति । स दध्नेन्द्रियाधिकरणेन प्रक्रान्तोऽनेनोपसंहृतो मध्ये चापवादाशंकादृष्ट्या निराशाया[2]वेदि विचारो नापवादाधिकारं विच्छिनत्ति । तस्यानवगतकालविशेषत्वादिति मासविरोधिनावगतः कालः सायं प्रातः

1. भेदमात्रम् इति काशीमुद्रितपाठः ।
१. पूर्वसंयोगिनो आ० मा० । २. °शायाग्न्येष्ट्यादि ० आ० मा० ।

उपसद्भ्यः परं ह्येतदग्निहोत्रं विधीयते ।
न च नैयमिकस्यैताः सन्तीत्येतेन भिन्नता ॥

यदि हि मासः शुद्धो विधीयेत ततः पूर्वकर्मानुवादे बुद्धिर्भवेदपि । न त्वेतदस्ति । उपसदुत्तरकालत्वेन श्रवणाद्विद्यमानाभिरुपसद्भिः शक्यः कालो लक्षयितुम् । न च नैयमिके ताः स्वार्थाः परार्था वा विद्यन्ते । यदि तु तास्तदुत्तरकालत्वं मासश्च विधीयेरन्, एवं सति अनेकार्थविधानाद्वाक्यभेदः स्यात् । एतस्मादेव हेतोर्दीक्षितदानहोमपाकप्रतिषेधेन प्रतिषिद्धस्य प्रतिप्रसवरूपेण वा सत्त्रैकदेशत्वेन वायं विधिः प्रत्युक्तः । तत्रापि ह्युपसदुत्तरकालत्वं मासश्चेत्यनेकार्थत्वमेव । कर्मान्तरविधाने त्वनेकार्थत्वमदोषः । तस्मात्कर्मान्तरमिति भाष्यकारः । इदं त्विह वक्तव्यम् । यदि वाक्यभेदप्रसङ्गात् कर्मान्तरत्वमेवं तर्हि स एव भेदहेतुः प्राप्नोति न प्रकरणान्तरम् । अथ वा गुणादेवानेकात्मकत्वेन पूर्वत्रासंभवाद् भेद इति प्रकरणान्तरानवकाशः । तथा हि

यद्यपि प्रकृते तस्मिन्नग्निहोत्रे भवेदिदम् ।
तथाप्यसंभवात्तस्मिन् ब्रूयात्कर्मान्तरे गुणः ॥

किञ्च—

अग्निहोत्रस्य चैतेन भेदः क्लेशेन संभवेत् ।
उत्तरेषां तु नैव स्यादुपसत्संगतेर्विना ॥

'मासं दर्शपूर्णमासाभ्यां यजते' इत्यादिषु हि केवलमाससंबन्धविधानान्न वाक्यभेदः प्राप्नोतीति अकर्मान्तरत्वप्रसङ्गः । तत्रैतत्स्यात् । इहाप्युपसद्भिश्चरित्वेत्यनुषङ्गादग्निहोत्रतुल्यत्वमिति । तदयुक्तम् । कुतः ?

विना यत्रानुषङ्गेण भवेच्छ्रुतिरनर्थिका ।
तत्रैव ह्यकृतार्थानामनुषङ्गो न चेह सः ।

तत्रानुषङ्गो युक्तो यत्र तेन विना न किञ्चिदुक्तं भवति । यथात्रैव 'मासं वैश्वदेवेन' इत्यादिषु यावद्यजत इति नानुषज्यते तावन्न किञ्चिदुक्तमित्यवश्यमनुषक्तव्यम् । इह पुनर्दर्शपूर्णमासादिवाक्यानि तावत्स्वपदैरेव निराकाङ्क्षीभूतानि । 'उपसद्भिश्चरित्वा' इत्ययमपि पूर्वत्रैव चरितार्थत्वान्न किञ्चिदपेक्षते । तत्र न कश्चिदपि हेतुरस्ति येनानुषज्येत । यस्तु वाक्यभेदप्रसक्त्यर्थमेवानुषङ्गमिच्छेत् कुर्यादपि सः । तत्र तु पुनः पुनश्चरित्वेत्यस्य

**कालयोर्मासं सायं प्रातर्जुहुयादिति अन्वयोपपत्तेरिति । यस्तु वाक्यभेदप्रसक्त्यर्थमिति । भेदार्थाभियुक्तः कर्मभेदस्याश्रितत्वात्तस्य च वाक्यभेद-**

विधानाद् यावदनुषङ्गमुपसदामनुष्ठानं प्राप्नोति । अनिष्टं चैतत्, वेदाभ्यनुज्ञानाभावात् । अथाग्निहोत्रस्यैव पुरस्तात् कृताभिः सर्वानुषङ्गार्थसंपादनमित्युच्येत । तथा सति शब्दोच्चारणमप्येवमेवावस्थितमग्निहोत्रादीनां पाठक्रमानुरोधेनोपकरिष्यतीति नार्थोऽनुषङ्गेण । तस्मान्नैतद् व्याख्यानमुपपद्यत इति एवं वर्णनीयम् ।

उपादेयो गुणो यत्र भवेत् प्रकरणान्तरे ।

तत्राकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता ॥

इह तावन्नैव प्रकरणान्तरसद्भावादभेदोऽवगम्यते । किं तर्हि । पूर्वप्रकरणविच्छेदात् । अविपरिवर्तमाने हि पूर्वकर्मणि केनापि प्रकारेणोत्तरस्य भेदः प्रतीयते । न तु प्रकरणान्तरं सदपि किञ्चिदुपकरोति । तथा च 'फलं चाकर्मसंनिधौ' [ मी० सू० ३।३।२५ । ] इत्यत्र वक्ष्यामः । सर्वत्र च विच्छिन्नप्रकरणस्य कर्मणः संबन्धि द्विप्रकारं श्रूयते उपादेयमनुपादेयं च । तत्र यदुपादेयं यथाहवनीयप्रतिपदादि तत्प्रदेशान्तरस्थोद्देशेनापि शक्यं विधातुम् । यत्त्वनुपादेयं देशकालनिमित्तफलसंस्कार्यात्मकं तस्य प्रदेशान्तरावस्थितस्य कर्म प्रति

प्रसक्त्यधीनत्वादनुषङ्गे च तत्प्रसक्तेनूनं सानुषङ्गमेतत् वाक्यमित्यध्यवसीयत इति । स कुर्यादिति । प्रयोजनवशेन प्रमाणकल्पना अकल्पनैवेत्यर्थः । तथा कुर्वतश्च तेषामेव सकृदुपसदनानुष्ठानाभ्युपगमेन विरोधः स्यादित्यत आह—तत्र पुनरिति । न चात्रोपपत्त्या प्रत्यवस्थेयमुक्तानुपपत्त्यभावादित्याह—वेदाभ्यनुज्ञानाभावादिति । तथा सति शब्दोच्चारणमिति । पाठक्रमेणाग्निहोत्रस्योपरीतरेषामनुष्ठानम् । तत्राग्निहोत्रस्योपसदुत्तरकालीनतायामुक्तायां सिद्धैवेतरेषामिति न वक्तव्यमवशिष्यते । न च तदभावे निर्विषयोऽनुषङ्गः सम्भवतीति । अनुपस्थानस्य भेदकत्वमुपपादयिष्यन् प्रकरणान्तर[1]प्रामाण्यप्रतिज्ञायोगदोषाभावायानुपस्थानमेव प्रकरणान्तरान्तर्गतमेवोपलक्ष्यतेऽस्माभिरिति तावदाह—इह तावदिति । तत्र यदुपादेयमिति । तद्धि शास्त्रेण यच्छब्दोपबद्धं यथा सिद्धोद्देश्य तत्र तथा बोधितमुद्देश्यवेशे प्रतीयते । प्रसिद्धिश्चोद्देश्यस्य यद्यव्यवहिता ततः साध्वेव । व्यवहितापि [2]ध्यानाद्युपस्थिता शास्त्राङ्गीकृतत्वात् सम्बध्यत इति । यत्त्वनुपादेयत्वमिति । सम्बन्धिनोः सम्बन्धोभयोः स्वतन्त्रयोर्नाम्यतन्त्रयोः किं त्वेकतन्त्रत्वेऽपरस्य तत्परतन्त्रस्य

१. प्रकरणान्तरप्रतिज्ञा आ० मा० । २. °नाद्युपस्थापिता आ० मा० ।

विध्यशक्तेरेषा वचनव्यक्तिर्भवति तत्रैव कर्म कर्तव्यमिति। परोद्देशेन च कर्म विधीयमानं यद्यन्येन तद्रूपमेव वाक्येनोपस्थाप्यते ततस्तदेवेत्यकर्मान्तरबुद्धिर्भवति। अथ त्वीषदपि तिरोधानान्नोपतिष्ठेत ततः परं विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिता न शक्याऽपनेतुमिति कर्मान्तरत्वं भवति। एवं हि स विधायकस्तत्रोपदिशति अविधेयं पदार्थं प्रति मयैतत्कर्म विधीयते। तच्च स्वरूपेणानुत्पन्नं न शक्यं तत्र विधातुमिति बलादुत्पाद्यते। तद्यदि कश्चिदेवंविधं शक्नोत्युत्पादयितुं तत उत्पादयतु, यावदहमप्यत्र विधिं करोमि। अथ नोत्पादयति ततो मयैवोत्पादिते मा कश्चित्पश्चादागत्य ममापराधं मंस्तेति। तेनैवमाघोषिते यदि कश्चित्तथाविधमुपनयति ततोऽसावपि तदेव देशादौ विधत्ते। अथ नोपनयति ततः स एवोत्पादयत्यपीति निरूप्यते। तदिह मासस्तावद् दूरस्थहोमानुवादेन न शक्यते विधातुम्। न हि कश्चिद्धोमाद्यनुरोधेनाद्यैव मासं संपादयितुं समर्थस्तेनात्यन्तं स्वतन्त्रमनुपादेयं मासमेव प्रतिहोमादिषु विधीयमानेषु दूरस्थैरुत्पत्तिविधिभिरुत्पादनशक्तावलुप्यमानाव्यापारात्सम्बन्धो, न स्वतन्त्रस्येति। यद्धि यथासिद्धस्याजहद्देशस्य स्वतन्त्रस्येतरसम्बन्धार्थमभिधानम्। स उद्देशः। स च देशकालयोरर्थस्वभावान्निमित्तस्य निमित्तत्वादेव। फलसंस्कार्ययोः प्रतिसम्बन्धिगुणभावपरत्वाद्वाक्यस्य। तेनैभिः सम्बन्धे कर्म एषा वचनव्यक्तिस्तत्रैव कर्म कर्तव्यमिति। अनुपादेयतन्त्रता चोपादेयानुष्ठानस्यात्र सप्तम्यर्थोऽनाधारतैव फलनिमित्तयोरसम्भवात्। ततश्च शब्देवेति यत्र तत्रस्थं कर्मविषयत्वेनाङ्गी[1] कृतं किन्तु तत्रैव कर्तव्यमित्यत्र द्वावंशौ कर्म तस्य चेतरसम्बन्धः तत्र यदि यथोपात्तं कर्म बुद्धौ विपरिवर्तते तथा बुद्धेरनतिरिक्तार्थत्वादितरसम्बन्धातिरिक्तेन वाक्यस्य साफल्यान्नोभयार्थताङ्गीक्रियत इत्यकर्मान्तरता। विपरिवृत्यभावे तु अपूर्वबुद्धकर्मभिरेवेयमवतिष्ठते। शक्नोति हि प्रतिसम्बन्धिनं उद्देश्यत्वात्कर्मारोपितव्यापारः शब्दस्तस्यान्यसम्बन्धवदुत्पत्तिमपि कर्तुमित्युक्तम् परं प्रतिविधीयमानत्वेनेति। न च शब्दप्रवृत्तिसमयेऽनुपस्थानाद्भेदबुद्धिरुपजाता पश्चाद्दूरस्थस्यानुसंधानेन परावर्तते तस्य शब्देनानङ्गीकृतत्वादिति दर्शितं न शक्यमपनेतुमिति। तदेतद्व्यक्तीकरोति—एवं हि। तत्रेति। ततश्चेति। नामधेयस्याप्युत्पत्युपस्थानेना-

१. °विषयत्वेन नाङ्गी° आ० मा०।

यामिदानीमेवोत्पत्तिः क्रियते । न चोत्पन्नस्य पुनरुक्तिः[१] संभवतीत्यपूर्वविधानं विज्ञायते । ननु, चाग्निहोत्रादिपदेनोत्पत्तिसहचारिणा तत्कर्मोत्पत्तावपनीयमानायां माससंबन्धमात्रव्यापृतोऽयं विधिरुत्पादकत्वाद्विहन्येत ।

संनिधानोपनीतं चेत्कर्म नोत्पद्यते पुनः ।
नामधेयोपनीतं तत्तत्र नोत्पद्यतेतराम् ॥

यत्र वाक्यान्तरगतमपि संनिधानमात्रादेव प्रत्यभिज्ञायमानं न भिद्यते तत्र स्ववाक्यगतेन नाम्नोपनीयमानं न प्रत्यभिज्ञास्यत इति कुत एतत् । उच्यते ।

यथाभिलषितं यत्र दुर्बलेनापि हेतुना ।
कर्मोपस्थाप्यते तत्र तदेवेत्यवसीयते ॥

संनिधानेन हि यादृगेव देशादिवाक्येषु कर्मावगम्यते तादृगेवोपतिष्ठत इति न भिद्यते । नामधेयं पुनरादितस्तावदाख्यातपरतन्त्रत्वान्नैव भेदाभेदयोर्व्याप्रियते । तस्मिंश्चाख्यातप्रवृत्तिप्रतीक्षिणि अवस्थिते 'मासं जुहोति' 'मासं यजते' इति जुहोतियजतिपदमात्रसंगतावालोच्यमानायामन्यस्य जुहोत्यादेः स्ववाक्यस्वप्रकरणेषु अविपरिवर्तमानत्वादप्रत्यभिज्ञानम् । किञ्च—

नाम्ना धात्वर्थमात्रं च सन्निधाप्येत शक्तितः ।
भावना त्वनुपस्थानाद्भिद्यमानावधार्यते ॥

सामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेनावस्थितानि न भावनायाः । तेन भावनान्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैकत्वे भावना तावदनन्यप्रमाणत्वादाख्यातप्रत्ययान्तरेणानुपनीयमाना न कथंचित्प्रत्यभिज्ञायत इत्युपपन्नं प्रयोजनान्यत्वम् । अथ वा

ख्यातगतोत्पादनशक्तिप्रतिबन्धसामर्थ्यादित्यर्थः । यथाभिलषितं यत्रेति । दुर्बलमप्य[१]भिमतसम्पादकमङ्गीक्रियते । न दुर्बलत्वेनाभिभूयत इत्यर्थः । नामधेयन्तु न तथा । तथा ह्युपस्थापन एव [२]तन्न व्याप्रियत इत्याह—नामधेयं पुनरिति । नापृथक्प्रवृत्तयोर्नामाख्यातयोरेकेनोपस्थापनमपरेणोपस्थापितविनियोग इति प्रयोजनभेदः सम्भवति । तत्राख्यातप्राधान्यात् तदनुसारि नामधेयमिति यथावर्णितव्यापारमेव भवतीति । व्याप्रियमाणमप्युपस्थाने नामधेयं न भावनोत्पत्तिं निवारयितुमलमित्याह—नाम्ना धात्वर्थमात्रं चेति ।

---

१ पुनरुत्पत्तिः इति काशीमुद्रितपुस्तकपाठः ।

१. भिलषित सम्पा० आ० मा० ।

२. तावन्नासामर्थ्यादव्याप्रि० आ० मा० ।

धात्वर्थोऽपि यथाख्यातेऽ सत्त्वभूतः प्रतीयते ।
सत्त्वाभिधायिना नाम्ना तादृङ्नैत्रोपनीयते ॥

असत्त्वभूतो हि धात्वर्थोऽत्र जुहोतिना विधेरुपनीयते । न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायिभिरग्निहोत्रादिपदैरभिधीयमानत्वमित्यप्रत्यभिज्ञानात्सोऽपि भिद्यते । यत्र तु प्रकरणान्तरेऽपि तथा[1]भूतो नोपादास्यते भावना वा तावदनुरक्तात्मना न विवक्ष्यते तत्र तदेव कर्मैकेन वचनेन पर्युपस्थाप्या परेण फले विधीयत इत्यवगमात् कामकर्मान्तिरं भवतु । तद्यथा 'अतिरात्रश्चतुर्विंशः' 'प्रायणीयमहः' 'चत्वारोऽभिप्लवाः षडहाः' 'पृष्ठ्यः षडहः' इत्यादिषु । यथा च वरुणप्रघासेषु 'अवभृथं यन्ति' इति । यदा तु प्रकरणान्तरगतफलादिसंबद्धं विधित्वमुत्पत्तिमपि संस्पृश्य यावद्बलीयस्योत्पत्तिविधिविपरि

धात्वर्थमपि च न यथाभिलषितं नामोपस्थापयतीत्याह—धात्वर्थोऽपि यथाख्यात इति । एवं [1]धात्वर्थभेदेऽपि भावनाया भेदे इत्युक्त्वा धात्वर्थस्यापि रूपवैलक्षण्याद् भेद इत्युक्तम् । तद्विषयविशेषे व्यवस्थापयन्नाह—यत्र त्विति । नामधेयाभिधेयविलक्षणाभिधायिनाख्यातेनोपादानाद्धात्वर्थाभिधायिनो उक्तो यत्र तु तथाभूतेन सत्त्वाभिधायिनैवोपादास्यते धात्वर्थस्तदेतद्धात्वर्थाभेदमात्रौपयिकमुक्त्वा भावनाया भेदमाह—भावना वेति । अथ वा नैतावत्किन्तु सत्त्वभूतधात्वर्थाभिधायिना तदनुरक्तेन रूपेण सम्बन्धाल्लक्षणया भावनापि विवक्ष्यते । तत्र तदेव कर्म । एकस्य तु वचनस्योपस्थापनेतरविनियोगयोर्व्यापारासम्भवात् वचनद्वयेनोभयं क्रियते । यथा अतिरात्रादिशब्दैरुपस्थानमेवंकामाः सत्रमुपासीरन्निति विनियोगः । अवभृथं यन्तीति । अवभृथोपस्थापनमिणो गत्यर्थस्य प्रयोगः प्रत्ययोच्चारणाय प्राप्तस्य गतिः, प्राप्तिश्चानुष्ठानाय । तेनावभृथं कुर्वन्तीत्यर्थ इति । एवमभेदप्रकरमुक्तभेदोऽप्येवं प्रकाशत इत्याह—यदा त्विति । कर्मणो फलादिसंबन्धविधिरनुत्पन्नानां तदसम्भवादुत्पत्तिमपि संस्पृशति, ततश्च तद्भिनत्ति । केवलं यावदुत्पत्तिविधिविपरिवृत्त्या विप्रकर्षादनिवार्यमाणमुत्पादकेनैव सन्निहिते नानिवार्यत इत्यर्थः । तदातिरात्रादिशब्दानामनुत्पादकत्वादेवमादिषु भेद एवेत्यवगम्यते । तदा चातिरात्रादि शब्दानां कौण्डपायिनाम···ग्निहोत्रविषयाग्निहोत्रशब्दवद्धर्मलक्षणया वृत्तिरिति ।

१. तथाभूतेनोपादास्यते इति काशीमुद्रितपाठः ।

१. धात्वर्थभेदेऽपि आ० मा० ।

वृत्त्या त्रिप्रकर्षादनिवार्यमाणं भिनत्तीति निश्चीयते तदेवमादिष्वपि भेद एवेत्य वगम्यते । परमार्थेन तु—

भिद्यते भावनामात्रं धात्वर्थो नार्यजिश्रुतेः ।
नाम्ना हि तदुपादानमा[1]सनोपायिचोदिते ॥

नामविलक्षणधातुश्रवणे हि तदर्थभेदो भवति । सत्रे तु यज्यश्रवणान्नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानात्तद्भावनामात्रभेदः । तस्मात्साधूक्तं प्रकरणान्तरे प्रयोजनान्यत्वमिति । भाष्यकार उपसद्भिश्चरित्वेति तल्लक्षितकालमेवानुपादेयरूपं भेदहेतुत्वेन दर्शयतीति द्रष्टव्यम् । अथोच्येत—उपसदोऽपि विधीयन्त इत्यादि चाभ्यासाधिकरणवदभ्युपेत्यवादेन समर्थयितव्यम् ॥ २४ ॥

## [फलसंस्कार्ययोः कर्मभेदकत्वाधिकरणम् ]

एवं षडपि भेदहेतवः पर्यवसिताः । संप्रति प्रकरणान्तरस्यैव प्रकारान्तर प्रदर्शनं क्रियते । यो नाम प्रकरणान्तरकृतमेव कालसंबन्धकृतं वा भेदं मन्यते नासंनिधानानुपादेयवस्तुसंबन्धमात्रकृतं तं प्रति विस्पष्टीकरणार्थं 'फलं चाकर्म संनिधौ' [मी० सू० २।३।२५।] इत्यारभ्यते । तत्वमेतत्सप्तमं भेदाधिकरणम् । तत्र देशनिमित्तयोरनुपादेयत्वं सुज्ञानमिति पूर्वाधिकरणे सिद्धत्वादिहानुदाहरणम् । पूर्वत्रैव त्वेवमादि दर्शयितव्यम् । तद्यथा 'सत्रायावगूर्य विश्वजिता यजेत' 'साम्युत्थाने विश्वजित' इत्यादीनि निमित्ते । देशेऽपि 'दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन' 'शम्यापरा समीयात्' इत्यादीनि । यद्यप्यत्रातिरात्रादिवदेव यज्यश्रवणं तथापि प्राग्यज्यनुमानात्तद्धितान्तपदयुक्तवाक्यापरिसमाप्तेर्वाक्यान्तरस्यानपेक्षणात्कर्मान्तरत्वम् । फलसंस्कार्ययोस्तु तुल्यहेतुत्वादिह विचारः । तत्र फलमुदाहृतमेव । संस्कार्यमप्युदाहर्तव्यं 'त्रैधातवीया[2]

एवमुभयप्रतीतौ परमार्थमाह भिद्यते भावनामात्रमिति । अनुत्पादकत्वेऽप्येषामस्त्युत्पत्त्युपस्थापकत्वमाख्यातार्थवैलक्षण्ये त्वग्निहोत्रशब्दवत् नाभेद हेतुत्वम् । तच्च यजिप्रयोगे स्यादिह तु यज्यप्रयोगात् भावनायामेवाख्यातेनोपात्तायां स्यात् । सत्रमासीरन्नुपेयुरिति ह्यनुष्ठानमात्रमाख्यातेनोपात्तम् धात्वर्थास्तु सत्रशब्दे निष्पन्नाभिधायिनोपात्ता फले विधीयन्ते । तेन श्रुत्पत्तिरपेक्षितातिरात्रादिशब्दैरविलक्षणार्थैरुपनीत इत्यविरुद्धम् । तेन

---

१. °मात्मनोपाय° इति काशीमुद्रितपाठः ।
२. त्रैधातव्या इति काशीमुद्रितपाठः ।

दीक्षणीया' इति। यजमानसंस्कारार्थत्वेनोपादानात् अनारभ्य किञ्चिदिति— प्रकरणान्तरावरोधाभावज्ञापनार्थम्। तत्र यागोद्देशेनाहवनीयादिवत्फलं विधेयम्। शक्यं हि तत्पुरुषेण दर्शपूर्णमासस्थेनापि कामयितुमिति मत्वाह— प्राकृतेषु फलविधिरिति। सिद्धान्तवादी तु स्वर्गकामाधिकरणसिद्धं **'प्रत्यर्थं चाभिसंयोगात्'** [मी० सू० ६।१।३।] इति फलोद्देश्यत्वं मत्वा वदति न शक्यते फलं विधातुमिति। विधीयमानं क्रियाङ्गत्वादफलमेव प्राप्नोति। क्रियापि वा विधीयमाना तादर्थ्यं प्रतिपद्यमाना निष्फलैव स्यात्। न चोभयोरुद्दिश्यमानयोरुपादीयमानयोर्वा संबन्धोऽस्तीत्येकान्तेन फलमुद्दिश्य कर्म विधातव्यम्। ततश्च पूर्ववदेव सिद्धो भेदः। एतेन संस्कार्यमपि व्याचक्षीत। किञ्च—

न चानित्यस्य कामस्य नित्यैरग्न्यादिकर्मभिः।
कथञ्चिदपि संबन्धः साध्यसाधनरूपतः॥

तस्मात्कर्मान्तराणीति सिद्धम्॥ २५॥

**भावनामात्रभेदोऽत्रेति। [1]यजमानसंस्कारत्वेनेति। दीक्षणीयाशब्देन दीक्षणीयाकार्यं यजमानसंस्कारमुपलक्ष्यत तदुद्देशेन त्रैधातव्या विधिः। ननु कथमत्र यज्यश्रवणेन नामधेयमात्रव्यापारात्कर्मान्तरत्वमिति वक्तव्यम्। तथा साम्युत्थाने विश्वजिदित्यत्रापि। तदुच्यते, प्रागुक्तमेतदसकृदुच्चारणे शब्दः पूर्वोपस्थापनेऽन्यत्र विनियोगे च कारणं भवति। तेनाप्रत्यवेक्षितपूर्वोत्पत्ति विधिरुत्पत्तिमपि करोतीति। प्रत्यर्थंश्चाभिसंयोगादिति अर्थ्यत इत्यर्थः। प्रतिशब्दो लक्षणे आभिमुख्ये स्वरसत पुरुषेणार्थ्यमानं लक्षणीकृत्य तदाभिमुख्येन यागविधिः स्वर्गादेर्यागफलत्वमिति [2]सूत्रार्थः। स्वरूपनिरूपणे तावत्फलस्योद्देश्यत्वमुक्तम्, कर्मणो विधेयत्वादप्येवम्। तथा कर्मणोऽपि विधेयत्वम्। फलोद्देश्यत्वादित्याह—न चोभयोरिति। न चाप्युद्दिश्यमानत्वमिति। व्यवस्थितविषयं परिहारद्वयम्। पूर्वः फलसंस्कार्ययोः कर्मणस्तत्र विनियोगाभ्युपगमात्। अयं तु देशकालयोस्तयोरेव कर्मानुवादेन विधिरिति। निमित्ते तु कथम्। नहि तत्र कर्मविनियोगो न च तस्य कर्मणि तदुच्यते। पूर्व एवौत्पत्तिप्रयोगयोरित्येवं पठ्यते। निमित्ते हि कर्मणः प्रयोगो विधीयते। स विधिसन्निहितोत्पत्ति[3] प्राग्गृहीतोत्पादय-**

---

१. संस्कारार्थत्वेनेति आ० मा०।

२. तस्यार्थः आ० मा०।

३. °त्पत्तिग्राहिणोत्पादयति आ० मा०।

## [ सन्निधौ फलादेः कर्मभेदकत्वाभावाधिकरणम् ]

सर्वेषामेवासंनिध्यंशप्रत्युदाहरणार्थमिदमारभ्यते । फलग्रहणं प्रदर्शनमात्रम् । सर्वाणि तु देशादीन्यप्युदाहर्तव्यानीति । 'समे दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'शेषात्स्विष्टकृतं यजति' इति । सर्वत्र पूर्वाधिकरणेन देशादीनि प्रति विधीयमानत्वात्कर्मान्तरत्वं प्राप्तम् । आह च

विहितस्य विधिर्नास्तीत्यनुवादः प्रसज्यते ।
अनूद्यमानमुद्देश्यं न चात्रोद्देशसंभवः ॥

अनूद्यमानानि त्वेकान्तेनोद्देष्टव्यानि कर्माणि । न चोद्देश्यानामुद्देश्ये संबन्धोऽवकल्पते । देशाद्युद्देशेन तु विधीयमानानां कर्मणां स्वरूपानुवादकल्पनं युगपद्विध्यनुवाददोषादयुक्तम् । तस्मात् कर्मान्तराणीति प्राप्तेऽभिधीयते—

भिन्ने हि विधिसामर्थ्ये उत्पत्तिविनियोगयोः ।
तत्र सत्यां गतावेकमसत्यां तद् द्वय भवेत् ॥

अगत्या हि तेनैवोत्पत्तिस्तेनैव च विनियोगः क्रियते । सत्यां तु गतौ विनियोजकस्योत्पत्तिविध्यर्थापत्त्यनुत्पादादन्येनैवोत्पादितानां च विपरिवर्तमानानां विनियोगसामर्थ्यमात्रमेव ज्ञायते ।

न चाप्युद्दिश्यमानत्वमनुवादत्वकारणम् ।
नोपादानं विधेयत्वे प्राप्त्यप्राप्तिवशे हि ते ॥

यद्यपि देशादीन्यनुपादेयस्वभावत्वादुद्दिश्यन्ते , तथाप्यप्राप्तत्वात्तेषामेव ज्ञायते विधेयत्वम् । उपादीयमानस्य च कर्मणस्तादृशस्यैवान्येन पर्युपस्थापनादनुवादत्वम् । असंनिधाने त्वपर्युपस्थापनाद्विधिर्नोपादानमात्रादित्यविरोधः । तस्मादभेदः । विपरिवृत्तिरेव चेहाविभागशब्देनोक्ता । विशेषेण त्ववेष्टावेतच्छब्दप्रत्ययादिति । प्रयोजने तु चोदयन्ति । कर्मान्तरेऽपि किलैतच्छब्दकृतात्सादृश्यप्रत्ययादाग्नेयादीन्येव हवींषीति कथमन्यहविष्को याग इति । तत्त्वचोद्यम् । ज्योतिरादिवदेतच्छब्दस्य प्रस्तूयमानमुख्यार्थोपपत्तौ सत्यां सादृश्यलक्षणानुपपत्तेः । तस्मात्सुष्ठूक्तं कर्मान्तरेऽन्यहविष्को याग इति । एवमुक्तानि सापवादानि षट् भेदकारणानि । वृत्त्यन्तरे तु चत्वार्येव भेदकार-

णानि शब्दान्तरसंज्ञागुणफलान्युदाहृतानि । पुनःश्रुतिसंख्ययोः शब्दान्तर एवान्तर्भावात्प्रकरणान्तरस्य च फलाद्यनुग्रहमात्रार्थत्वात् । तत्त्वयुक्तमिव दृश्यते । न हि पञ्चकृत्वोऽभ्यस्तो यजतिशब्दान्तरत्वं प्रतिपद्यते । नाप्येकशेषेण तन्त्रोच्चारिताः सप्तदश प्राजापत्यशब्दाः संभवन्ति । शब्दैकत्वप्रत्यभिज्ञानात् । तथा चोक्तम् 'आदित्यवद्यौगपद्यम्' [मी० सू० १।१।१५ ।] इति । 'संख्याभावात्' [ मी० सू० १।१।२० । ] इति च । वक्ष्यति चैवंजातीयकानामेकत्वम् । 'अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाद्वा' [ मी० सू० ६।३।१२ ।] इति । तस्मादेकशब्द्ये सत्येव कारणान्तरादभेदमपश्यतः शब्दान्तरकल्पनं तत्रभवतो भाष्यान्तरकृतः । प्रकरणान्तरत्वाच्च विना फलादीनां भेदकत्वमुक्तमपि न दृष्टं 'संनिधौ त्वविभागात्' [ मी० सू० २।३।२६ । ] तत्संनिधेर्गुणार्थेन पुनःश्रुतिः' [ मी० सू० २।२।१६ । ] इत्यादौ । तेन प्रत्यभिज्ञाननिमित्तत्वात्फलाद्यनुगृहीतं प्रकरणान्तरमेव भेदकारणं भवेदप्युपेक्षितम् । फलं च प्रकरणान्तरान्तर्भूतत्वेन न निरीक्षितम् । यदपि 'एकं वा संयोगरूपचोदनाख्याविशेषात्' [ मी० सू० २।४।९ ।] इत्येकत्वे हेतुविपर्ययचतुष्टयमस्य ज्ञापकमित्युक्तम् । तदपि प्रस्तुतेऽधिकरणेऽन्येषामसंभवादिति नालोचितम् । तस्माद्यथोक्ताः षडेव भेदहेतवः । तत्रापि तु सिद्धान्ते संज्ञाशब्दान्तरयोर्गुणसंख्ययोश्च भेदो वक्तव्यः सन्नोक्त इत्यभिधीयते ।

स्वरूपानभिधानत्वात्संज्ञा शब्दान्तरात्पृथक् ।
व्यासज्यसमवायाच्च संख्या भिन्ना गुणान्तरात् ॥

संज्ञा हि द्रव्यरूपापन्नामपि क्रियामभिदधाना विच्छेदमात्राद् भिनत्ति । संख्यापि युगपदनेकोत्पद्यमानसमवेता पूर्वासंभवाद् गुणान्तराद्भिद्यत इति ॥२६॥

तीति । तेनाप्रत्यभिज्ञाननिमित्तत्वादिति फलादिसत्ता ह्युपादेयतायां कर्मणो व्याप्रियते न तु फलत एव [1]भेदः । किन्तु सत्यां तस्यामपेक्षितोत्पत्त्यसन्निधेः प्रकरणान्तरोपलक्षितादिति । एकत्वे हेतुविपर्ययेति । भेदप्रमाणविपर्ययचतुष्टयमेकत्वहेतुत्वेनोपदिष्टम् । तत्र यद्यपरमपि भेदकारणं भवेत् न चतुष्टयाभावेन भेदाभावः सिद्ध्येदिति । स्वरूपानभिधायित्वादिति । न शब्दान्तरे शब्दधर्मादन्यत्वात् [2]धात्वर्थभेदः, किन्तु स्वरूपवैलक्षण्यात् तत्तु शब्दान्तरात् प्रतीयते । तथा हि यजतेर्यथा सम्बन्धग्रहणं देवतोद्देश्य त्यागरूपकर्मावगतिः जुहोत्यवहन्त्यादेस्ततो विलक्षणरूपस्य । संज्ञायां तु सम्बन्धग्रहणाभावान्न किञ्चिद्विलक्षणमविलक्षणं वा कर्मरूपमवगम्यते,

१. न च तयैव भेदः आ० मा० पठति ।

२. वाच्यभेदः आ० मा० ।

## [ आग्नेयपुनःश्रुतेः स्तुत्यर्थताधिकरणम् ] ।

'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति श्रूयते । किं य एवासावुभयत्राप्यच्युतस्तस्यैवैषा पुनः श्रुतिः केनापि प्रयोजनेनाथ कर्मान्तरमिति सन्देहः । तत्र 'संनिधौ त्वविभागात्' [ मी० सू० २।३।२६ । ] इति सत्यप्यनुपादेयाममावास्यां प्रत्युपादाने तदेव कर्मेति सिद्धान्ते प्राप्तेऽभिधीयते ।

पुनः श्रुतिरनन्यार्था भेदिकेत्यवधारिता ।
तादृशी चेयमित्येव द्विराग्नेयः प्रयुज्यताम् ।।

प्रयोगद्वित्वद्वारेण च कर्मद्वित्वप्रतिज्ञानमेवैतद् द्रष्टव्यमिति ।। २७ ।।

तत्र पक्षान्तरमाह—अविभागात्तु कर्मणो द्विरुक्तेन विधीयत इति । [ मी० सू० २।३।२८ । ] युक्तं समिदादिषु प्रत्यक्षयागपुनःश्रुतेर्भेदकत्वमिह तु द्रव्यदेवतासंबन्धादसावनुमातव्यः । तच्च द्रव्यदेवतमभिन्नमुपलभ्यमानं पूर्वसंबन्धानुभववशादेकान्तेन तमेव यागं बोधयति । द्रव्यदेवतमप्यन्यदिति चेन्न । अविभागप्रत्ययोपलम्भात् । यदि तु व्यक्तिकृतो भेद आश्रीयते स प्रयोगान्तरे तस्याप्याग्नेयस्याविशिष्टः । तस्माद्वैकल्पिकेन वचनद्वयेनामावास्यायामाग्नेय-

किं त्वेकस्यानेकशब्दत्वमन्याय्यमिति शब्दगतादर्थभेदोऽनुमीयते । तथैककर्मसमवाय्येव गुणः पूर्वोत्पन्ने कर्मण्यसम्भवन् समवायत्वादाख्यातस्योत्पादकत्वं बोधयन् भेदकारणम् । संख्या तूत्पत्तिविधित्वे सिद्धेऽनेकविषयत्वान्न तस्य स्वयमनेकेषु व्यासज्य समवेतत्वाद् बोधयतीति भिद्यते प्रमाणभावः । तत्र सन्निधो त्वविभागादिति । अनुपादेयं प्रत्युपादानाद्भेदोऽतिप्रसज्यमानोऽत्रापि प्रसक्तस्तस्य सन्निधौ त्वविभागादिति अपवादः । सोऽत्राप्येवमस्योपस्थितस्य प्रसङ्गादिदमुच्यते । मा भूत् प्रकरणान्तराद्भेदः । अभ्यासात्तु भेद इति । एवं च प्रकरणान्तरगतस्यानेकस्य कस्यचित् विशिष्टस्याप्रतिपादनात्पूर्वाधिकरण एव तस्य पर्यवसानात्प्रमाणषट्क प्रतिपादनोपसंहारः पूर्वत्र कृत इति । प्रतिपादितन्यायनिराकृतस्य किञ्चिद् विशेषणमनाश्रित्याभिधानं पूर्वापरशून्यतामापादयतीति विशेषमभिप्रायमाह—युक्तं समिदादिष्विति । एवं विकल्पेनोभयप्रामाण्यमुक्त्वा १समुच्चयेऽप्यदोष

विधानम् । अथवा युगपत्प्रवृत्तेः 'यथा स्यात्सत्त्वदर्शनम्' [मी० सू० ६।२।२। ] इत्यनेन न्यायेन तदेव कर्म, एकेनेतरेण च प्रतिपाद्यते । न च गम्यते विशेषः कतरेण प्रतिपाद्यते कतरत्पौनरुक्त्यादनर्थकमिति । कामं भवत्वानर्थक्यं, तदेव हि युक्त्याऽन्विष्यमाणमिहोपपन्नतरं भवेन्नार्थान्तरवचनत्वं, शब्दार्थानित्यत्व-प्रसङ्गात् । तस्मात्सकृदेव प्रयोग इति । सर्वं त्विदमभ्यासाधिकरणे निराकृतमपि सदुत्तरसूत्रदर्पेण विश्रब्धमभिधीयते न तु परमार्थेनानर्थक्याभ्युपगमं वेदः क्षमते ॥ २८ ॥

सर्वथा पुनःश्रुतिप्रयोजनेष्वत्रान्विष्यमाणेषु गुणस्याश्रवणात्परिसंख्यायाश्च त्रिदोषत्वादर्थवादार्थत्वेऽभ्युपगते कस्यार्थवाद इति विविच्यासंकीर्तनान्नूनमाग्नेयस्यैवेति मत्वा वदति सार्थवादकेन विहितेन किं प्रदेशान्तरस्थेनैकवाक्यतामनागच्छताऽर्थवादेनेति । विधिशेषत्वं ह्यर्थवादानामवस्थितम् । परिचोदना तु पूर्वपक्षाभिप्रायेण कृता । तत्र यथा स्तुता वाऽस्तुता वा सैव देवतेत्यविवरणान्न विज्ञायते किं विषयमिति । [1]तत्त्वेतदतिक्रान्तालोचनेन महेन्द्राधिकरणे 'गुणाश्चानर्थकः स्यात्' [ मी० सू० २।१।१८। ] इत्यत्र सूत्रेऽभिहितं परामृष्टमिति दृश्यते । यथैव हि महत्त्वं देवतानन्तर्गतमिति पक्षे केवलस्यैवेन्द्रस्य साधनत्वाद्विध्युद्देशेऽर्थवादेऽवस्थितमनर्थकं प्राप्नोति । तथैवेदं स्वतन्त्रस्तुतिमात्रमिति मन्यते । तत्रोच्यते—

इत्याह—अथ वेति । सत्त्वस्य गवाश्वादेर्दर्शनमनेकेषां द्रष्टॄणां युगपत्प्रवृत्तेर्यथानवगतपौर्वापर्यं स्यादिति । क्वचिन्निदर्शनं सूत्रकारो वक्ष्यतीति । किमङ्गीकृतसिद्धान्तेन स्वपक्षपरिशुद्धये चोदितमिदमुत पूर्वपक्षिणा स्वपक्षस्थितय इति बुभुत्सायामाह—परिचोदना त्विति । तु शब्दोऽवधारणे, प्रयोजनान्तराभावादिति । कर्मविधेरेवायं भवतीति तदभिप्रायः । अयमेव च सम्भवति नाभिप्रायान्तरस्य सम्भव इति । विध्युद्देशेऽप्यर्थवाद इति । विध्युद्देशमध्य एव गुणाभिधानव्यापारे स्थितमनर्थकाम""समाप्ते हि विध्युद्देशेऽर्थवादा-

---

१. न त्वेतदिति काशीमुद्रितपाठः ।

प्रशस्तशब्दैरवधारितेन वाक्यान्तरात्केवलदैवतेन ।
कर्तुं सहेन्द्रेण पुनः प्रशंसां पुनःश्रुतिः सम्यगिहाश्रितेयम् ।।२९।।

***इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके द्वितीयाध्यायस्य तृतीयः पादः ।।***

**काङ्क्षेति । प्रशस्तशब्दैरिति । वाक्यान्तरात् प्रशस्तशब्दैरवधारितेनाग्नेयेन सहेन्द्रेणेन्द्रसहितेनैन्द्राग्नस्य प्रशंसां पुनः कर्तुमियमाग्नेयस्य पुनः श्रुतिः सम्यगाश्रिता । अग्निदेवताकस्तावत्प्रशस्त इत्यवधारितं, न तु तन्मात्रेण तथा प्राशस्त्यं यथेन्द्रनिक्षेप इत्येवं सहेन्द्रेणाग्नेयेन ऐन्द्राग्नस्य प्रशस्ततरत्वं ज्ञास्यत इति ।।**

इति श्री महामहोपाध्यायपरितोषमिश्रविरचिते
अजिताख्ये तन्त्रटीकानिबन्धे
द्वितीयाध्यायस्य तृतीयः पादः

---

द्वितीयाध्यायस्य चतुर्थः पादः

## [ यावज्जीवाधिकरणम् ]

बह्वृचब्राह्मणेऽध्वर्युब्राह्मणे वा श्रूयत इति नातीवाभिनिवेष्टव्यम्। ननु कर्तृधर्मः कर्मधर्म इति शेषलक्षणविषयत्वादिह न संबध्यते। केचिदाहुः— पर्यवसिते लक्षणार्थे तदीयोऽपि विचारः प्रत्यासत्तेः क्रियमाणो न विरुध्यत इति। तत्त्वयुक्तम्। शाखान्तरे कर्मभेदविचारस्याद्याप्यपर्यवसानात्। अत एवं संबन्धनीयम्। यथैव भेदकारणानि कर्मस्वरूपभेदे व्याप्रियन्ते तथैव प्रयोगभेदेऽपि। तदिह यावज्जीवगुणसंयुक्तानामग्निहोत्रादीनां किं प्रयोगा भिद्यन्त उतैक एवायं प्रयोगः काम्यः स एव यावज्जीवकालपरिमित इति। तत्र यदि यावज्जीवकालः कर्मधर्मत्वेन विधीयते ततः सायंप्रातर्वाक्यवशेन तत्कालसमापनमग्निहोत्रं न शक्नोति तावन्तं कालं पूरयितुमित्यर्थाज्ज्योतिष्टोमवदभ्यस्तरूपमेव प्रयोगं प्रतिपत्स्यते। यदि पुनर्जीवनं निमित्तत्वेनोद्दिश्य कर्म विधीयते ततो यावत्कर्तृभाविनि नियते निमित्ते विना कामसंबन्धेन चोद्यमानमकरणे दोषप्रसक्तेरवश्यं पुरुषेण जीवता स्वार्थसिद्ध्यर्थमनर्थपरिहाराय वा कर्तव्यमिति कर्तृधर्मो नियमोऽनेन चोदितो भवतीति। तदा च सायंप्रातःकालयोर्जीवनस्य च संहतानां निमित्तत्वात् प्रतिदिवसं निमित्ते तत्पर्यवसितं कर्म पुनः पुनः क्रियत इति प्रयोगान्यत्वम्। तेन [1]प्रयोगभेदावेवैतत्फलत्वाद्भाष्यकारेणोपन्यस्ताविति मन्तव्यम्। किं प्राप्तम्। एकः प्रयोगोऽभ्यस्तरूपः कर्मधर्मो यावज्जीवकताकालोपदेशश्चायमिति। कुतः

> कर्मस्थो हि कथंभावस्तदङ्गमभिकाङ्क्षति।
> कालोपदेशपक्षे च तत्तथैवोपपद्यते॥

भाष्यकारीये ब्राह्मणविशेषोपन्यासे प्रयोजनबुभुत्सां निवर्तयन्नाह— बह्वृच ब्राह्मण इति। नात्र विचारौपयिकत्वेनादरः कर्तव्यः। यथावस्थितप्रदर्शनमात्रमिति। अथवाऽध्वर्यवत्वाद्दर्शपूर्णमासादीनामस्यानुपपन्नतामाशङ्क्यानवक्लृप्त्योपपादयति। नात्रादरो भाष्यकारस्य प्रदर्शनार्थमिदमिति। संहतानां निमित्तत्वादिति। यद्यप्यङ्गं कालो न निमित्तं तथापि तस्यानुपादेयत्वात् कालप्राप्तौ जीवने सति कर्तव्यत्वावगतेरन्यकालीनस्य जीवनस्याकिञ्चित्करत्वादर्थतः कालविशिष्टतेति। तत्तथैवेति[1]। यद् वाञ्छितमङ्गं तद् यथैव कर्म[2]सम्बन्धत्वेन वाञ्छितं तथैवोपपद्यते, सम्पन्नं भवतीत्यर्थः।

---

१. प्रयोगभेदाभेदफलत्वात् इति मुद्रितपुस्तकटिप्पणीपाठः।

१. तत्र तथैवेति आ० मा०। २. सम्बन्धित्वेन आ० मा०।

कालो ह्युद्दिश्यमानस्तन्निमित्तश्चाभ्यासः कर्माङ्गं भवति । ततश्च प्रकरणमनुगृह्यते । ननु च पुरुषधर्मत्वेऽपि तस्यैव कर्मणो जीवने विधानान्नैव प्रकरणं बाध्येत । सत्यमधिकारो न बाध्यते कथंभावात्मकं पुनः प्रकरणं क्रतुधर्ममपेक्षमाणं पुरुषधर्मे विधीयमानेऽत्यन्तं बाधितं भवति । यद्यपि [1]काल-स्यापि निमित्तवदेवानुपादेयत्वात्तुल्या वचनव्यक्तिस्तथापि फलतः कालविधानं यागानुवादश्चेति विपरीतं कथ्यते । अथ वा जीवनपरिमितकालद्वारेणाभ्यास-श्चोदयिष्यते । स च कर्मोद्देशेन शक्यत एव विधातुमित्येवमुपदिश्यते । कर्तृधर्मपक्षे पुनर्न कथंचित्कर्मोद्देशः । एवं चैकप्रयोगत्वे सति दीर्घसत्रप्रयोग-संस्तव उपपन्नो भविष्यति । इतरथा पुनः प्रतिदिनं पर्यवसानान्न कथंचित्सत्र-सारूप्यं भवेत् । तस्मात्कर्मधर्मोऽभ्यास इति । ।

धर्म इत्यनुवर्तते । तेनैषा प्रतिज्ञा कर्तृधर्मोऽयं चोद्यत इति । सोऽपि च नियमो न यथाकाम्यम् । कुतः

यावज्जीवपदाख्यातश्रुतिवृत्तित्वसंभवः ।
मत्पक्षे भवतस्तत्र लक्षणावृत्तता भवेत् ॥

इह हि यावज्जीवमिति यावत्कर्तृभाविजीवनं निमित्तभूतं श्रुत्यैव प्रतिपादितम् । जुहोति यजतीत्यपि धात्वर्थानुरक्तभावनामात्रवाची प्रत्ययांशः श्रौत एव । तदुभयमपि मत्पक्षेऽनुगृह्यते । भवत्पक्षे तु जीवनेन कालो लक्ष्येत ।

**अत्र भाष्यं यदीयं वचनव्यक्तिर्यजतिरनुपादेया यावज्जीवमिति विधिरिति । तत्रोद्देश्यो[1]पादानभेदेन वचनव्यक्तिभेदादत्र च पक्षद्वयेऽपि इतरोद्देशेन यागोपादानादेवं यदीयं वचनव्यक्तिरिति तदन्यत्वाभिधान-मित्याह—यद्यपि कालस्यापीति । [2]विधानानुवादावुपादानोद्देशवचनव्यक्ति-फलत्वेनान्यत्रोपलब्धौ तावत् कालयागयोरिति कृत्वा फले कारणोप-चारात्तस्यां तस्यामेव वचनव्यक्तौ विपरीतं कथ्यत इति ।**

**इह यावज्जीवमिति । यावच्छब्दो जीवनं सामस्त्येन विशिनष्टि । तेन सर्वैर्जीवनैर्होमानुष्ठानस्यान्वयः प्रतीयते । अत्र यदि जीवनं होमे विधीयते तदा स्वप्रयोजनप्रयुक्तहोमानुष्ठानं कदाचिन्न यावज्जीवमिति ।**

---

१. कालस्य निमित्तवदिति काशीमुद्रितपाठः ।

1. °श्योपादेयभेदेन आ० मा० । 2. विध्यनुवादादु०, आ० मा० ।

जुहोतियजतिभ्यामभ्यासः। यत्र हि विधिः समाप्यते स चोदनार्थो भवति। भवतश्च जीवनधात्वर्थपरित्यागेन कालाभ्यासौ विधीयेते। तेन लक्षणापर्यवसायो विधिः प्राप्नोति। तत्रैतत्स्यात्। यावज्जीवमिति यावच्छब्दः श्रुत्यैव कालं ब्रवीति। तद्यथा—यावद्दोहं स्वपिति। युक्तमत्र कालग्रहणम्। वर्तमानापदेशो ह्ययं नात्र काचिन्निमित्तापेक्षा। तेन श्रुतिवृत्तं दोहनमतिक्रम्य कालो गृह्यते। यदि त्विहापि यावद्दोहं स्वप्यादासीत वेति विधीयेत ततः केन वा दोहस्य निमित्तत्वं वार्येत। यावज्जीवचोदनायां[1] तु न किंचिदतिक्रमकारणमस्ति। प्राणधारणक्रियाया एव निमित्तत्वोपपत्तेः। न च यावच्छब्दः कालवचनः क्वचित्प्रसिद्धः। क्रियामेव तु समाप्तिपर्यन्तत्वेन विशिनष्टि। क्रियाकालयो-

**तेन[1] यावच्छब्दोऽनुवादो, न कर्मणि विधिः जीवनानामयुगपत्कालीनत्वे—नैकस्मिन् प्रयोगे साहित्यासम्भवात्। निमित्तत्वे तु जीवनस्य यावन्निमित्तं नैमित्तिकभावाल्लभ्यते यावच्छब्दार्थः। तेन निमित्त[2]त्वाभिधायि सप्तम्याद्यभावेऽपि यावच्छब्देन स्वार्थसमवा[3]याज्जीवनस्य निमित्त[4]भावो बोध्यते। अयमेव न्यायो वसन्ते वसन्त इति। वीप्सायामपि भविष्यतीति। युक्तमत्रेति। नानेन कालवचनता सिद्ध्यति। लाक्षणिकस्यापि तस्य श्रौतार्थसम्भवेनाध्ययणसम्भवात्। तथा हि नात्र गुरुत्वादिवत् क्रियासिद्धौ निमित्तत्वम् किन्तु तत् कर्तव्यतायाम्। अतस्तद्रहिते वर्तमानापदेशे निमित्तत्वेनान्वयासम्भवात् तदपेक्षितकाललक्षणार्थतेति। क्रियाकालयोरिति। नाडिकामुहूर्तप्रहरादिप्रत्ययाः पौर्वापर्ययौगपद्यादिविशिष्टपदार्थप्रत्ययाश्च कालकृता अङ्गीक्रियन्ते। ते च अविभक्तेनैकात्मना कालद्रव्येणाशक्यः कर्तुमिति। तस्य नाडिकादिव्यवच्छेदः सूर्यादिक्रिययावयवशो विभक्तयाऽभ्युपगन्तव्यः। एवं चेत्, सैव नाडिकादि व्यवहारहेतुः कालोऽस्तु किमन्तर्गडु[5]नापरेण, तयैव प्रसिद्धत्वात्। इतरस्य व्यवच्छेदार्थमुपादीयमानया येषामेकक्रियाव्यवच्छेदस्ते युगपदिति। येषां तु ध्वस्तानागतविद्यमानाभिरवच्छेदस्ते भूतभविष्यद्वर्तमानतया पौर्वापर्येण च प्रतिपद्यन्त इति। क्रियैव[6] कालो यदावच्छेदव्यापृता**

१. चोदनताया मिति काशीमुद्रितपाठः।

1. तेनेत्यस्य स्थाने केवलं न आ० मा०।

2. निमित्ताभिधायि आ० मा०।  3. समवायाय जीव० आ० मा०।

4. निमित्तता बोध्यते आ० मा०।  5. °ना कालेनाप० आ० मा०।

6. क्रियैवान्यव्यवच्छेदव्यापृता कालो जीवनमपि आ० मा०।

रभेदान्न लक्षणेति चेत् । अत्र वैशेषिकानपराजित्य परिहारायोपस्थातव्यम् । अपि च सत्यपि क्रियाणां कालत्वे काचिद्व्यवस्था विद्यते, यतो न सर्वासु कालप्रतिपत्तिर्लोकस्य । तत्र शेषाः क्रिया उपलक्षणीकृत्य चन्द्रादित्यपरिवर्तनक्रियासु कालव्यवहारो व्यवस्थितः । ता एवावान्तरक्रियापरिमाणेन प्रत्यासत्तेरन्यक्रियापरिच्छेदार्थमुपादीयमानेनोपलक्ष्यन्ते । तथा हि

तस्य जीवनमपि समाप्त्या विशेषितं पूर्वापरीभूतमेकमग्निहोत्रादि प्रयोगावच्छेदकं, स तस्य कालो भविष्यतीति । अत्र वैशेषिकादीनिति तेषां मतमादित्यादिक्रियया तदन्वयरहितानामितरेषां कथमवच्छेदसम्भवः । कश्चावच्छेदः न तदनुरक्तबुद्धिवेद्यत्वमतथाप्रतीतेः । सर्व संयोगिनि तु काले सत्येकेन तत्सम्बन्धिना कल्पितावच्छेदकालसम्बन्धिनोऽपरस्या[1]वच्छेदः । किञ्च सूर्यक्रियाणामेवोदेति उदेष्यति उदित इति कालत्रयवर्तित्वं कथम् । अथार्थसदसत्त्वकारितोऽयं प्रत्ययभेदः । तन्न, तयोः स्वविषयज्ञानहेतुत्वात् । तेन वर्तमानस्य रूपं प्रकाशेनावर्तमानस्याभावो बस्त्विदानीमयमित्यसति च भूतो भविष्यति चेति प्रत्ययोऽयमितरावच्छेदकारितः । अन्यथा सूर्यादिक्रियाणामपि किं कालत्वे[2]नार्थवस्तुमात्रालम्बन एव विकल्पवस्तुषु प्रत्ययः । शब्दस्य तु सदसद्विशेषणक्षमवस्तुविषयत्वाद् वर्तमानावर्तमानापदेशेनान्यतरावस्थाज्ञापनम्, तदसत् । असति हि वस्तुविभागे कथं शब्दे विशेषणविशेष्यभावः । यदा ह्यनपेक्षितावच्छेदकत्वं वस्तुमात्रं प्रत्यक्षसिद्धं न तदा सदसद्विशेषणक्षमं [3]साधारणं किञ्चिल्लभ्यते यच्छब्देनालम्बनीक्रियते । तश्च संश्चद् घटः सर्वदा तथा स्यादेवमसत्त्वेऽपीतरावच्छिन्ने वस्तुसत्त्वे कदाचित् सन्न सत् कदाचिदित्युपपद्यते । तथावच्छेद्यांशस्य शब्देनोपात्तस्यावच्छेदकेन विशेषणमभूदस्ति भविष्यतीत्युपकल्प्यते । नित्यतात्वावच्छेदरहितानां तस्य चैकात्मनोऽप्युपाधिभिर्विचित्रीकृतस्य व्यवस्थितोपाध्यवच्छेदेन जिज्ञासितकालपदार्थावच्छेदकत्वमिति । दोहस्यापि क्रियान्तरावच्छेदकत्वेन कालव्यवहारकारित्वात् कथं चन्द्रादित्यक्रियास्वेव कालत्वमित्याशङ्कानिवृत्त्यर्थमुक्तम् शेषक्रिया उपलक्षणीकृत्येति कालोपलक्षणं हि दोहः, न स्वयं कालः । तदेतस्यैव समर्थनं ता एवेति । चन्द्रादीनां

१. °परस्य स्यादव० आ० आ० । २. °त्वेनाथ वस्तुस्वरूपमात्रावलम्बन० आ० मा० ।
३. साधारणमिति पदं नास्ति आ० मा० ।

अनवस्थितमानत्वाद् गोदोहादिषु रूपतः ।
चिह्नं व्यवस्थयेच्छन्ति नित्यं सूर्यादिचेष्टितम् ॥

क्रियता कालेन गौर्दुह्यत इत्युक्ते नियतान्येव मुहूर्तादीनि परिच्छेदकत्वेनोपादीयन्ते । तत्परिच्छेदश्च नाडिकालक्षणलवत्रुटिनिमेषादिभिर्व्यावहारिकक्रियाव्यतिरिक्तैरेव क्रियते । तदभ्यासवशेन तु व्यावहारिकाणामपि प्रायिकपरिमाणज्ञानात्परिच्छेदकत्वं भवति । न च जीवनं नाम निमेषादिवन्नियतपरिमाणं येन परिच्छेदकत्वसामर्थ्यात्कालत्वेनाश्रीयते । तस्माद्व्यतिरिक्तकाललक्षणा दुष्परिहरा । पुनश्चाभ्यासलक्षणा । कथम् ।

**प्रकृतक्रियाणां यावान्तरक्रिया तत्परिमाणेन दोहेनार्थत्वोपलक्ष्यमाणास्तानसामस्त्येन किन्त्ववान्तरक्रियापरिमाणं यत्तेनावच्छिन्ना लक्ष्यन्ते । किमित्येवं कल्प्यत इति चेत्तर्हि तत्राह—अनवस्थितमानत्वादिति । नहि दोहः स्वमहिम्नावच्छेदकः सम्भवति । यतः स्वयमेवासावनवस्थितमानत्वादन्यापेक्षः । नहि क्रियालक्षणयैवास्या नियतक्रियोत्पादकफलेयत्तया वा तस्य [1]स्वरूपतोऽवस्थि(ति)रतः सूर्यादिचेष्टितमेव व्यवस्थितत्वात् तस्य चिह्नं तदुपस्थापनेनैव तस्येतरावच्छेदकत्वमित्यभिप्रायः । सूर्यादिचेष्टितं स्वन्यनिरपेक्षत्वात् कालः । न हि नभस्त्रिंशत् भागातिलंघनमेको मुहूर्तः स्वपरिच्छेदायान्यमपेक्षते व्यवस्थितत्वात् । तथा हि योऽपि तं व्याकरोति असौ तदवयवैर्नाडिकादिभिर्न लौकिकेनेत्याह—तत्परिच्छेदश्चेति । सूर्यादिक्रियावयव एवात्र निमेषादिवदिति तु चक्षुर्व्यापारो वक्ष्यते । एवं क्रियान्तराणां कालोपलक्षणत्वमुक्तम् । एवं सत्यपि तु क्रिया[2]न्तरक्रियायाः प्रायः कालविशेषानुविधायित्वात्तदवच्छेदादेव सिद्धिपरिमाणात् सोपादीयेतापि परिच्छेदाय सापि[3] ह्यन्तर्भावितकालेवावच्छिनत्तीति । तदवान्तरव्यापारत्वेन कालप्रतीतिरङ्गीकर्त्तव्यैव । जीवनं तु स्वतः कालतो वा न व्यवस्थितम्, येन स्वीयमवच्छेदमवच्छेद्यं बोधयेत् । तेनास्यावच्छेदायोग्यत्वात् क्रियावच्छेद[4]समर्थापेक्षितलक्षणाय जीवनं भवति । यावन्तं कालं जीवनमनुवर्तते तावति काल इति व्यतिरिक्तशब्देन नान्तरभावितकालस्य जीवनस्य निमेषादिवदवच्छेदकत्वम् ।**

१. तस्य रूपतोत्पत्तिः । २. क्रियान्तर इति पू० पुस्तके नास्ति ।

३. सापि अस्तु तावत् कालत्वेन परिच्छिनत्ति आ० मा० ।

४. सामर्थ्यापेक्षित आ० मा० ।

न ह्येकेन प्रयोगेण जीवकालोऽवरुध्यते[*]।
विततेनापरिज्ञानादन्यथा वा वृथाश्रुतिः ॥

अनभ्यस्तं प्रयुञ्जानो यदि तावद्विततस्य प्रयुङ्क्ते जीवनपरिमितस्य कालस्यान्तरा किञ्चित्कर्मावयवं यदा कदाचित्कुर्वाणस्ततो मरणस्यानिरूपितकालत्वाद्यदि कथंचिदन्त्यायामवस्थायां समापयेन्न च म्रियेत तदूने काले समापनादयथाचोदितापत्तिः। अथासमाप्य म्रियेत तथापि प्रक्रान्तासमापनं दोषः स्यात्। न च सर्वस्वारवद्वचनमस्ति। येन मृतेऽपि समाप्येत। सायंप्रातश्चोदने[1] च [2]यावज्जीवकाम्यचोदनासमीपाम्नाते सत्यौ विना प्रमाणेन केवलकाम्यविषये कल्पनीये स्यातामस्मिन्पक्षे। यदि तु तदनुरोधेन सकृदेव प्रयुज्योभयं संभावितमिति मन्येत। यथा 'पौर्णमास्यां पौर्णमास्या यजेत' इति चोदिते तदेकदेशकरणेनापि शास्त्रार्थः संभाव्यत इति न व्याप्यते तथा जीवितपरिच्छिन्नकालैकदेशवर्तिनोः सायंप्रातःकालयोरनुष्ठानाच्चोदनाद्वयमप्यनुष्ठितार्थं भविष्यतीति। तत्रोच्यते।

पौर्णमास्यतिरिक्ताहर्व्यवच्छेदफला श्रुतिः।
अव्याप्तावपि तत्र स्यान्न त्विहैवं प्रतीयते ॥

यद्यपि तत्राल्पत्वात्कर्मणः पूर्वाह्णचोदनावशेन पौर्णमासी न व्याप्यते न किञ्चिद् दुष्यति। सर्वथा दिवसान्तराण्यतिक्रम्य पौर्णमास्यां तावत्कृतं कर्म तावन्मात्रं च शास्त्रेणोक्तं न व्याप्तिः। इतरत्र पुनर्जीवितव्यतिरिक्तकालासंभवाद्व्यवच्छेद्यं न किंचिदस्तीति व्याप्तावसत्यां समस्तमेव वाक्यमनर्थकं स्यात्। सायंप्रातश्चोदनयोरपि जीवनकालान्तर्गतेः सिद्धत्वाद्यावच्छब्दश्च समस्तजीवितावधिपरिग्रहार्थ एकदेशानुष्ठाने बाधितः स्यात्। अतः सायंप्रातश्चोदनामिश्रेयमभ्यासमनाक्षिपन्ती न शक्नोति पुरुषं नियोक्तुमित्यपरिहार्या लक्षणा। ननु चार्थादभ्यासो जायमानस्त्वत्पक्षवदेव न दोषं जनयेत्। तथा हि—

किन्तु तदुपलक्षितस्य कालस्यैवेत्युक्तमिति। केवलकाम्यविषयेति। अकाम्यस्य [1]प्रयोगस्याभावात् काम्य एव कालद्वयविधिः पूर्वपक्षे। तत्र [2]यावज्जीविके प्रयोगे सायं प्रातश्चोदनयोः समीपगतयोरप्यस्मिन् पक्षे समवायाभावात् अयावज्जीविके केवलकाम्य[3]प्रयोजनान्तरसम्बन्धिनी ते कल्प्ये स्यातामिति।

१. चोदने चेति काशीमुद्रितपाठः।
२. यावज्जीवमितिलक्षणया इति मुद्रित पुस्तक टिप्पणी पाठः।
१. प्रयोगासम्भवात् आ० मा०। २. यावज्जीविते प्रयोगे आ० मा०।
३. प्रयोगान्तर सम्बन्धि० आ० मा०।

सकृच्चैव श्रुतो होमः क्रियमाणः पुनः पुनः ।
न शब्दे भारमाधत्ते सामर्थ्यारोपितश्रमः ।।

अथ योऽयं मम दोषः स तवापि दोष एव, वक्तव्यो वा विशेषः। उच्यते

मम प्रतिदिनं सर्वश्चोदनार्थः समाप्यते ।
काम्यवच्च पृथक्तेष्टा तव त्वन्ते समाप्यते ।।

मम जीवनसहितसायंप्रातःकालोपजने हि सकलं कर्म कृत्वा निराकाङ्क्षे पुरुषे सति पुनरपि तादृङ्निमित्तसंभवाद् द्वित्रियादिष्वहःस्वनुष्ठानम् । तत्र च प्रतिदिनं[1] कर्मसमाप्तेर्नाभ्यास इति शक्यं वदितुम् । तद्यथा काम्ये यः फलभूमार्थी पुनः पुनः प्रयुङ्क्ते न तस्याभ्यस्तरूपमेतत्कर्मेत्येवं बुद्धिर्जायते तथात्रेति । तव पुनर्जीवितपरिमितकालविधानात्कर्मणोऽपरिसमाप्तस्यैवैन्द्रवायवादिग्रहाभ्यासतुल्यमनुष्ठानम् । तच्चैतद्यावज्जीवचोदनाकृतमित्यापन्नमभ्यासविधानम् । [2]नन्वर्थादभ्यास इति । सत्यमेतत्तेनैव तु लक्षणाऽन्यथा श्रुतिरेव स्यात् । तदुभयतः[3] श्रुत्यनुरोधेन प्रकरणं बाधित्वा जीवनमुद्दिश्य होमयागविधानात्कर्तृकर्मविधिरित्युपपन्नम् ।। २ ।।

अतिपत्तिरिति स्वधर्मातिक्रमोऽभिधीयते । जीवनपरिमितश्च दर्शपूर्णमासयोः कालः । न च तदतिक्रमः कथंचिदपि संभवति । प्रक्रमेण हि कर्मकालं संस्पृशदनतिक्रान्तमित्यभिधीयते । न च कश्चिदपि पूर्णमासयाजी सन्नप्रक्रममाण एव जीवनमतिलङ्घयति । न ह्यसौ दर्शपूर्णमासयाजी स्यात् । अथ स्वकालापरिसमापनमतिपातनमुच्येत तथा मृतस्य तद्भवतीत्यनर्थकमेव प्रायश्चित्तविधानम् । मत्पक्षे हि प्रतिमासं दर्शपूर्णमासप्रक्रमसमाप्त्योर्जीवने निमित्ते विधानात्संभवत्यतिक्रमस्तदुत्तरकालश्च प्रायश्चित्तविषयत्वेन । ननु पूर्वपक्षेऽपि प्रतिमासमभ्यासाभ्युपगमात्तदतिक्रमनिमित्तप्रायश्चित्तविधानं भविष्यति । न शक्यमेवं वदितुम् । यत्र हि निमित्ते यच्चोदितं तेन तत्र भवितव्यं न यथेष्टम् । इह च पौर्णमास्यमावास्यातिपत्तिर्निमित्तत्वेन श्रुता, न चाभ्यासस्तच्छब्दवाच्यः । यथा न ग्रहाभ्यासः कश्चिज्ज्योतिष्टोमशब्दवाच्यः । तेन जीवितपरिमिताभ्याससंयुक्तयोरेव पौर्णमास्यमावास्याशब्दवाच्यत्वमिष्टमिति नावयवानामतिपातनं निमित्तं स्यात् ।

१. प्रतिदिनं समाप्ते इति काशीमुद्रितपाठः ।
२. यत्त्वर्थादभ्यास इति काशीमुद्रितपाठः ।
३. तस्मादुभयतः इति काशीमुद्रितपाठः ।

ननु च पौर्णमास्यमावास्याशब्देनात्र कालोऽभिधीयते, स चावयवविषय एवेत्यवयवातिक्रमो निमित्तं स्यात् । नैतदेवम्, अतिपातनं नामातिपद्यमानस्य भवति । न च कालस्यातिपन्नत्वं धर्मोऽनतिपत्तेरविधानात् । यस्य हि यावान्विषयोऽनतिक्रमणीयत्वेन चोदितस्तस्य तदतिलङ्घनमतिपत्तिरित्युच्यते । न च कालस्य कर्मानतिक्रमणीयत्वेन चोदितं, किं तर्हि, कर्मणः कालः । तस्य हि सोऽङ्गं न तस्य कर्म । तदेव च तत्सद्भावयोः सगुणं निर्गुणं च भवति, न कालः । तदेव चानुष्ठानात्मकत्वादतिक्रमानतिक्रमौ प्रतिपद्येते, न कालः । तस्य स्वभावसिद्धत्वात् । तस्माद्यः पौर्णमासीं स्वं कालमभिपद्यमानामतिपातयेदित्यवधारणात् कर्मण एव निमित्तत्वम् । चावयवस्तच्छब्दवाच्य इत्युक्तम् ॥ ३ ॥

दर्शपूर्णमासाविष्ट्वेति पूर्वेणैव न्यायेनाशेषाभ्यासनिवृत्त्युत्तरकालं सोमयागः स्यात् । न च भूतेनासौ कर्तुं शक्यः । अथ त्वस्ति सोमानुष्ठानकालस्तत एकान्तेनैव दर्शपूर्णमासाभ्यां जीवितकालो नावरोद्धव्यः । स च कर्तृधर्मे पक्षे कर्मप्रयोगभेदान्नावरुध्यते नान्यथा । सूत्रमप्येवमस्ति चेद्दर्शपूर्णमासविनिर्मुक्तः सोमकालस्ततो यथोक्त एव कर्मप्रयोगभेदः स्यात् ।

कालश्चेत्कर्मभेदः स्यादि [ मी० सू० २।४।४। ] त्यस्यापरा व्याख्या । यदि यावज्जीविकः कर्मधर्मकालश्चोद्येत ततो दर्शपूर्णमासमध्य एव सोमोऽन्यानि च कर्माणि कर्तव्यानि स्युः । ततश्च विततस्य कर्मणः[1]कर्मान्तरेणाविच्छेदे सति दर्शपूर्णमासाविष्ट्वेति बाध्येत । अथ वा 'एष स्वर्गाल्लोकाच्छिद्यते एतद्यज्ञश्छिद्यते' इत्येवमादिभिश्च निन्दितमनुष्ठीयेत । तस्मादपि न कालविधानमिति । मुक्तकान्यार्थदर्शनद्वयं पूर्वसूत्रगोचरभूतं दर्शयति । तद्यथा आहिताग्निर्वा एष सन्निति दीक्षितस्य दानादौ निषिद्धे विध्यन्तरशेषभूतः परिवेदनसरूपार्थवादो भवति । एतावन्तं हि कालमसावग्निहोत्रादिदेवताभ्यो भागमदत्त्वा ता अनुध्यायिनीः करोति, नायमस्मभ्यं ददातीत्येवं

मुक्तकान्यार्थदर्शनमिति । उपन्यासकाले कस्यचित् पठितस्य सूत्रस्या[1]र्थे नानभिधानान्मुक्तत्वं यद्यपि सूत्रारूढता करिष्यते मुक्तकाभिधाने च हेतुरुत्तरसूत्रे प्रागुपस्थितस्य सूत्रप्राप्तमुपस्थितस्यैवं शब्देन परामर्शः । पूर्वसूत्रेति । य[2] एतस्योत्तरसूत्रपाठात् प्राग् व्याख्याधिकारः स तस्य गोचरः । तं प्राप्तं केवलं न तु

१. कर्मान्तरेण भेदे सति इति काशीमुद्रितपाठः ।

1. स्यार्थत्वेनानुपन्यासान्मुक्त आ० मा० ।

2. यस्तुतरस्योत्तर० आ० मा० ।

चिन्तायुक्ताः करोतीत्येतन्नियमपक्षे युज्यते। कालविधिपक्षे तु काम्यत्वादग्निहोत्रस्य यथेष्टप्रयोगे सति नियोगतो दातव्याभावादनुध्यायिनीवचनं नोपपद्यते। तस्मादपि नियमवचनम्। एतेन जरामर्यवचनविधानं व्याख्यातम्। काम्यत्वकल्पनायामप्रयोगादपि निर्मोके सति जरामरणनिर्मोकवचनवैयर्थ्यप्रसङ्गः ॥ ४ ॥

यदेतन्मुक्तकमभिहितमेतदेव सूत्रारूढं करोति। नियमपक्षे ह्येतदेवं स्यात्। अनित्यत्वात्तु भवत्पक्षे नैवं स्यात्। अथ वा यावज्जीवशब्देन काले गृह्यमाणे लक्षणादोष उक्तस्तमभ्युपेत्याभिधीयते सत्यामपि लक्षणायामनित्यत्वान्नैवं स्यात्। तन्नाम कालोपलक्षणं युक्तं यन्नित्यं क्रियतापि कालेनाविनाभूतं, यदहश्चन्द्रमा न दृश्यते ताममावास्यां विद्यादित्यादिवत्। न च सर्वप्राणभृतामेव जीवनपरिसमाप्तिर्यतः कुतश्चिद् व्यवस्थितस्वरूपा, यथा कालो लक्ष्येत। तदेतदेवमापद्यते यदैवेदं भवति ततश्चानित्यत्वान्निमित्तमेवैतदिति सिद्धम्। कथं तर्हि नियतनिमित्तत्वान्नित्यमित्युच्यते, यावच्छरीरभावित्वाभिप्रायमेतदित्यदोषः ॥ ५ ॥

नियमः सत्पुरुषधर्मत्वान्नातिदिश्यत इति च वक्ष्यते। कालः सन्नतिदिश्येत। ननु कालोऽपि द्वैयहकाल्यवत्सद्यःकालतया बाध्येत। नैतदेवम्। यावज्जीवं पौर्णमास्यमावास्ययोः सद्यः कुर्यादित्यवधारणप्रसङ्गात् ॥ ६ ॥

कर्तृधर्मपक्षे यदिदं त्वभिमतं याज्जीवमिति कालशास्त्रमिदं निमित्तं भविष्यतीत्येतावत्सूत्रम्। यत्तु भाष्यकारेण व्यपवर्गदर्शनमुक्तं तद्यदि दर्शपूर्णमासाविष्ट्वेत्येतदेवाभिप्रेतं ततः पुनरुक्तम्। अथान्यत्तदप्यनुदाहृतत्वान्न ज्ञायते। तेनानन्तरालोचनयैवं योजयितव्यम्। त्वत्पक्षे विकृतीनामपवर्गः स्यात्। मत्पक्षे तु तासां व्यपवर्गदर्शनं सिद्धान्त उपपत्स्यते। अथ वा तद्गमनसूत्रमेतदिति व्याख्येयम्। अथ वा सूत्रकारेण कर्तृधर्मो नियमोऽ-

त्वदर्थात्मकामिति। तन्नामकालोपलक्षणमिति। यदि शास्त्रे प्रवृत्तिवेलायां किञ्चित्कालं जीवनं प्रतिपादयेत् तदा जीवनलक्षितस्य विधेयान्वयो जीवनं तत् प्रतीतिमात्रोपयोगीति स्यात्। अप्रतीतस्य तु कालविशेषस्य विधेयत्वानुपपत्तिः। अतश्चैवं कालानुप्रवेशो वक्तव्यः, किं तस्य परेण विशेषेण। यदैव जीवनं भवेत्तदैवेति। तत्कालमात्रस्य प्रयोगे प्राप्तत्वात्

यमित्युक्तम् । यावज्जीवशब्दस्य तु का गतिरिति नाभिहितमत आह । एवं सति कालशास्त्रमेव निमित्तं स्यात् । अथ वाऽग्निहोत्रे दर्शपूर्णमासयोस्तावद्यावज्जीवग्रहणात्कर्तृधर्मनियमत्वं भवेत्पशुसामचातुर्मास्येषु तु कथम् । तदुच्यते । तत्रापि वीप्सायुक्तं कालशास्त्रमेव निमित्तं स्यात् 'वसन्ते वसन्ते ज्योतिषा' इत्यादि । न तावदेतत्काम्यस्योपदिश्यते । स हि यावदिच्छमङ्गत्वेनैव स्थितत्वान्नैवं वक्तुं शक्यते । अथापि नैयमिकस्य सकृत्प्रयोगः स्यात्तत्रापि वीप्साऽनर्थिका भवेत् । न च वसन्ते यक्षावधारणा प्रमाणमस्ति । तस्माद्यावज्जीवं ये वसन्तास्तेष्विति विज्ञायते । सप्तम्यपि च 'भिन्ने जुहोति' इत्यादिवन्निमित्तार्थो भविष्यति । तेनोच्यते सर्वत्रैवंजातीयके कर्तृधर्मनियमावधारणात्कालशास्त्रं प्रत्येतव्यम् । एतेनैव पशुचातुर्मास्यादिष्वपि नैयमिकत्वसिद्धिः ॥ ७ ॥

## [ शाखान्तराधिकरणम् ]

उक्तभेदकारणषट्कव्यतिरिक्तकारणनिराकरणार्थमिदमारभ्यते । तत्रैव कानिचित्केनचित्प्रकारान्तरेणाशङ्कय प्रतिषिध्यन्ते । तत्तु प्रत्युदाहणं प्रविविञ्चन्तो[1] योजयिष्यामः । कथं पुनरत्र वेदान्तराणि नोदाह्रियन्ते । केचिदाहुः । शाखान्तरशब्देन तान्यप्युदाहृतानीति, न त्वेतद्युक्तम् । कुतः,

शाखान्तरे यथा कर्म कृत्स्नरूपं प्रतीयते ।
किञ्चिद्गुणसमाम्नानान्नैवं वेदान्तरेषु तत् ॥

**अपरस्य च विशेषस्य जीवनेनानित्यत्वादसमर्पणाज्जीवनसम्बन्ध एव प्रमाणार्थो जीवने सतीति । निमित्तस्य चैतदेव रूपमित्युक्तम् । ततश्चानित्यत्वादिति । ततः पुनरुक्तमिति [मी० सू० ?] । कालश्चेत्कर्मभेदः स्यात् इत्यनेनोक्तत्वादिति ।**

**उक्तभेदकारणषट्केति । यदात्यन्तव्यवहितेषु पाठेनासमाहृतेषु भिन्नसंहितागतेष्वपि वाक्येषु यथोक्तभेदकारणाभावेन कर्मभेदः प्रतिपादितो भवति । तदेभिर्भेदव्याप्तेरवगमितत्वादपरमप्यनुक्तं भेदकारणं कदाचित् स्यादित्याशंका निर्वर्तिता भवतीति । तत्रैव वा कानिचिदिति । तत्रैव षट्के कानिचिद् यानि शाखान्तरेष्वाशङ्क्यते तन्निषेधार्थं चैतदितराभावज्ञानं त्वनुषङ्गतः पूर्वं त्वितराभावे तात्पर्ये षट्कभावसिद्ध्यर्थमाशङ्कितप्रमाणनिरास इत्युक्तमिति । वैश्वानरद्वादशाष्ट-**

---

१. प्रतिषेधयन्तः इति मुद्रितपुस्तकटिप्पणीधृतपाठः ।

यत्र हि कर्म निराकाङ्क्षमाम्नायते तत्र तद्भेदप्रतिप्रत्तिक्षमं भवति। यथा सर्वास्वध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि समस्तद्रव्यदेवतादियुक्तत्वादन्योन्यनिरपेक्षाणि विधीयन्त इति भेदाशङ्कां सहन्ते न त्वेवं वेदान्तरेऽपि। तत्र हि द्रव्यदेवतारहितं कर्ममात्रं प्रस्तुत्य स्तोत्रशस्त्रयाज्यानुवाक्यादिमात्रं विधीयते। न च तावतास्य नैराकाङ्क्ष्यं भवति। दृष्टार्थानामेव द्रव्यदेवतातत्संस्काराणामभावात्। यत्तु तत्र द्रव्यदेवतायुक्तमाम्नायते तस्याध्वर्यवे गुणमात्रविधानात्साकाङ्क्षत्वम्। तथा च वक्ष्यति 'भूयस्त्वेनोभयश्रुति' [ मी० सू० ३।३।१०। ] इति। तस्माच्छाखान्तराण्येवोदाहरणम्। तत्र च नामभेदस्तावत्करणं दृश्यते। तद्यथा काठकेऽग्निहोत्र इदं पठघत इत्यादि। तथा रूपभेद एकादशकपालत्वादि। वैश्वानरद्वादशाष्टत्वादिवदामिक्षावाजिनवच्च न द्वादशत्वैकादशत्वयोरितरेतरसंक्रान्तिरुपपद्यत इति गुण एव भेत्ता। कारीर्यंग्न्यश्वमेधेष्वपि भूमिभोजनोदकुम्भाश्वघासा गुणा एव सन्त इतिकर्तव्यतास्थानीयत्वेन बाह्यतरत्वात्पूर्वस्माद्भेदेनोपात्ताः। [1]परेऽन्यं धर्ममाचरन्तीति विरोधिगुणान्तरप्रदर्शनार्थम्। अश्वघासादेरिति—पञ्चम्यन्तं मध्ये पठितमुभाभ्यां सह संबध्यते। पूर्वेण तावदश्वघासादेरन्यमुत्तरेणाप्यश्वघासादेर्निष्पन्नमुपकारमाकाङ्क्षत्यश्वमेधादिरिति। पुनरुक्तत्वेन पुनः श्रुतिर्भेदिकोक्ता। निन्दायामप्युदितानुदितकालसंयोगभेदाद् गुण एव भेदकः। उदितहोमवादिनो ह्यनुदितहोमं निन्दन्त्यनृतवादित्वेन। 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति ह्यनुदिते सूर्येऽभिधीयमानमनृतं जायते। तस्मादुदितहोमः कर्तव्य इति। इतरे पुनराहुः, यः पूजां पूज्याय प्रथममेव गृहीत्वोत्तिष्ठते स साधुः। यस्त्वतिक्रान्तं व्याहृत्य पूजयति नासौ सम्यक्पूजकः। तस्मादनुदितहोम एव कर्तव्य इति। तत्रैकत्वे विप्रतिषिद्धधर्मसमवायप्रसङ्गः। नानात्वे तु न कश्चिद्विरोधः। अशक्तिद्वारेणापि गुण एवोपन्यस्तः शाखान्तरीयाणां गुणानामेककर्मण्युपसंहाराशक्तेरपूर्वसंयोगः। समाप्तिभेदोऽपि गुण एव। निन्दया गतार्थोऽपि सन्प्रायश्चित्तभेदः पुनरुपन्यस्यते। कदाचिदत्र वैकल्पिकत्वपरिहारं ब्रूयात्तत्त्वभ्युपेत्योच्यते। वैकल्पिकेषु ह्युभयथाऽप्यवैगुण्यं भवति। अत्र च प्रायश्चित्तविधानादुभयत्रापि वैगुण्यं दृश्यते।

---

१. अपरेऽन्यं इति काशीमुद्रितपाठः।

न च तत्कर्मैकत्वे घटते। तस्मादपि भेदः। परिहारसूत्रवशेन पञ्चान्यार्थदर्शनान्युच्यन्ते। यदि पुरा दीक्षितवन्तस्ततो बृहत्सामानमतिरात्रमुपेयुः। पूर्वदीक्षायां रथन्तरस्य प्रयुक्तत्वात्। अथ न दीक्षितवन्तस्ततो रथन्तरसामानमेवोपेयुरिति। द्वादशाहेऽनिष्टप्रथमयज्ञत्वं कर्मभेदे भवति। ताण्डकवचनेन ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति एतच्छाखागतस्यानियमात्। एकत्वे तु सर्वशाखास्थज्योतिष्टोमप्राथम्यनियमाददीक्षितानां दर्शनं न स्यात्। तथा यूपैकादशिन्यां पक्षवेदिसंमानयोरर्थप्राप्तयोरेकं निन्दित्वेतरपरिग्रहो वचनान्तरप्राप्त्यसत्त्वं द्योतयति। वचनान्तरे हि किमेकस्य निन्दया, किं वेतरस्य स्फुटविधाने सति स्तुत्या। तस्मान्नूनं शाखान्तरीयो रथाक्षमात्रान्तरालविधिरेषां नास्ति। ततश्च कर्मभेद इति। द्वे स्तोत्रीये [1]विराजं दशकमतिरिच्येते इति तिस्रोऽतिरिच्यन्त इति च ज्योतिष्टोमातिरात्रैकत्वे सति उपपन्नम्। भेदे तु यथाविधि भवतीत्यविरोधः। पुरोडाशिसांनाय्यिदर्शनं दीक्षितादीक्षितसंदर्शनेनैव गतं परिहारप्रकारान्तरत्वादुदाहृतम्। किञ्च

पृष्ठद्वयविकल्पः स्याच्छाखान्तरविधानतः।
स च प्रकृतितः प्राप्तः कर्मैकत्वे वृथा भवेत्॥

उपहव्यभेदे तु नियमार्थायां पुनः श्रुतावर्थवत्ता। तस्मादपि कर्मभेदः ॥ ८॥

सर्वत्र प्रत्यभिज्ञानात्संज्ञारूपगुणादिभिः।
एककर्मत्वविज्ञानं न शाखास्वपगच्छति॥

सर्वब्राह्मणप्रत्ययमिति—एकस्यामपि शाखायां ब्राह्मणानेकत्वेऽपि तदेकं कर्मेत्यभिप्रायः। तद्यथोद्गातॄणां पञ्चविंशषड्विंशब्राह्मणयोर्ज्योतिष्टोमद्वादशाहौ। संयोग इति प्राधान्यात्फलसंयोगग्रहणम्। रूपमिति—प्रत्यासत्तेर्द्रव्यदेवतम्। चोदनेति–सर्वधात्वर्थभावनाविषयो विधिः। ज्योतिष्टोमादि नामधेयं च सर्वशाखास्वविशिष्टं दृश्यते। तस्मादियत्तः प्रत्यभिज्ञानकारणत्वादिवदिति। वैधर्म्यनिदर्शनमिदम्। यथा द्वादशाष्टत्वाद्योरविरोधेनान्वयो नैवमत्र साधर्म्यनिदर्शनमभिप्रेतेति। तत्र यथा नान्वय एवमत्रापीति। सर्वधात्वर्थभावनाविषय इति। तेनैव यज्यादिना धातुनावगमितेन तथाविधेनैव धात्वर्थेनावच्छिन्नं तथाविधमेव व्यापारविधिर्विदधात्यतो नास्ति शब्दान्तरनिमित्तमप्रत्यभिज्ञानमिति।

1. वैराजमिति मुद्रितपुस्तकटिप्पणीधृतपाठः।

कलापादभेदसिद्धिः [१]। न चान्यः कश्चिद् भेदहेतुरस्ति । प्रकरणान्तरवच्छाखान्तरेषु परस्परासंनिधानमिति चेन्न । तेनैवेतराग्रहणात् । येन हि किञ्चित्कर्म गृहीतं भवति स एव तत्सदृशमन्यत्रोप[१]लभमानः शक्नोति ततोऽन्यदेतदित्यध्यवसातुम् । एकशाखाविषये च सर्वशाखाध्ययनादेवं भवति । शाखान्तरे पुनरन्यशाखागतज्योतिष्टोमाद्यनवबोधादपूर्ववदुच्यमानेषु न भेदबुद्धिर्जायते । यस्तर्हि द्वे शाखे पठति तस्य प्रकरणान्तरन्यायेन भवितव्यमेकशाखागतेषु च ब्राह्मणान्तरेषु । नैष दोषः । शाखान्तराध्ययनं तावदेकस्य पुंसो नैवेष्यते । किं कारणम् ।

स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते ।
एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति ॥

यथैवाकृतिः प्रतिव्यक्ति समवैति तथैव स्वाध्यायत्वमेकैकस्यां शाखायाम् । अतश्च 'स्वाध्यायोऽध्येतव्य' इति कर्मावबोधनं प्रत्युपादीयमानत्वाद्विवक्षितैकसंख्यैका शाखाऽध्येतव्या । नन्वेवं वेदान्तरस्याप्यध्ययनं न प्रसज्यते । न, वचनान्तरेण प्रतिप्रसवात् 'अनया त्रय्या विद्यया' इति । तथा 'वेदानधीत्य वेदौ वा' [ मनुस्मृतिः ३-२ ] इति मानवम् । साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारितः समुच्चयोऽवगम्यते । शाखान्तरेषु त्वन्योन्यनिरपेक्षस्वतन्त्रज्योतिष्टोमादिरूपप्रतीतेस्तुल्यार्थत्वनिमित्तो विकल्पः । साकाङ्क्षत्वादेव चैकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम् । नन्वेककर्मत्वाद्वि-

तेनैवेतराग्रहणादिति । **एकैका शाखा प्रतिपुरुषं स्वाध्यायविधिना प्रमाणीकृता । तदीयात् वाक्यात् कर्म प्रतिपाद्य पुनस्तदीयादेवात्मानं प्रति प्रमाणभूतात् प्रतिपद्यमानः पूर्वप्रतीतात् कर्मान्तरं तदेव वा गुणाभ्यधिकं प्रत्येतुं शक्नोति । अन्यथा [१]वाक्यस्याप्रामाण्यप्रसङ्गात् ।**

**[२]ननु कर्मरूपमात्रे श्रुते भेदाभेदौ शाखान्तरीयं त्वनधीतं न प्रतिपद्यत एव । प्रतिपन्नमपि तदात्मानं प्रत्यनुपयुक्तं पश्यन् न वाक्यतात्पर्यविशेषणभेदाभेदौ प्रतिपद्यते । किन्तु प्रमेयानुवृत्तिव्यावृत्तिभ्याम् । तेनाग्निहोत्रं दर्शपूर्णमासाभ्यां शाखान्तरीयाभ्यां भिद्यते नाग्निहोत्रादिति सिद्ध्यति । प्रमाणभूतात् ग्रहणस्याभावमभिप्रेत्येतराग्रहणादित्यपूर्ववदुच्यमानेष्विति चोक्तम् । प्रमाणभावश्च निराकृतो नैष दोष इत्यादिना ।**

---

१. लभ्यमानः इति काशीमुद्रितपाठः ।

१. चान्यतरस्या आ० मा० ।

२. न तु कर्मरूपमात्रेणानाश्रितभेदाद्भेदः शाखान्तरात् त्वनधीतम् आ० मा० ।

कल्पो विकल्पाच्चैककर्मत्वमितीतरेतराश्रयत्वं भवेत्। न, प्रत्यभिज्ञानमात्रेणैकत्वे विज्ञाते संख्यावशेन विकल्पसिद्धेः। अतश्च यो नामातिमेधावित्वादेकवेदगतानि शाखान्तराण्यप्यधीते स समृद्धः सन् व्रीहियवैरपि मिश्रैर्यजेत्। तस्मादेकं कर्मेति। ९।

यद्यपि तावत्काठकादिकं नामधेयं स्यात्तथाप्युत्पत्तिसंयोगाभावान्नैव भिन्द्यात्। इदं तु नैव कर्मनामधेयम्। अन्यायो ह्यनेकार्थत्वमित्यनेन न्यायेन ग्रन्थनामत्वे सति कर्मणि लक्षणयैव प्रयोगापपत्तेः। कथं पुनरवगम्यते [1]ग्रन्थ नामैतत्कर्मण्युपचर्यते न पुनर्विपर्यय इति। तदुच्यते—

शाखया ह्येकया योगाद् बहुकर्मविबोधनम्।
युज्यते कर्मनानात्वान्नैकशाखोपलक्षणम्॥

काठकादिशब्दो हि परस्परासंबद्धेषु बहुषु कर्मसु प्रयुज्यते। स यदि कर्मनाम स्यात्कर्मान्तरे न प्रयुज्येत। न हि तत्र लक्षणोपपद्यते। संबन्धाभावात्। सर्वाभिधानं तु व्यक्तिवद् दुरुपपादम्। तस्माच्छाखयैव कर्माणि लक्ष्यन्ते न कर्मभिः शाखाः। ततश्च संज्ञया कामं शाखा एव भिद्यन्तां न कर्माणि। संबन्धाभावात्। तस्मात्तान्येवाग्निहोत्रादीनि संबन्धिभेदादन्यथान्यथा च व्यपदिश्यन्ते॥ १०॥

प्रायेण हेतुविपर्यये कार्यविपर्ययो दृश्यत इति काठकादिसंज्ञैकत्वादेकशाखाधीताग्निहोत्रादेरेकत्वप्रसङ्गः। साध्यव्यभिचारित्वादियमर्थापत्तिसमा नाम जातिः, पूर्वपक्षहेतोरसिद्धत्वोपालम्भप्रदर्शनार्थमेवाभिहिता। सर्वत्र च दुष्टे पूर्वपक्षे जातीनामुत्त[2]रत्वं केषांचिदिष्टम्। ११।

ततश्च द्वयोः शाखयोरध्ययनमेव नास्ति कुतो द्वयोः सकाशात् प्रतीतिरध्ययने च द्वयोरेकान्तं प्रत्यनर्थिकैवाङ्गीकृता कुतस्तदर्थवत्त्वाय भेद इत्यत उक्तम्—यो नामातिमेधावित्वादिति। प्रत्यभिज्ञानमात्रेणेति। यदि विकल्पासिद्धावभेदप्रतीत्यनुदयस्तदा स्यादितरेतराश्रयम्। स तु प्रत्यभिज्ञानादेव विकल्पहेतुरभेदः सिद्धः। स तु शाखान्तरसमुच्चये तदर्थवत्त्वाय बाध्येत। विवक्षितैकसंख्यान्वयेन तद्बाधात् विकल्प एव शाखयोरिति।

साध्यव्यभिचारादिति हेतुविपर्ययः कर्मव्यतिरेकं साध्यं व्यभिचरति नहि धूमविपर्ययतोऽग्निविपर्ययः। तेन साधर्म्यवैधर्म्याभ्यां प्रत्य-

१. यथा ग्रन्थनामै० इति काशीमुद्रितपाठः।
२. °मुत्तरत्वमिष्टम् इति काशीमुद्रितपाठः।

कृत्रिमं काठकाद्युक्तमाख्या[1]प्रवचनादिति ।
न वाऽनादीनि भिद्यन्ते कर्माण्यादिमता सता ॥

यद्यपि काठकादेर्जातेर्नित्यत्वान्नित्यैवाख्या तथापि प्रवचननिमित्तेयं स्मर्यते न च कर्माणि प्रोच्यन्ते । शब्दविषयत्वात्प्रवचनस्य । तस्मादपि न संज्ञया कर्मभेद इति । १२ ।

न च कपालसंख्याभेदाद्भेदः । तत्संबन्धिद्वारभेदानभ्युपगमात् । तस्मादेकस्मिन्नेव कर्मणि साधनविकल्पो भविष्यति । ननु चोत्पत्तिवाक्य-शिष्टत्वाद्विकल्पो नास्तीत्युक्तम् । नैष दोषः । उभयोरुत्पत्तिवाक्यशिष्टत्वा-विशेषेण तुल्यबलत्वात् । कथं पुनरनेकवाक्योत्पादितस्यैकत्वं विज्ञायत इति । तस्योत्तरसूत्रे परिहारं वक्ष्यामः । १३ । । १४ ।

अनुभाषणसूत्रमेतत् । अथ वा पुनरुक्तत्वपरिहारार्थमेवैतत् । पुनः-श्रुतेरर्थवादगुणार्थत्वेनान्यार्थत्वात् । १५ ।

द्वितीयव्याख्याने परिहारान्तरनिवृत्त्यर्थो वाशब्दः । तत्रान्यार्था पुनः श्रुतिर्भवति यत्र तावन्मात्रमेव श्रूयते यत्र चैकवाक्यगतं विधेयान्तरं विद्यते । न त्विह तदेकमपि । समस्तेतिकर्तव्यतोपेतप्रधानपुनःश्रुतिश्रवणात् । एतमेव श्रुति-संयोगाविशेषं मन्यते । न चैषा पुनःश्रुतिः । कुतः ।

एकशाखानिबद्धानां ज्ञायते हि पुनः श्रुतिः ।
कठादिचरणानां तु प्रतिशाखं सकृच्छ्रुतिः ॥

पूर्वोक्तेन शाखाध्ययनविकल्पेन येन काठकमग्निहोत्रं श्रुतं नासौ कदा-चित्तैत्तिरीयकं शृणोति । शृण्वन्नपि वा स्वशाखयैव प्रतिपन्नत्वात्तैत्तिरीयकप्रति-

वस्थानं जातिरित्येवं लक्षिता वैधर्म्यप्रत्यवस्थानात्मिका जातिरेषा । सा [1]चार्थापत्त्याभासात्मिकार्थापत्तिसमा नामेति । तत्सम्बन्धिद्वारेति । व्रीहि साधनके कर्मणि नीवारोपादाने कर्मभेदस्यान[2]भ्युपगम इति । एवं शाखा-नामध्ययनविकल्पेन तासामपौनरुक्त्यमुक्तम् । अङ्गीकृत्यापि समुच्चय-मुच्यते । न च तत्र पौर्वापर्यमिति । विहितस्य विध्यसम्भवात् विधीनाम-विहितविषयत्वम् । तत्र पौर्वापर्ये सत्युत्तरविधिः पूर्वविधिविषयादर्थान्तरविष-यत्वे भवतीति भेदकत्वम् । यौगपद्ये तु सर्वेषामेकविषयत्वेऽपि अव्यवहित-विषयत्वोपपत्तेर्न प्रमाणशक्तितो भेदो न चानर्थक्यमात्रं प्रमाणमिति ।

१. मी० सू० १-१-३०

१. चार्थावगत्या आ० मा० । २. °स्यानङ्गीकरणादिति आ० मा० ।

पत्त्यर्थमेवैतदिति कल्पयित्वा न पुनःश्रुतिं मन्यते। एवमितरोऽपीतरदिति सर्व एवैकश्रुतिसंयोगाविशेषादग्निहोत्रादि प्रतिपद्यन्ते। न च तत्र पौर्वापर्यमस्ति येन ज्ञायेतानया शाखया प्रथमं विहिते शाखान्तरीये पुनःश्रुतिर्भूत्वा भेत्स्यतीति। आह च

शाखानां युगपद् वृत्तेर्न पुनःश्रुतिकल्पना।
न हि तत्रैकशाखावत्क्रमेणाध्ययनं स्थितम्॥

तस्माद्यथैकशाखा[1]कर्म देशान्तरपुरुषान्तरादिषु पुनः श्रूयमाणमपि प्रतिपाद्यभेदान्न पुनरुक्तं भवत्येवं शाखान्तरेष्विति।

ननु चैकयापि शाखया समस्तपुरुषप्रतिपादने सति, अनर्थकमेव शाखान्तरम्। नानर्थकम्। न हि कश्चिद् द्वे शाखे अधीते। न च पुरुषान्तरगतं तत्प्रतिपादनेनार्थवदन्यान् प्रत्यनर्थकं भवति। यस्तु तेऽपि किल शाखिनस्तामेवाधीत्य प्रतिपत्स्यन्त इत्यभिप्रायः, स नित्यत्वाद्वेदस्य तदध्ययनाध्यापनसंबन्धानादित्वादनुपपन्नः। किञ्च

संप्रदायागतां मुक्त्वा स्वां समाख्यानिबन्धिनीम्।
शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे॥

तस्मात्परकीयशाखाध्ययनेऽप्यस्त्येव पुरुषाणां श्रम इति यथावस्थितशाखाध्ययनमेव। न च वेदः पुनरुक्तादिदोषद्वारं पर्यनुयोगमर्हति। १६।

अत्रान्तरे भाष्यकारस्य सूत्रं भ्रष्टम् 'वाक्यासमवायात्' [ मी० सू० २।४।१७। ] इति। तदेवं व्याख्येयम्। नैकस्मिन् पुरुषे शाखान्तरवाक्यं समवैति। १७।

एकस्य वेदवृक्षस्य किञ्चित्कर्म फलाश्रयात्।
एवं शाखाः प्रसिध्यन्ति बहुशाखैकवृक्षवत्॥

एकस्य वेदवृक्षस्येति। एवं कर्मैकत्वे सत्येको वेदवृक्षस्तस्य च शाखाः प्रसिद्ध्यन्ति। यदाध्वर्यवं कर्म ज्योतिष्टोमादि तत्सर्वास्वध्वर्युशाखासु प्रतिपाद्यते।

ततश्चैकेनोपाधिना तासामेकत्वम्। वृक्ष इव शाखानां मूलेनैकेन। तथा प्रतिशाखमिति कर्तव्यतानां किञ्चिदन्यत्वम्। यावत्कर्मसम्बन्धीति कर्तव्यताजातं तत् सामस्त्येन प्रतिशाखं न लभ्यते समस्तासूपलभ्यते यथा

---

१. एकशाखायां कर्मेति मुद्रितपुस्तकटिप्पणीधृतपाठः।

यदि प्रतिशाखं कर्मभेदः स्यात्तत एकमूलाभावादादित एवारभ्य भिद्यमानत्वात्समस्तकर्मशाखग्रपुष्पफलान्तरत्वाद् वृक्षान्तरवद्वेदान्तराण्येवोच्येरन् । न शाखान्तराणि । एककर्ममूलविधिस्कन्धरूपत्वे सतीतिकर्तव्यतायाः क्वचित् किञ्चिदधिकमित्यालोच्य सारूप्यादुपपन्नः शाखान्तरभेदव्यपदेशः । अथ वा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्तता भवति, यत्र पूर्वोक्तोऽर्थस्तस्यैव पुंसः सन्निहितो भवति । न त्विह शाखान्तरगतस्य संन्निधानमित्यपुनरुक्तता । १८ ।

अभ्युपेत्यवादोऽयम् । सत्यपि कर्मभेदे ये तावद्वाक्यसंयुक्ताः शेषास्तेऽग्निहोत्रादिमात्रोद्देशेन विधीयमानाः सर्वार्थत्वेन ज्ञायन्त इत्यवश्योपादातव्या इति, नैव शाखामात्रपरितोषव्यवस्था लभ्यते । न च सूत्रकाराणामपि कश्चित्स्वशाखोपसंहारमात्रेणावस्थितो येन प्रतिशाखं कर्मव्यवस्था समर्थ्येत । प्रधानान्यपि प्राधान्येन यजमाननियमं प्रति, अप्रभवन्तीभिः समाख्याभि[1]रर्थिमात्रमुद्दिश्य विधीयमानानि सर्वशाखागतान्येकैकं पुरुषमुपतिष्ठन्ते । तत्रैकफलत्वा[2]दसमुच्चये येन केनचित्साध्यमाने फलेऽन्येषां वैयर्थ्यंप्रसङ्गः । अथ तेषां विकल्पेनार्थवत्त्वं, तद्वरं शाखान्तराणामेव व्यवस्थितप्रति[3]पद्यमानानामनाकुलतरं परिकल्पितमित्यपुनरुक्तता । १९ ।

असमाप्तिवदिति. वा छेदः । कर्मभेदपक्षे हि यावदेव येषां समाम्नानं तावदेव तेषां समाप्यंत इति न ब्रूयुरत्रास्माकं न समाप्यत इति । अन्वारोहा

वृक्षशाखानां पुष्पफलं प्रतिशाखं भिद्यते येन तु मूलेनैकेन तासां वृक्षत्वं तदाश्रयणं यावत् तत्रासां सामस्त्येन लभ्यते । तदनेन सादृश्येन कर्मैकत्वेऽनेकशाख एको वेदो वृक्ष इति रूप्यते । शाखाश्च शाखा इति । कर्मभेदे तु एकस्योपाधेः शाखानामभावात् नानेकशाखा एको वृक्षः प्रतिशाखमेव तु वृक्षत्वे वेदस्य वनत्वञ्च स्यात् । वृक्षमूलाश्रितः शाखानामुपक्रमः स्कन्धः । स च कर्माश्रितत्वात् इतिकर्त्तव्यताप्रतिपादनोपक्रमाच्च प्रधानविधिरेवोक्त इति [1]व्यवस्था लभ्यत इति । ततश्चाशक्तिदोषः समान इति । असमाप्तिवदिति वेति । न चैकं प्रति शिष्यते समाप्तिवदिति । सूत्र संहितापाठेऽयमपि च्छेदः सम्भवतीति । ततः शक्त्यशक्तीति । सर्वशाखाप्रत्ययकर्मणि अशक्तिरित्येवं न व्यवस्थिते किन्तु अवशिष्टे शक्तिश्चेत्सर्वत्र

---

१. अर्थमात्रमिति काशीमुद्रितपाठः ।

२. °दसति समुच्चये इति काशीमुद्रितपाठः ।

३. °प्रतिपाद्यानामना° इति काशीमुद्रितपाठः ।

१. अवस्थोपादातव्येति आ० मा० । अत्र ग्रन्थपातः ततश्चेत्यारभ्य वदिति चेदिति यावत् आ० मा० ।

नाम स्थलारोहणमन्त्राः । तेषु मैत्रायणीयानां समाप्यते नास्माकमित्यभिधानाद-ध्येतॄणामपि कर्मैकत्वं प्रसिद्धमित्यवसीयते । २० ।

अन्योन्यनिन्दयेतरेतरविधाने तुल्यार्थयोरुदितानुदितत्वयोः कर्मणि विकल्पो भविष्यति । त्वत्पक्षेऽपि चासौ कर्मणोः फलं प्रत्यविशिष्टः । तथा शक्त्यशक्ती सर्वपुरुषाणामव्यवस्थिते । सर्वशाखास्वधिकविधावेकशाखायां च स्तोकान्तरत्वादविशिष्टे । केचिच्चात्र लाघवार्थिन एवं वर्णयन्ति । य एवं किल वाक्यसंयुक्ताः शाखान्तरविधयस्त एव संकीर्यन्ते । ये तु प्राकरणिकास्तेषां व्यवस्थैवेति । कुतः

एककर्मगताः पुंसां विकल्पन्ते विधायकाः ।
तत्समीपसमाम्नातं ग्राह्यं प्रकरणस्य च ॥

शाखान्तरेषु विकल्पमानेषु यथैव प्रधानं विधीयतेऽर्थिनस्तदीयः कथंभाव-स्तामेव व्याप्नोति न शाखान्तराणि । अतश्चान्यगता गुणाः कथंभावेन नापेक्षिताः प्रयोगवचनेनानुपसंहृता नाङ्गं भवन्तीति नानुष्ठेयाः । ततश्च वाक्यसंयुक्तानामल्पत्वाद्विधीयमानानामस्त्युपसंहरणशक्तिरिति । न त्वेतद्युक्त-मिव । तथा हि—

शाखान्तरगतस्यापि यदङ्गं कर्मणः स्थितम् ।
तस्यान्यत्रापि तादर्थ्यं प्राप्तं केन निवार्यते ॥

**न चेन्नैकताप्यत्र हेतुः स्तोकान्तरत्वादिति । एककर्मगतः प्रसरति । प्रयोगविधिसाङ्गप्रधानविषयः कानिचित् स्वीयेन कथंभावेन अङ्गतां नयति । कानिचछ्रुत्यादिभिरङ्गत्वेनोपनीतानि उपसंहरति—अत्रोत्तराणि अविशेषवचनासाधारणानि पूर्वाणि तु शाखान्तरीयसान्निध्यपठितानि, न तेन स्वयमङ्गीक्रियते नान्यव्यापारापेक्षिणोपसंह्रियन्ते तयोर्वैकल्पिकत्वात् प्रामाण्यस्येति । शाखान्तरगतस्यापीति । एकप्रयोगवचनोत्थेन कथंभावेन तत्सन्निधिपठितानि कर्माण्यस्याङ्गमिति ज्ञाप्यन्ते । प्रयोगवचनान्तरेणापि साङ्गं कर्म कुर्यादिति विधीयते । ततश्चाङ्गानि चेत्तस्य तानि[1]कृत एव तेषामुपसंहारः । प्रमेयद्वारो ह्यत्र प्रमाणयोरन्वयोऽतः पाठप्रत्यासत्तिः कृतः । तत्रेतरप्रमेयस्य प्रयोगस्येतरत्र तुल्यार्थत्वात् उपेक्षा अङ्गाङ्गि-**

१. कुत एव आ० मा० ।

प्रतिवेदमपि त्र प्रकरणं पुरुषस्य धर्मानुपदिशति। न च तद्वेदान्तरस्थं प्रत्यप्रमाणम्, तथा शाखान्तरेऽपि द्रष्टव्यम्। कर्मधर्माश्चैते विज्ञायन्ते। तच्च कर्म शाखान्तरेष्वपि तदेवेत्यङ्गत्वाविशेषः। यद्यपि प्रकरणरूपमन्यत्तथापि शाखान्तरस्थेनानेनैतेऽपि धर्मा गृहीता इत्यवधारणान्न स्वप्रकरणगृहीतेभ्यो विशिष्यन्ते। सर्वास्वपि च शाखास्वधिकविधयो न कथंचिच्छाखया परिमिता भवन्तीत्यल्प एवायास इति नाशक्तिः। समाप्ति[1]श्चाधीतापेक्षयोपपन्नत्वान्न भेदं कल्पयति। २१।

अनुभाषणसूत्रं सामान्यपरिहारसूत्रं वा। २२।

वैकल्पिकानामादित एवाङ्गीकरणादाश्रितक्रमातिक्रमे प्रायश्चित्तविधिरुपपत्स्यते। २३।

एकत्वेऽपि समाप्तिर्लिङ्गत्वेनोक्ता। 'समाप्तिवच्च संप्रेक्षा' [ मी० सू० २।४।२०। ] इति समाप्तिवचनं नानात्वेऽपि। तत्र [2]न्यायानुसारित्वादेकत्वस्यैव साधिका। तद्वचनस्येथमुपपत्तिः पूर्ववत्त्वादिति, आरम्भापेक्षत्वात्। अथ वा शब्दप्रयोगस्य प्रसिद्धिपूर्वकत्वाद्यादृशीं वयं समाप्तिं पश्यामस्तादृश्यामयं प्रयुक्त इति निश्चिनुमः। स च वस्तुन्यसमाप्तेऽपि तच्छाखाविज्ञेयपदार्थसमाप्तौ प्रयुक्त इति दृश्यते। तस्मादविरोधः। २४।

भावस्त्वपेक्षितो गृह्यते। स एवं प्रतिवेदं विद्यमानेषु प्रयोगवचनेषु अङ्गीकृते न्याय इत्याह—प्रतिवेदमिति। एकत्वेऽपि समाप्तिरिति। अस्माकं समाप्यते नान्येषामित्यापेक्षिकत्वम् समाप्तेरेकत्वे लिङ्गभेदे तस्या आपेक्षिकत्वानुपपत्तेः भेदो नानात्वस्य तत्र न्यायानुसारित्वात् समाप्तेर्यथान्यायं नेतव्यत्वादस्मत्[1] पक्षस्यैव साधिकेति नः प्रतिज्ञातमेतस्य प्रतिज्ञावचनस्येयं सूत्रोक्तोपपत्तिः। स हि न्यायो यदुपक्रमपूर्विका समाप्तिः यदुपक्रान्तं तद्विषयिणीति। अथवायं न्यायो लौकिकः शब्दप्रयोगः प्रमाणान्तरपूर्वकत्वात् यथा[2]प्रमाणान्तरमिति। इह तु वेदे सम्मानस्येति। यथा न ग्राम्यान् पशून् हिनस्ति इत्यादिका जर्तिलहोमस्तुतिः अयज्ञिया वै जर्तिलाश्चेत्यादि पयो होमस्तुतिः शेषान्तां नीता नैव वेदिसम्मानस्य तत्कल्पनायाः स्तुतिविषयविधिकल्पनैव सन्निकृष्टा सर्वत्रैव स्तुतितो विधिप्रतीतेः।

---

१. °श्च स्वाधीतापेक्षयेति काशीमुद्रितपुस्तकटिप्पणीधृतपाठः।

२. प्रत्ययानुसारित्वात् इति काशीमुद्रितपाठः।

१. पक्षस्यैवेत्यनन्तरं ग्रन्थपातोऽत्र समाप्तिः यदुपक्रान्तमिति यावत् आ० मा०।

२. यथेत्यनन्तरं ग्रन्थपातोऽत्र ग्राम्यान् इति यावत्।

अदीक्षितदर्शनं द्वादशाहे तत्राप्यनुपपन्नम् । ताण्डके सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात् । न हि तत्रापरस्यापि ज्योतिष्टोमस्योत्पत्तिरस्ति यस्य नियमः स्यात् । अत आध्वर्यवाणामेव नियमे, उभयपक्षे समे च दोषे सति उभाभ्यामेषोऽर्थो वर्णनीयः, यदि द्वादशाहेन पुरा दिदीक्षाणा अदिदीक्षाणा वेति । तस्मादविशिष्टमेतत् । २५ ।

अथ यदुक्तमेकादशिन्यां पक्षवेदिसंमानदर्शनं न स्यादिति । तत्र ब्रूमः ।

अन्यथापि तु नैवास्ति पक्षवेद्यादिमानता ।
एकादशिन्यभावेन स्तू[1]यते त्वेकयूपता ॥

एकयूप एकादश पशव इत्यस्य विधेः शेषोऽयं यत्पक्षसंमितामित्यादि । एकादशिन्यां हि सत्यामन्यतरसंमानाश्रयणात्क्लेशो भवेत् । तस्मादेकयूप एव वरमिति । पक्षसंमानं तावदत्यन्ताप्राप्तमेवेति नित्यानुवादः । वेदिसंमानोपदेशोऽपि प्रशंसारूपेणैकयूपप्रशस्ततरत्वज्ञापनार्थः । रथाक्षमात्रान्तरालता च यत्रैकादशिनी विहिता तत्र भविष्यतीत्यविरोधः । इह तु वेदिसंमानस्य प्रशंसया विधेयत्वप्रतीतेरशक्यमन्यस्तुत्यर्थत्वं कल्पयितुम् । अतः पक्षसंमानस्याप्राप्तस्यैव वेदिसंमानस्तुत्यर्थो नित्यानुवाद इति समर्थयितव्यम् । प्राकरणिकत्वाच्चास्यैवाग्नौ बलीयस्त्वमित्यनारभ्याधीतो रथाक्षमात्रान्तरालविधिस्तद्विनिर्मुक्ता विकृतीर्गमिष्यति । सूत्रमप्येवं नेयम् । यदि हि द्रव्ये वेदिसंमानं न चोद्येत ततोऽर्थानां पक्षसंमानादिविधीनामव्यवस्था स्यात् । स च रथान्तरालत्वेन बाध्येत, न त्वेवमस्तीत्यविरोधः । २६ ।

वैकल्पिके षोडशिन्यगृह्यमाणे द्वयोरतिरेकः । क्रियमाणे त्वेकविंशतिप्रचयादृग्द्वयादेकातिरेकेण तिस्रो भवन्ति । तस्मादविरोधः ॥ २७ ॥

सारस्वते हि द्वादशाहन्यायेनैवोभयोः पक्षयोर्ज्योतिष्टोमपूर्वकत्वादवश्यमेवं वक्तव्यम् । यदा पुरोडाशिनः पौर्णमासीपक्षे तदोपवसन्ति, यदा सानांय्यिनोऽमावास्यापक्षे तदा वत्सानपाकुर्वन्तीति । भवति हि कालभेदादपि कर्तृभेदोपचारस्तस्मादप्यदोषः ॥ २८ ॥

अनुभाषणं सामान्यपरिहारो वा । २९ ।

---

१. श्रूयते इति काशीमुद्रितपुस्तकटिप्पणीधृतपाठः ।

संस्थाव्यवस्थार्था वा बृहद्रथन्तरयोः पुनःश्रुतिर्भविष्यति ॥ ३० ॥

शाखान्तरविहितप्रयाजानुवादेन सह होमं वदन्नन्यशाखाधीतं च 'कुटरुरसि' इति मन्त्रमश्मादाने विदधत्सर्वशाखाप्रत्ययत्वं दर्शयति ॥ ३१ ॥

प्रतिशाखं वा विधिपृथक्त्वं व्यवतिष्ठेत । तथा सति हि
क्रमभेदं न यास्यन्ति स्वशाखाविहिताः क्रियाः ।
परिमाणं च तद्वर्ति नान्यत्वं प्रतिपत्स्यते ॥ ३२ ॥

यत्र स्मार्ताः पदार्था न क्रमकालपरिमाणानुरोधेन बाधितास्तत्र श्रौता बाधिष्यन्त इति । कुत एतत् ? तेनैव गतत्वादवाच्यमिति चेन्न । सूत्रकारस्यात्रैव प्रथमाभिधानात् । तत्र हि कारणाग्रहणमात्रमुपपत्तिरुक्ता । शेषं त्विह सिद्धमसूत्रितमित्यपुनरुक्तत्वम् ।

तस्मात्तदेवेति मते न कर्म भिन्नं कथञ्चित्प्रतिशाखमिष्टम् ।
न कारणं सप्तममस्ति चान्यद्‌तो यथोक्तैत्र तु भेदसिद्धिः ॥ ३३ ॥

**ननु प्रत्यक्षेणैकयूपविधिनातिदेशिकयूपैकादशिनी बाधात् निराश्रयो वेदिसम्मानविधिः । अत्रोच्यते—अतिदेशप्रापितस्य दुर्बलस्य प्रत्यक्षवेदिसमानविध्यङ्गीकृतत्वादेव नात्यन्तबाधो भवतीति । संस्थाव्यवस्थार्थमिति । दक्षिणारथन्तरविशिष्टोपहव्यविधानोपपादितो यस्तयोः परस्परनियमस्तत्प्रसिद्धये रथन्तरोपादानमेवं संस्था नियमार्थताऽपीति । शाखान्तरविहितेति । शाखान्तरे प्रयाजाः त एवान्यत्राप्याश्रिताः, तेनार्थे सम्प्रतिपत्तिः प्रतीयत इत्युपसंहरति—तस्मात्तदेवेति । मतेरिति । एवमाशङ्कितानां कारणानामभावाद् प्रतिपक्षाग्रास्तदेवेतिप्रत्यभिज्ञाया न प्रतिशाखं भिद्यत इति । सिद्धमनेन चावधृतभेदकारणाप्रतिपत्त्या भेदाभावनिर्णयेन न सप्तममपरं कारणमस्तीति प्रतिपादनाद् यथोक्तैव शब्दान्तरादिप्रमाणषट्कावधिर्भेदस्य सिद्धिर्न अपराध्यशङ्कनीया सम्पूर्णमभिहितं भेदलक्षणमिति ।**

**अजितातटमधिवसता तज्जलसेवाविधूतपापेन ।**
**इयमारचिता टीका तस्मादजितैव नाम्नास्तु ॥**

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने
तन्त्रवार्तिके द्वितीयाध्यायस्य चतुर्थश्चरणः समाप्तः ।

---

समाप्तश्च द्वितीयोऽध्यायः ।

---

इति श्रीमहामहोपाध्यायमिश्रपरितोषविरचिते
अजिताख्ये तन्त्रटीकानिबन्धे
द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥